# संस्कृतज्ञानेश्वरी

( समूला )

## प्रथमखण्डः



( अध्यायषट्कात्मकः )

अनुवादकः

पुण्यपत्तनस्थः संस्कृताध्यापकः

ओकोपाह्वः पाण्डुरङ्गसूनुर्महादेवशर्मा

---

शकाब्दाः १८५१ क्रिस्ताब्दाः १९२९

---

# श्रीज्ञानेश्वरार्पणमस्तु



तवैव वचसां वाग्मिन् गीर्वाणानां गिरा कृतः ।
यथामत्यनुवादोऽयं सादरं ते समर्प्यते ॥ १ ॥

# निवेदना



श्रीमता ज्ञानराजेन ग्रन्थराजो विनिर्मितः ।
यः श्रीमद्भगवद्गीताव्याख्याविषयकः पुरा ॥ १ ॥
महाराष्ट्रगिरो भूषाविशेषो यो विराजते ।
यस्य ज्ञानेश्वरीत्याख्या प्रख्याता पृथिवीतले ॥ २ ॥
सोऽयं निर्जरसां वाचा मया यत्नादनूद्यते ।
आराधनाय सर्वेषां गीताग्रन्थविमर्शिनाम् ॥ ३ ॥
ज्ञानेश्वरगिरामर्थं यथामति विवृण्वतः ।
सुप्रीतो यज्ञभुग्भूयाद् याग्यज्ञेन ममामुना ॥ ४ ॥

---

मूलग्रन्थस्य दुर्बोधस्थलानामर्थविवरणे श्रीमद्भिः श्रीज्ञानेश्वरभक्तैः 'केशवरावजी देशमुख' इति सुगृहीतनामधेयैर्विद्वद्वर्यैश्च 'प्रो. सोनोपंत दांडेकर, बाबूराव भिडे, बापूसाहेब चापेकर' प्रभृतिभिः सुहृत्प्रवरैर्यन्मेऽनल्पं साहाय्यं व्यराचि प्रस्तुतग्रन्थप्रकाशने च मुम्बापुरीस्थैर्दानशूरैः श्रेष्ठिवरेण्यैर्जीवनदास वल्लभदासशर्मभिर्यद्धनं व्यतारि तस्य कृते तत्तेभ्यो महाभागेभ्यः सुमहदृणं धारयामि यत्किल केनापि प्रत्युपकारेण निर्यातयितुं न शक्यते। यत्सत्यमेतेषां महाशयानां साहाय्याभावेऽशक्यप्रायमासीत् सुदुर्घटमिदं श्रीमज्ज्ञानेश्वर्या अनुवादकरणं मुद्रणद्वारा प्रकाशनं च। श्रीज्ञानेश्वरकृपया तु प्रथमां षडध्यायीं मुद्रितां वीक्षमाणस्य सुमहान्मे चेतसि समुन्मीलति प्रसादः। अन्यदपि खण्डद्वयं यथाकालं प्रकाशयिष्यन् श्रीज्ञानेश्वरप्रेरणापूर्वकं सकलसहृदयसुहृत्साहाय्यकं लप्सीयेति दृढमाशंसे।

## श्रीमज्जगद्गुरुश्रीशंकराचार्यपरम्परागतश्रीमत्करवीर—पीठाधीश्वरश्रीविद्याशंकरभारती ( डॉ. कुर्तकोटी ) स्वामिनामाशीर्वचनम् ।

### श्रीशंकरो विजयते

श्रीमद्भगद्गीतासूपनिषत्सु गौरवमावहतः कस्य हि सचेतसः किमपि किमपि प्रमोदस्थानमिदं न भवेद् यत्तासामनुदिनमधिकाधिकं प्रवर्धमाना यशोलता सफलता च प्रत्यक्षीक्रियत इति। येन तु निसर्गकुटिलेन कालेन तपस्वि श्रीमद्भारतं तदीयानि च भूयांसि भास्वन्ति रत्नानि कां कामप्यधोगतिं प्रापितानि सोऽपि खलु न प्रभवति क्षणपिहितानामपि तत्तेषां तेजस्विनां वस्तूनां नैसर्गिकस्य तेजसस्तिरोधाने सुरभिचन्दनसुगन्धनिवारण इवेत्येष साक्षात्कारो नाम प्रमोदे प्रमोदान्तरमेव ।

भारतमेतत् स्मृतिपथातीतादपि कालात्सर्वस्यापि जगतः कल्याणाय प्रायततेति ' धर्मो विश्वस्य जगतः प्रतिष्ठे ' त्यादिश्रुत्याऽवगच्छतार्यवंशीयेन कीदृशः प्रहर्षो नानुभूयते? । सुदूरे तावत्तिष्ठतु स कालस्ततः परमपि तैस्तैर्महर्षिभी राजर्षिभिश्च संभूय जगतोऽभ्युदयाय च निःश्रेयसाय च किमिव विहितमिति तद्यशःशाश्वतपताकायमानैः श्रीमद्रामायणमहाभारतादिभिर्ग्रन्थैः स्वयमेव प्रकीर्त्यते । ततोऽर्वाचीनेऽपि काले कियद्भिरपि महाराजैः पण्डितप्रकाण्डैश्च स्वपूर्वजैः क्षुण्णमेव पन्थानमनुसरद्भिः स्वरसत एव तदीयं यशोऽप्यन्वगम्यत । ततश्च तादृशी किल दशा भरतवर्षस्योपनता स्मरणमपि यस्या बलादिवोदञ्चयति रोमाञ्चमङ्गेषु पातयत्यश्रुधारां प्रयोजककर्तृत्वं चोपैत्युद्गारस्य ' हा कष्टम् ' इत्यस्य । यैरनन्यसदृशैरनधिगतः सर्वोऽप्यर्थः समधिगतो, न केवलं लौकिकः किन्तु पारमार्थिकोऽप्यानन्दः करतलामलकीकृतः सुखदुःखयोर्लक्षणं " सर्वं परवशं दुःखं

सर्वमात्मवशं सुखम् । एतद्विद्यात्समासेन लक्षणं सुखदुःखयो" रित्यवबुद्ध-मवबोधितं च, देव्यपि माया समुत्तीर्णा, तदुत्तरणमार्गोऽपि च सुस्पष्टतयो-पदिष्टस्तदार्यवंशीयन्नुवैरप्यस्माभिरवेदिभिस्तदीयाचारविचारमर्मणां पौरुष्या एव मायायाः परवशतया सांप्रतमेवंविधा दुरवस्थाऽविदितमेवानुभूयत इति महदेवेदमाश्चर्यस्थानम् । महत्तरं पुनस्तद् यदेतादृशपरकीयकपटजालेना-भिभूयमानेष्वप्यस्मासु वराकेषु पुण्यश्रवणकीर्तनानां तेषामस्मत्पूर्वजानां तास्ताः कृतयो नाद्याप्यात्मनः प्रभावं जहतीति । अत एव भारतं येन केन प्रका-रेण तिरस्कुर्वद्भिः पाश्चात्यैरिव सर्वथा तदनुकरणेनैवात्मानं धन्यं मन्यमानैः कैश्चिदार्यवंशीयैरपि भगवद्गीतोपनिषत्सदृशेषु तृणाय मन्यमानेषु कतिचित् सारासारविचारशालिनो जनास्तद्व्याख्यादिसेवया स्वयं कृतार्थयितुकामा घनान्धकारे दीप इवात्मानमाविष्कुर्वन्तः संदृश्यन्ते। एवंविधेषु गणनीयोऽय-मोकोपाह्वः कविभूषणः श्रीमन्महादेवशास्त्रिमहोदयो यदीयां नूतनकृतिं संस्कृतज्ञानेश्वरीमधिकृत्यायं लेखः प्रवृत्तः ।

सेयं संस्कृतज्ञानेश्वरीं नाम न कोऽपि स्वतन्त्रो ग्रन्थः किन्तु श्रीज्ञाने-श्वरविरचिताया महाराष्ट्रभाषामय्याः श्रीज्ञानेश्वरीत्येव सुविदितायाः श्रीमद्भ-गवद्गीताव्याख्यायाः संस्कृतभाषात्मकः पद्यमयोऽनुवादः । तथापि "आम्राश्च सिक्ताः पितरश्च तृप्ता । एका क्रिया द्व्यर्थकरी बभूव" इति न्यायेन गीतार्थसेवनं काव्यप्रणयनं चेति कार्यद्वयं युगपदेवैकेन कर्मणा साधितमिति नूनमर्हति शास्त्रिमहोदयो धन्यवादम् । एतेन हि महाभागेनाद्यावध्यध्याप-नेन विद्यार्थ्युपकारिनानाविधपुस्तकनिर्माणेन च दैव्या वाण्या या सेवा व्यधी-यत तस्याः फलमेवेदमुपनतमित्यभिव्यज्यते यद्दुर्बोधेति प्रायेण विदिता ज्ञानेश्वरी सरसतयैव परिवर्तिता ।

प्रथमतस्तु गीतार्थतात्पर्यनिर्धारणं नाम सुदुष्करं कर्म । यतः किलात्र ग्रन्थे तादृशः समन्वयात्मकः सार्वदिकः सनातनः सिद्धान्तः प्रतिपादितो

यो यथाकालं यथामति यथारुचि च बहुधा व्याख्यातुं शक्येत । तन्नैतदाश्चर्यं नाम यदत्र विषये परःसस्रहेभ्यो वत्सरेभ्यः प्रतिशतकं कतिचिदपि भाष्यव्याख्यादयो व्यरच्यन्त विरच्यन्ते विरचिष्यन्ते चेति । न केवलमेतावदेव, किं चैतद्विषयकप्राचीनार्वाचीनव्याख्यातृषु ये द्वित्राः सुगृहीतनामधेया महापुरुषास्तेऽपि परस्परं भिद्यमाना विवदमानाश्चापाततो लक्ष्यन्ते । सुनिपुणं विभावयता च तेषामापाततो दृश्यमानस्य परस्परविरोधस्य कारणमन्वेष्टुं शक्येत विरोधोऽपि परिहर्तुं क्षम्येत क्वापि च समन्विते तात्पर्ये सर्वेषामैकमत्यं विनिश्चेतुं पार्येत । यथा, प्राचीने श्रीशांकरभाष्ये "नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् । पश्यञ्शृण्वन्स्पृशञ् जिघ्रन्नुन्मिषन्निमिषन्नपि" इति भगवद्वाक्यमनुरुध्य "विदुषा क्रियमाणं कर्म परमार्थतोऽकर्मैव" इति शास्त्रदृष्ट्या यत्साधितं तदेवार्वाचीने गीतारहस्ये व्यावहारिक्या दृष्ट्या शब्दान्तरैः प्रतिपादितम् । भाष्ये शास्त्रानुसारेण ज्ञानकर्मसमुच्चयनिषेधस्तु यः साधितः स ज्ञानिना किमपि न क्रियत इति न, किन्तु ज्ञानिना क्रियमाणं कर्म परमार्थतः कर्म न भवतीति । अस्मिन् विषये गीतारहस्ये यो गिताभाष्यस्य विरोधः प्रतीयते तत्र कालान्तरमूलको दृष्टिभेद एव कारणमिति सुशकमिदमवगन्तुम् । दुष्प्रतिपाद्ये खल्वेवंविधे विषयेऽविरतं परिभ्रमति च कालचक्रे दृष्टिभेदस्तु कथमपि दुर्निवारः स्यादिति विदितचरमेवेदं विदितवेदितव्यानाम् ।

सत्यप्येवं तत्तत्कालसमुद्भूतैर्महाजनैर्निरभिमानसहकृतया लोकोद्दिधीर्षया भगवद्गीतार्थ आचरणेन व्याख्यानेन चाविष्कृतः । तेष्वेवान्यतमः कस्याप्यद्वैतभक्तिप्रधानसंप्रदायस्य प्रवर्तकः सत्पुरुषचूडामणिः श्रीज्ञानेश्वरमहाराजो यः पञ्चषशतसंवत्सरेभ्यः प्राङ् महाराष्ट्रे समुत्पन्नो यदीयं हि नामाद्यापि लक्षावधिकैर्भागवतधर्मावलम्बिभिः सांप्रदायिकैः प्रत्यहं सभक्त्युद्रेकमुद्घुष्यते । श्रीज्ञानेश्वरमहाराजेनापि श्रीमच्छंकराचार्यभगवत्पादपुरस्कृतमद्वैतमेव

स्वीकृतमनुकृतं चेति स्वकण्ठत एव ज्ञानेश्वर्यामभिहितम् । श्रीमद्भगवान् खलु यांश्चतुर्विधान् योगाञ्जगौ तत्र भक्तियोगो ज्ञानेश्वर्यां विशिष्य प्रत्यपाद्यत।

सेयं ज्ञानेश्वरी तत्कालतद्देशव्यवहृतमहाराष्ट्रभाषामयच्छन्दोनिबद्धा विराजते । यद्यप्येवमापमरपण्डितान्तसर्वजनसुगमतापादनार्थमेव ज्ञानेश्वर्याः समुद्भवस्तथापीदानींतनेष्ववगण्येषु महाराष्ट्रीयेष्वपि तद्वाचकेषु कतिचिदेव प्रभवन्ति तां श्रुतिमिवाधुनिकाः संस्कृतभाषानिपठितिनो यथार्थतः परिज्ञातुमित्यहो प्रभावः कालस्य । यदि महाराष्ट्रीयाणामेवेदृशी दशा केव कथा पुनरनभ्यस्तमहाराष्ट्रभाषाकाणां जनानाम् ? ।

अत एव कैश्चित्तज्ज्ञैः कृतोऽपि ज्ञानेश्वर्या गद्यात्मक आधुनिकमहाराष्ट्रभाषानुवादो न तथा वङ्गगुर्जरादिप्रान्तान्तरवासिनामुपयोगाय भवेद्यथा तस्याः सरलसंस्कृतभाषानुवाद इति विचिन्त्य श्रीमता महादेवशास्त्रिमहोदयेनेयं संस्कृतज्ञानेश्वरी व्यरचि । ये तु केचिदिमां दैवीं वाणीममृतायमानामपि मृतां मन्यन्ते ते किमपि जानन्तु नाम । यावत्खल्वासेतुहिमाचलान्तं सर्वत्रापि भारते वैदिकैः श्रुतिः कण्ठे क्रियते सुमधुरं श्राव्यते च, श्रीमद्रामायणमहाभारतादिश्लोकाः प्रथमतः पठ्यन्ते ततश्च तत्तद्भाषयानूद्यन्ते, भगवती सन्ध्या सर्वाण्यप्यन्यान्याह्निकानि कर्माणि संस्कृतभाषयैवानुष्ठीयन्ते, विवाहसदृशमहोत्सवे वधूवरयोर्बन्धनं धर्मे चार्थे च कामे च नातिचरामीति संस्कृतभाषयैव विधीयते, तत्तत्प्रान्तवर्तिभिः पण्डितैः संस्कृतभाषयैव परस्परं व्यवह्रियते, न केवलमेतावदेव । किंचाङ्ग्लपाठशालाविद्यालयेषु विद्यार्थिभिर्यत्किमपि संस्कृतमधीयते, तावत्कथमिवेयं गैर्वाणी मृता स्यात् ? । न केवलमेषा न मृता मृतप्रायमप्यमृतीकुर्वाणा विद्योतत इत्यनुभवसाक्षिकमेवेदं विपश्चिताम् । तत्कस्य नामेदृश्याः संस्कृतभाषायाः समुन्नतिं कामयमानस्य सचेतसश्चेतो न भवेन्नितान्तं प्रह्लन्नं समवलोक्यानया भाषया विलिखितं यं कमपि नव्यं प्रबन्धम् ? ।

यद्यपि संस्कृतज्ञानेश्वरी न साकल्येनास्माभिर्विलोकिता तथापि तस्या यावान् भागो दृष्टिपथमापतितस्तावता स्थालीपुलाकन्यायेन विनिःशंकं शक्यतेऽस्माभिरनुमातुमस्याः सरलत्वं सरसत्वं सालंकारत्वं सार्थक्यं च यौगपद्येन । अत्र हि मूलस्यार्थो न मनागपि व्यतीतः । कुत्रचित्पुनः स एवाधिकस्पष्टतया निरूपितः । मूलगतानि संस्कृतपदानि तथैवापरिवर्त्यानुवादे प्रयुक्तानि । महाराष्ट्रभाषात्मकानामपि शब्दानां परिवर्तनं तथा कुशलतया कृतं यथा किं नु मूलं क इव चानुवाद इति न शक्यते सहसा विज्ञातुम् । श्रीज्ञानेश्वरमहाराजेनार्थस्य स्पष्टीकरणाय ये दृष्टान्ताः प्रायेण योगवासिष्ठादुध्दृतास्तेऽपि तथैवोपन्यस्ताः । यया भाषया भगवता गीतं तयैव गैवाण्यां ज्ञानेश्वर्या अनुवादोऽयमकारीति विशेषतो वयं संतुष्यामः ।

एवं च सर्वथैव सौष्ठवमावहन्ती सेयं संस्कृतज्ञानेश्वरी नूनं विश्वसिमः सर्वत्रापि भारते ततोऽन्यत्रापि च प्रभूतं प्रसारं गमिष्यतीति । एतदर्थे च यो धर्मस्य प्रभुस्तमेवाच्युतं श्रीमन्नारायणं साञ्जलिबन्धमभ्यर्थयामहे । १८९१ शाकचैत्रकृष्णनवम्याम् ।

---



# संस्कृतज्ञानेश्वरीप्रशस्तिः

## श्रीशिवः शरणम्

अयि प्रेष्ठा निगमागममकरन्दतुन्दिलमतयः संसारसारसर्वस्वग्राहिणः पाण्डित्यप्रकर्षसमावर्जितसर्वजनहृदयाः सहृदयाः। नाविदितमिदं श्रीमतां यज्जन्तुमात्रस्यापामरमापण्डितं मनुष्यादेः सरीसृपकाकादिपर्यन्तं तिरश्चोऽपि प्रवृत्तिर्दुःखजिहासासुखपरीप्सानिमित्तेति। तत्र मनुष्याधिकारत्वाच्छास्त्रस्येति न्यायेन मनुष्यार्थे प्रवर्तमानानां वेदादीनामयं राध्दान्तो यद् दुःखासंभिन्नसुखप्राप्तावात्मज्ञानमेव परं साधनमिति। यतो वेदसिद्धान्तभूतानां वेदान्तानामयं डिण्डिमः। प्रथमं स्ववर्णाश्रमविहितकर्मानुष्ठानेन चित्तशुद्धिस्ततः उपासनया चित्तैकाग्र्यमथ च तस्यैव चेतसः परमात्मप्रवणतयात्मज्ञानम्। तेनैव परमानन्दलाभस्ततः परं न संसारभयस्यावकाशः 'ब्रह्मविद् ब्रह्मैव भवति। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'तिश्रुतिशतध्वनिस्वरूपः। अयमेव वेदान्तराद्धान्तः कालभेदेनोत्पन्नानां तत्तेषामधिकारिणां भिन्नपचमतीनां हृदये तत्तत्कालीनैर्निबन्धैर्विविधसरण्या संस्थामापादितः। तथा चोपनिषद्गतोऽर्थो भगवद्गीताद्वारार्जुनं निमित्तीकृत्य श्रीकृष्णमुखेन प्रत्यपादि विष्णोरंशावतारेण व्यासेन। तमेवं बहुविधव्याख्याविपरीतमर्थं पुनर्भगवान् सर्वविद्येशानः श्रीशंकरः श्रीशंकराचार्यभगवत्पूज्यपादस्याद्वैतकमलमार्तण्डस्य रूपमास्थाय लोकान् यथावद् ग्राहयामास भगवद्गीताभाष्याभिधप्रबन्धेन विद्वज्जनशिरोमान्येन। सोऽपि भगवत्पूज्यपादाचार्यभाष्यरूपो निबन्धः श्रीआनन्दयतिप्रभृतिभिः साटोपं सुव्याख्यातोऽपि गीर्वाणवाणीपरिचयाभावाद्विविधदुरितप्रतिबन्धाच्च नाटीकत तदानींतनजनमनःपदवीम्। किं च नास्ति प्रसरः सर्वेषां चातुर्वर्णिकानामुपनिषत्सु। एतदालोच्य सर्वजनान् समुद्दिधीर्षुभिः करुणावरुणालयैर्ज्ञानेशैः सत्पुरुषधूर्वहैः 'ज्ञानेशो भगवान् विष्णुः' इत्यभियुक्तोक्त्या विष्णोरंशावतारभूतैर्व्यासस्य विष्णवंशत्वात् स्वीय एव भगवद्गीताग्रन्थः श्रीशंकराचार्यसमादृताद्वैतसिद्धान्तसरण्या व्याख्यायि प्रत्यज्ञायि चैतत् स्वोक्त्या–'व्यासाचा मागोवा घेत। भाष्यकारासि वाट पुसत'–इति। अयं च

Sai 70-654

ज्ञानेश्वरीति लोकप्रथितो भावार्थदीपिकाभिधोऽन्वर्थनामा निबन्धः शाकीये द्वादशशतके नेवासेग्रामस्य पञ्चक्रोश्यां श्रीमोहिनीराजस्य भगवतः परिसर-प्रदेशे महाराष्ट्रीयवाण्या षोडशवर्षदेशीयैः श्रीज्ञानेशैर्निबद्धः । अयि विचार-चातुरीचतुराः । अपि नाम नेदमेकमेव षोडशवर्षदेशीयानां वेदान्तनिबन्ध-निबन्धनं नामकरणं पर्याप्तं श्रीज्ञानेशानां भगवदवतारत्वे । किं च श्रीशंक-रावतारभूतानां निवृत्तिनाथानां शिष्यत्वमात्मनि बोधयद्भिर्ज्ञानेशैः स्वीय-निबन्धस्य शंकराचार्यभाष्यानुयायित्वं शिष्यस्य गुरुपूर्वकत्वात् कारणस्य च कार्यपूर्वकत्वाज्ज्ञानं निवृत्तिपूर्वकमेव भवतीति प्रादुर्भावितं सहृदयानां हृदये । सेयं भावार्थदीपिका ज्ञानेशैरपरिचितगीर्वाणवाणीकानामनाघ्रात-शास्त्रगन्धानां महाराष्ट्रजनानां समुद्दिधीर्षया व्यरचीत्यनुपदमेवावादि । अत्र च प्राकृतजनमनःसमुद्बोधाय परःशतं दृष्टान्तानां हृदयंगमानां समादरणं ततश्च दुरूहस्यार्थस्य वेदान्तराद्धान्तभूतस्यालं विज्ञानाय । अयि श्रेष्ठा ऐति-हासिकविज्ञानिनः । तदानींतनमहाराष्ट्रभाषाशब्दार्थादिस्वरूपं संस्कृतदुहितुः प्राकृतभाषापरनाम्न्या बालभाषायाः किंचिदिव संवादभूतमासीत् । ततोऽ-धुना व्यतीते संवत्सरषट्शतात्मके काले महाराष्ट्रीयैरपि न विज्ञायते सोऽर्थः । केवलं सांप्रदायिकैरयमेवार्थोऽस्य ज्ञानेश्वरीग्रन्थस्यास्मत्परंपरासमायात इति जोघुष्यते सर्वैस्तदनुयायिभिः स एवोररीक्रियते च । इदमेव च श्रेयः । यतोऽर्थविषये ग्रन्थानां न केवलं शास्त्रपाण्डित्यं प्रयोजकं किंतु संप्रदायपूर्वकं तत् । तथा चोक्तं श्रीभगवत्पूज्यपादैः श्रीशंकराचार्यैर्भगवद्गीताभाष्ये । 'असंप्रदायवित् सर्वशास्त्रविदपि मूर्खवदु-पेक्ष्यः' इति । अद्यत्वे द्वित्राः संप्रदायपरम्परा ज्ञानेश्वरीग्रन्थार्थस्य प्रचलन्ति महाराष्ट्रेषु । तेषामेवानुकरणं कर्तव्यपथमवतरति । अनया मीमांसया ज्ञातचरमेव स्यात्सुधीभिर्यत्संप्रदायो विरलप्रचारः संपन्न इति । ततश्च स संप्रदायो यावन्न दृष्टिपथमतीयात्तावत् कर्तव्यमेवैतत्सुधियां विशेषतो महाराष्ट्रीयाणां यदनुवादो नाम ज्ञानेश्वरीग्रन्थस्य । सोऽयमनुवादो महाराष्ट्रभाषयाद्यतनरूपया यदि क्रियेत तर्हि सैव गतिः । यतः प्रतिशतकं भिद्यत एव भाषायाः स्वरूपम् । ततश्च सोऽयमनुवादः कैश्चिच्छतकैर्दुरूहः संपद्येत यथाद्यतने समये भावार्थदीपिकाया ज्ञानेश्वर्याः स्वरूपम् । ततश्च सनातनस्य वेदान्तस्यार्थो बहुकालस्थायी यदि कर्तुमिष्येत तर्हि एक

एवासाधारणः पन्था यज्ज्ञानेश्वरीग्रन्थस्य देववाण्यानुवादो नाम । अयि विद्वांसः । ज्ञानेश्वरादीनां साधुवराणामासीद् गैर्वाण्यां निरतिशयः स्नेह इति तु तत्कृतित एव प्रतीयते यतः श्रीज्ञानेश्वरैरमृतानुभवनामके स्वग्रन्थे पञ्च श्लोका गीर्वाणवाण्या निबद्धाः । तथैव मुकुन्दराजेन प्राचीनेनैव महाराष्ट्रग्रन्थनिर्माणकुशलेन साधुवरेण्येन 'महाभाष्यम्' इति नाम्ना प्रथितः सुविचारपरिप्लुतो युक्तियुक्तो महानिबन्धो गैर्वाण्या व्यरचि । यश्च मुद्रित इतिहाससमण्डलेन । एवं च महाराष्ट्रीयजनताप्रेमग्रहग्रहिलैरपि ज्ञानेश्वरादिभिः साधुभिरनुमतत्वात् तत्र तत्र तैः स्वग्रन्थेषु संस्तुतत्वाद् गैर्वाण्यैवानुवादः कर्तव्यः । गैर्वाणवाणीशब्दार्थसंप्रदायस्तु न भङ्गुरः कदापीति सर्वविद्वत्सुगृहीतम् । गैर्वाणवाणीमयेनानुवादेन न केवलं महाराष्ट्रीयाणां लाभः । अपि तु सर्वेषामपि तद्भाषाविदां जगतीतलवासिनाम् । यतश्चोक्तम्—

देशभाषा तु भूषावदेकदेशविभूषणी ।
गीर्वाणभाषा वासोवत्सर्वदेशविभूषणी ॥ १ ॥ इति ।

सोऽयमनुवादो गीर्वाणवाणीमयो न सुकरो येन केनापि कुकविना 'हठादाकृष्टानां कतिपयपदानां रचयित्रा'। तत्रापेक्ष्यते प्रभुत्वं ज्ञानेश्वरीसमकालीनमहाराष्ट्रभाषायां गैर्वाणवाण्यां च । ततश्च कविताचातुर्यं प्रसादप्रसादितहृदयत्वं निरपेक्षपरोपकारशीलत्वं च । ते चैते सर्वे गुणा मन्निवासस्थानभूताया अलका ( आळंदी ) पुर्या अनतिदूरे पुण्यपत्तने निवसति भूदेवे संभवन्तीति समालोच्य महादेवभक्ते महादेवनाम्नि विदुषि श्रीज्ञानेशेन सद्बुद्धिरूपेण प्रादुर्भूय प्रादुर्भावितः सोऽयं निबन्धो यश्चाधुना विदुषां करकञ्जमञ्चति । अयि श्रेष्ठाः । विद्यार्थिनां साधारणजनानामुपदेशाय सहृदयानां च मनोविनोदनाय कति कति वा न निबद्धा ग्रन्था एभिर्विद्वद्भिः। यांश्च समालोच्यार्थशः कैर्नानामि शिरः सरससरलहृदयैः । परं चैतस्य ग्रन्थस्यान्यादृश्येव निबन्धनचातुरी यदयमनुवादः क्वचित् क्वचिन्मूलमप्यतिशेते प्रसादगाम्भीर्येण । तथा दुर्गमो भगवद्गीतार्थो मितंपचमतीनां चेतसि सारल्येन पदं करोति । अत्रार्थे बहून्युदाहरणानि प्रदर्शयितुं सुशकानि तथापि विस्तरभिया द्वित्राण्येवोदाह्रियन्ते ।

मूलम्—( द्वितीयोऽध्यायः भ. गी. श्लोक ४६ ).

जरी वेदें वहुत बोलिलें । विविध भेद सूचिले ।
तऱ्ही आपण हित आपुलें । तेंचि घेंपे ॥ २६० ॥
जैसा प्रगटलिया गभस्ती । अशेषही मार्ग दिसती ।
तरी तेतुलेही काय चालिजती । सांगें मज ॥ २६१ ॥
कां उदकमय सकळ । जऱ्ही जाहलें असे महीतळ ।
तऱ्ही आपण घेंपे केवळ । आर्तीच जोगें ॥ २६२ ॥
तैसे ज्ञानी जे होती । ते वेदार्थातें विवरिती ।
मग अपोक्षित तें स्वीकारिती । शाश्वत जें ॥ २६३ ॥

अस्यानुवादः—

वेदेनोक्तं भूय एवास्तु कामं ते ते भेदाः सूचिताः सन्तु नाम ।
श्रेयोऽस्माकं तत्र यन्निश्चयेन तद्ग्राह्यं नः सर्वमन्यद्विहाय ॥२६०॥
आविर्भूते चण्डभानौ निशान्ते ते ते मार्गा दृक्पथे नः पतन्ति ।
आक्रम्यन्ते किं न्वमी सर्व एव चक्ष्वैतन्मे पार्थ तावत्त्वमेव॥२६१॥
जाता सर्वाप्यम्मयी मेदिनी चेदद्भिः कार्यं तावतीभिर्नु किं नः ।
तृष्णाशान्त्यै गृह्यते तावदम्भः पातुं यावज्जायते नोऽभिलाषः॥२६२॥
एवं ये स्युर्ज्ञानवन्तोऽत्र केचित्ते वेदार्थं सम्यगादौ विचार्य ।
पश्चादङ्गीकुर्वते ब्रह्म नित्यमेतेषां यद्वाञ्छितं केवलं स्यात् ॥ २६३ ॥

मूलम्—( पृष्ठ २१० ओवी ११६ )

ना तरी भौमा नाम मंगळु । रोहिणीतें म्हणती जळु ।
तैसा सुखप्रवादु वरळु । विषयिकु हा ॥ ११६ ॥

अस्यानुवादः—

भौमो यथा मङ्गलनामधारी
जलाभिधाना मृगतृष्णिका वा ।
तथा सुखाख्या विषयानुभूतिः
पुष्णाति लोके विपरीतमर्थम् ॥ ११६ ॥

मूलम् ( पृष्ठ १६९–१०३ )

जया पुरुषाच्या ठायीं । कर्माचा तरी खेदु नाहीं ।
परी फलापेक्षा कहीं । संचरेना ॥ १०३ ॥...तो
परब्रह्मचि मनुष्यवेखें । वोळख तूं ॥ १०५ ॥

अस्यानुवादः—

य:पूरुषः कर्म चरन्न खिद्यते ।
न यस्य चित्ते कुरुते मनागपि ॥
पदं फलेहा चरितेऽपि कर्मणि ।
ब्रह्मैव तं विद्धि परं नराकृति ॥

केवलं विषयप्रवेशार्थं द्वित्राणि स्थलानि प्रदर्शितानि । सर्वोऽपि ग्रन्थः सहृदयहृदयंगम इति स्वयं सुधीभिः प्रतीयेत। वेदान्तार्थो गंभीरोऽपि कल्याणकारी, तत्सारभूतं गीतामृतम्, तदर्थः श्रीशंकराचार्यबोधितः । तस्य च पुनर्बालभाषया शतशो दृष्टान्तैर्ज्ञानेश्वर्या विवरणम् । तस्य च गैर्वाण्या वाण्या सहजसरलयानुवादः । सर्वं चैतदुत्तरोत्तरं प्रमोदास्पदम् ।

सुदिनं मन्ये यद्भारतीयैरन्यखण्डीयैश्च ज्ञानेश्वरीमकरन्दः पेपीयेत तैस्तैः सुधीभिः । यश्चैतावता कालेन पुरातनमहाराष्ट्रीपात्रदृढतरपिहित आसीत् । प्रथमं वेदो नारायणः पश्चाद् भारतकृद् व्यासो नारायणस्ततः श्रीशंकराचार्यरूपो हि श्रीशंकरस्ततः परं विष्णुरूपो ज्ञानेशस्तदग्रे महादेवभक्तो महादेव उपास्योपासकयोरभेदान्महादेवो भूदेव इतीयं शिवविष्णुपरंपरा वेदान्तार्थप्रतिपादिनी जागर्ति निबन्धरूपेणाधिकारिजननिःश्रेयसायेति निर्मायं मन्यमानोऽहं नाल्पेनाप्यंशेनात्मानमत्युक्तिभाजं करोमि । अथ च ज्ञानविलासेन विलसन् भगवान् सच्चिदानन्दरूपी पार्वतीजानिः श्रीशंकरो नित्यमेव जगत्कल्याणं विदधातीति बुद्धिरुदेतु जनानामिति तमेव श्रीशंकरं सप्रणामं संप्रार्थयन् जोषंभावं समाश्रयति

विद्वद्वशंवदः
पाठकोपनामा श्रीधरशर्मा

# प्रस्तावना

॥ श्रीः ॥

श्रीमद्भगवद्गीताशांकरभाष्यगूढार्थप्रतिपादनं दृष्टान्तेन तद्विशदीकरणं प्रेक्षावतां मनोवृत्तावनायासेनार्थावरोहसमर्था वर्णनचातुरी चेत्येवमादयोऽनेके गुणा ज्ञानेश्वर्यां दरीदृश्यन्ते । महाराष्ट्रभाषायां निबद्धापि चेयं ज्ञानेश्वरीदानींतनैर्महाराष्ट्रभाषाभिज्ञैरपि दुर्बोधा समालक्ष्यते । यथा संस्कृतभाषामय्यपि श्रुतिवाक्संस्कृतभाषाभिज्ञैरपीदानींतनैर्दुर्बोधा दृश्यते तद्वत् । भाषा हि भूयसा कालेन रूपान्तरमिवाधत्ते । यदा यदा हि ग्रन्थकर्तारो यया भाषया ग्रन्थान्निबध्नन्ति तदा तदा तद्भाषाभिज्ञैस्तादात्विकैस्ते ग्रन्थाः सुबोधा एव भवन्ति । प्रेक्षावतां बोधसौकर्यायैव हि ग्रन्थकर्तॄणां ग्रन्थविरचनकर्मणि प्रवृत्तिः । ग्रन्थप्रणयनोत्तरं च बहुतिथे गते काले स्वीकृते च भाषया रूपान्तरे संप्राप्ततादृशरूपान्तरया भाषया परिचितान्तरात्मनां जनानां तद्भाषया निबद्धा अपि त एव ग्रन्था भाषान्तरीया इव दुर्बोधा भवन्ति । अतस्तदानीं प्रेक्षावतां जिज्ञासूनां जनानामर्थावबोधसौकर्यायावश्यं वक्तृतात्पर्यावधारणकुशलमतिभिरवगतमूलग्रन्थतत्त्वार्थैः सूक्ष्मदर्शिभिर्विचक्षणैः कश्चिद्यत्न आस्थेयो भवति । यत्नश्च तादृशानां पण्डितानामनेकविधः समालक्ष्यते । 'भिन्नरुचिर्हि लोकः' इति न्यायेन यथा यस्याभिरुचिस्तथा स तत्र प्रवर्तते । केचिन्मूलग्रन्थार्थावबोधाय टीकां विरचयन्ति । अपरे च तदर्थमेव भाषान्तरं प्रकुर्वते । अन्ये च मूलग्रन्थार्थं साररूपेण संगृह्णन्ति । ऊहापोहकुशलाश्च केचिन्मूलग्रन्थार्थावद्योतकं स्वतन्त्रमेव विस्तृतं ग्रन्थं निर्मिमते । केचिच्च मूलग्रन्थं टिप्पणीमात्रेण संयोजयन्ति । यद्यपि मूलग्रन्थार्थावबोधसौकर्यमेकमेव मुख्यं प्रयोजनमविशेषेण सर्वैरेतैर्मनस्यनुसंहितं तथापि सुखेनार्थावबोधप्रतिबन्धकानां मूलग्रन्थदुर्बोधताकारणानामनेकत्वाद्यत्र यत्कारणं प्राधान्येन पुरतः परिस्फुरति तत्र तादृशकारणविशेषापसारणं मुख्यत्वेन यथा भवेत्तथा तत्र यत्नविशेष आस्थेयो भवति । यत्र मूलग्रन्थे सामासिकपदविग्रहेऽन्वये भावार्थे च संशयो दुर्बोधता वा संदृश्यते तत्र प्रेक्षावतां निश्चितार्थावबोधसौलभ्याय विपश्चितां टीकाविरचने प्रवृत्तिः । तत्र टीकाकाराः प्रायो मूलग्रन्थकृदङ्गीकृतभाषयैव टीकां विरचयन्ति । यथा रघुवंशादौ

मल्लिनाथादीनां प्रवृत्तिः । अन्यभाषया तु क्वचिदेव संभवः । यत्र च मूलग्रन्थकृदङ्गीकृतभाषानभिज्ञानामपि जनानां मूलग्रन्थार्थावबोधो भवत्वितीच्छा विपश्चितां संजायते तत्र ते भाषान्तरविरचने प्रवर्तन्ते । भाषान्तरकाराणां च प्राय ईदृशी प्रवृत्तिरालक्ष्यते यद्गद्यात्मकस्य मूलग्रन्थस्य गद्यमयं भाषान्तरं पद्यात्मकस्य च पद्यमयम् । एतद्विपरीत्येन प्रवृत्तिस्तु क्वचिदेव दृश्यते । प्रेक्षावन्तश्च मूलग्रन्थार्थमक्षरशः सद्य एवावगच्छेयुरिति येषां मतिस्ते प्रेक्षावतामवस्थाविशेषमास्थाय तदनुसारेण टीकाप्रणयने भाषान्तरकरणे वा यथारुचि प्रवर्तन्ते । मूलग्रन्थस्य पदानां दुर्बोधत्वे मूलग्रन्थकृदङ्गीकृतभाषाभिज्ञानामपि जनानां भाषान्तरादुपयोगो भवति । यत्र च मूलग्रन्थे तत्र तत्रावान्तरविषया विस्तरेण वर्णितास्तत्र साधारणप्रज्ञानां जनानामवान्तरविषये तत्र तत्र संलग्ना चेतोवृत्तिस्तेषां विषयाणां मिथःसंगतिपूर्वकं प्रबन्धार्थमाकलयितुं न प्रभवति । तथा च मूलग्रन्थस्य विस्तृतत्वे विस्तरेणैव च साधारणप्रज्ञानां तत्राप्रवृत्तिः स्यादतस्तामनुसंधाय साधारणप्रज्ञांस्ताननुग्रहीतुं केचिद्विपश्चितस्तादृशमूलग्रन्थतात्पर्यार्थं साररूपेण संग्रहीतुं प्रवर्तन्ते । यथा श्रीमच्छंकराचार्यप्रणीतस्य ब्रह्मसूत्रशाङ्करभाष्यस्य तत्रत्यगूढार्थसंग्रहरूपः संक्षेपशारीरकाख्यो ग्रन्थः पद्यमयः सर्वज्ञात्ममहामुनिभिर्विनिर्मितः । संग्रहं च प्रायः पद्येनैव ग्रथ्नन्ति विपश्चितः । यतः पद्यं धारणात्मिकायां बुद्धौ शीघ्रं प्रवेशमर्हति । गद्यमयोपि संग्रहः क्वचिद्दृश्यते । ये च कार्याकार्यविचक्षणा ऊहापोहकुशला मूलग्रन्थात्स्वयमवगततत्त्वास्तीक्ष्णमतयो विपश्चितो मूलग्रन्थप्रतिपादितान्सिद्धान्ताननुकूलप्रतिकूलैः साधकबाधकप्रमाणान्तरैर्दृढीकर्तुं प्रभवन्ति मूलग्रन्थसंसूचितांश्च सिद्धान्तान्मूलग्रन्थकृद्हृदिस्थानाकलय्य सप्रमाणं प्रतिपादयितुं प्रभवन्ति तादृशाः परान्प्रति मूलग्रन्थकृदभिप्रेतार्थप्रज्ञापिपयिषया महानिबन्धविरचने प्रवर्तन्ते । तत्रापि द्वयी विधा । केचिच्च तादृशा निबन्धकारा मूलग्रन्थस्य टीकारूपेण निबन्धग्रन्थं प्रणयन्ति । अत्र च प्रायः सर्वे भाष्यकारा निदर्शनम् । केचिच्च तथाविधा मूलग्रन्थार्थावद्योतकं स्वतन्त्रं सुलभं विस्तृतं च ग्रन्थं तथा प्रणेतुं कामयन्ते यथा तस्मात्स्वतन्त्रग्रन्थात्साधारणप्रज्ञा अपि जना अनायासेनैव मूलग्रन्थतात्पर्यार्थमवगच्छेयुः । व्याकरणशास्त्रे शब्दकौस्तुभाभिधग्रन्थनिर्मातारः श्रीमद्भट्टोजीदीक्षिता अत्र निदर्शनम् । ते हि

महाभाष्यप्रतिपादितसिद्धान्तार्थप्रज्ञापनाय प्रवृत्ताः शब्दकौस्तुभनामानं स्वतन्त्रं ग्रन्थं प्राणिन्युः। ' परिभाव्य बहून्ग्रन्थान्योऽर्थः क्लेशेन लभ्यते । तमशेषमनायासादितो गृह्णीत सज्जनाः ' इति तत्रारम्भ एव तेषां प्रतिज्ञा । तादृशप्रतिज्ञानुसारेण च शब्दकौस्तुभग्रन्थाध्येतारो भाष्यादिमूलग्रन्थाभिमतान्सिद्धान्ताञ्जानन्त्येव । यद्यपि तादृशस्थले मूलग्रन्थादक्षरशस्तमर्थमधिगन्तुं सद्यः सर्वत्र न प्रभवन्ति तथापि न तावता स्वतन्त्रग्रन्थनिर्मातॄणां लेशतोऽपि न्यूनतामवधारये । यतः साकल्येन तादृशस्वतन्त्रग्रन्थाध्येतॄणां चेतसि संस्कारातिशयाधानद्वारा तादृशी शक्तिरुदेति यद्वशात्ते तं मूलग्रन्थं समग्रमेवाक्षरशश्चावबोद्धुं समर्था भवन्ति । नैतावदेव किल किं तु तं मूलग्रन्थं समग्रमक्षरशः परानध्यापयितुमपि पर्याप्ता भवन्ति । साहित्ये काव्यप्रदीपप्रणेतारो गोविन्दठक्कुरा अप्यत्र निदर्शनम् । एतादृशी स्वतन्त्रग्रन्थप्रणयने प्रवृत्तिश्च मूलग्रन्थकृदङ्गीकृतभाषापेक्षयाऽन्ययापि भाषया दृश्यते । यथेयं प्रकृता ज्ञानेश्वरी । ज्ञानेश्वरी च श्रीमद्भगवद्गीतायास्तत्रत्यशांकरभाष्यस्य वा न भाषान्तररूपतामाधत्ते । तदेव हि भाषान्तरं भवति यस्मिन्नवलोकिते सद्य एव मूलग्रन्थार्थः पदशोऽवगम्यते । नापीयं ज्ञानेश्वरी श्रीमद्भगवद्गीतायास्तद्भाष्यस्य वा टीकारूपेण प्रणीता । यतोऽत्र न कस्यापि तत्रत्यपदस्यामुकोर्थ इत्युच्यते न वास्यात्रान्वय इति नाप्यस्यायं भाव इति न चैव प्रतीकश उल्लेखः क्वापि दृश्यते । नापि चेयं ज्ञानेश्वरी श्रीमद्भगवद्गीतायां तद्भाष्ये चोक्तार्थस्य संग्रहरूपा । न हि संक्षेपेणार्थप्रतिपादने ज्ञानेश्वराणां प्रवृत्तिः संदृश्यते । ' विस्तरेणोपदिष्टानामर्थानां तत्त्वसिद्धये । समासेनाभिधानं यत्संग्रहं तं विदुर्बुधा ' इति संग्रहस्वरूपमभियुक्ता वदन्ति । ज्ञानेश्वरीयं श्रीमद्भगवद्गीताया भाष्यस्य टिप्पणीरूपा नेति तु स्पष्टमेव । अतः श्रीमद्भगवद्गीतायां तत्रत्यशांकरभाष्ये च स्पष्टतया प्रतिपादितानां संसूचितानां च सिद्धान्तानां प्रतिपादनाय दृष्टान्तेन तद्विशदीकरणायोपपत्तिप्रदर्शनेन तद्दृढीकरणाय चायं ज्ञानेश्वरीसंज्ञकः स्वतन्त्र एव विस्तृतः सुलभश्च ग्रन्थो निरमायि । महाराष्ट्रभाषाभिज्ञानां जनानामनुग्रहाय च महाराष्ट्रभाषया निबद्ध इति मन्ये । ज्ञानेश्वरीग्रन्थश्चायामितः संवत्सराणां पञ्चशत्याः पूर्वं समभूत् । इयता कालेन च तत्रत्या बहवः शब्दा महाराष्ट्रभाषाभिज्ञानामपि दुर्बोधा अभूवन् । सांप्रतं च ज्ञानेश्वरीग्रन्थतात्पर्यं

याथात्म्येनावगच्छन्तो मर्मज्ञाः प्रवक्तारोऽस्मिन्महाराष्ट्रदेशे कतिपये वर्तन्त इति महत्प्रमोदावहमेव । तथापि न तादृशाः सर्वत्र सर्वेषां सुलभा इत्यतो ज्ञाने-श्वरीग्रन्थार्थावबोधसौकर्यायावश्यं कश्चिद्यत्नविशेष आस्थेयो भवति येन ज्ञाने-श्वरीरसास्वादनसौख्यं भूयसां जनानामनुभवपदवीमारोहेत् । यत्नश्च टीकारूपोऽत्र नोपयुज्यते । ज्ञानेश्वर्यां हि केषांचिच्छब्दानामर्थो दुर्बोध इत्येव । न तु क्वाप्यन्वयस्य दुर्बोधत्वम् । नाप्यत्र सामासिकपदेषु विग्रहविशेषप्रदर्शनस्याव-श्यकता । यतस्तादृशि सामासिकपदान्यत्र प्रायो नैव दृश्यन्ते । वाक्यार्थज्ञानं च सर्वत्र सुलभमेव । पद्यानि चोत्तानार्थान्येव संदृश्यन्ते । अतश्च ज्ञानेश्वर्या-ष्टीकां चिकीर्षता किं कृतं स्यात् । शब्दार्थेष्ववबुद्धेष्वन्वयबोधस्य वाक्यार्थवग-तेस्तात्पर्यार्थावबोधस्य मूलमात्रेणैव सुसाधत्वात् । यमकानुप्रासादिकशब्दालं-कारलुब्धः कविरेकाक्षर्यादिकोशावगम्यमानार्थान् शब्दान्संयोज्य यत्र स्वेष्टं साधयति तत्र पदच्छेदज्ञानायापि टीकोपयुक्ता भवति । ईदृशश्चोपयोगो महाराष्ट्र-भाषायां वामनमोरोपंतादिकविविशेषप्रणीतेषु क्वचित्संभवति नान्यत्र ।

नतरां ज्ञानेश्वर्यादिसदृशेषु ग्रन्थविशेषेषु । ज्ञानेश्वर्यां तु केषांचिच्छब्दानामर्थ-प्रदर्शनं कर्तव्यमित्येव । तदेकमेव प्रयोजनं नैव टीकारम्भं प्रयोजयति । अत-ष्टीकारूपो यत्नोऽत्र नावकाशं लभते । संग्रहरूपो यत्नोऽपि तथैव । न हि ज्ञानेश्वरीप्रतिपादितार्थस्य साररूपेण संग्रहे केनचित्कृते समुद्दिष्टं कार्यं सिद्धं भवेत् । संग्रहमालोचयतां जनानां मूलग्रन्थस्थमुख्यविषयपरिचयमात्रं भवति न स्वानुभूतविषयाणामानुषङ्गिकाणां च कथंचित् । नापि मूलग्रन्थस्याक्षरशः पदशो वा वाक्यार्थोऽवगतो भवति । तथा च तात्पर्यार्थस्य संक्षेपेण ज्ञानेऽपि ज्ञानेश्वरीरसास्वादो दुर्लभ एव भवति । किं चात्र संग्रहस्यापेक्षैव न दृश्यते । यत्र विस्तारभिया प्रेक्षावतां परावृत्तिस्तत्र संग्रहोऽपेक्ष्यते । न हि ज्ञानेश्वरी-रसास्वादलुब्धः कश्चन ज्ञानेश्वरीमालोच्य विस्तारभिया परावर्तते । अपरं च ज्ञानेश्वरीग्रन्थः स्वयं भगवद्गीताप्रतिपाद्यार्थस्य विस्ताररूपः । तत्र च कस्य-चित्सत्यां संग्रहेच्छायां भगवद्गीतारूपः संग्रहोऽस्त्येव । अत एव च विस्ताररूपो यत्नोऽप्यत्र नावकाशं लभते । विस्तारस्वरूपस्य ग्रन्थस्य पुनर्विस्तृतस्वतन्त्रग्रन्थान्तरापेक्षाया अभावात् । प्रमाणान्तरप्रदर्शनादिभिर-धिकार्थबोधनेच्छायां साधकबाधकप्रमाणैर्दृढीकरणेच्छायां वा स्वतन्त्रविस्तृत-

ग्रन्थनिर्माणावसरः। यतो ज्ञानेश्वरीप्रतिपादितेऽर्थे न कचिन्न्यूनता संदृश्यते। नापि ज्ञानेश्वरीप्रतिपादितोऽर्थ उपपत्तिमपेक्षते। संप्रतिपन्नैर्बहुभिर्दृष्टान्तैः सिद्धान्तार्थावबोधसौकर्यस्य ज्ञानेश्वरीकारैरेव साधितत्वात्। तदेक एव यत्नोऽत्र भाषान्तररूपो ज्ञानेश्वरीप्रतिपाद्यार्थावबोधसौलभ्यायावशिष्यते। यद्यपि विषमपदेषु टिप्पणीमात्रेणाप्ययमर्थावबोधः सुसाधः। मुद्रितैव च पूर्वमेव तादृशटिप्पण्या संयोज्य ज्ञानेश्वरी। तथापि न तावता कर्तव्यस्य पर्याप्तिः। टिप्पण्या हि दुर्बोधः पदार्थः सुबोधतां नीतो भवतीत्येव न तु तया नैरन्तर्येण रसास्वादो भवेत्। प्रासादिकसत्पुरुषमुखोच्चारिताज्ज्ञानेश्वरीसदृशाच्छब्दाच्छब्दश्रवणसमकालं साकल्येनानुसंहितोऽर्थः किमप्यपूर्वमास्वादं विधत्त इति ह्यनुभवसिद्धम्। ईदृशो रसास्वादजनकोऽनुभवश्च पूर्वमवगतसकलशब्दार्थस्य भवति। यस्य पुनस्तत्रत्यः कश्चैकोऽपि शब्दोऽर्थतोऽनवगतस्तस्य तादृशशब्दार्थानुपस्थित्या स शब्दः स्वादुरसोपभोगकाले मध्येऽकस्माद्दन्तसंलग्नः सैन्धवखण्ड इव वैरस्यमाधत्ते। पश्चाच्च टिप्पण्यालोचनेन तादृशशब्दार्थावबोधानन्तरं संजायमानोऽपि रसास्वादो नाखण्डः। संलग्नस्य सैन्धवशकलस्यापसारणेन पुनर्मधुररसास्वादेऽपि न स नैरन्तर्येण रसास्वाद इति वक्तुं शक्यते। यथा सैन्धवशकलापसारणेपि तत्संस्कारेण द्वित्रक्षणपर्यन्तमंशतो लवणरससंबन्धोऽवर्जनीय एव भवति तथा टिप्पण्यालोचनेनावगतमर्थं पूर्वप्रतीते खण्डिते वाक्यार्थे संधाय वाक्यार्थपर्याप्तिः साधनीयेति संधानस्थले सूक्ष्माणि द्वित्राणि ततोऽधिकानि वा छिद्राण्यवर्जनीयान्येव भवन्ति। भाषान्तरविषये तु नैवम्। यदि मूलपद्यमनालोच्य प्रथमत एव भाषान्तरं करे कुर्वन्प्रेक्षावान्वाक्यार्थमनुसंधाय ततो मूलपद्यं समालोचयति तदा स पूर्वप्रतीतोऽप्यर्थः प्रासादिकसत्पुरुषमुखोच्चारितात्छब्दाच्छब्दज्ञानसमकालं तादृशशब्दनादात्म्येनानुभूयमानो नव इव कमप्यलौकिकं रसास्वादं जनयत्येव। तदानीं च यस्तत्र कश्चित्पूर्वमगृहीतशक्तिकः शब्दः स्यात्सोऽपि न सैन्धवशकल इव मध्येऽपि स्वरुचिमनुभावयति किं तु शर्करावगुण्ठिता कषायगुटिकेव स्वादुरसेऽन्तर्हितो भवति। यदि च मूलपद्यं प्रथमतः समालोचयति तदापि न तस्मिन्खण्डिते वाक्यार्थे पश्चादवगतं शब्दार्थं संधत्ते। भाषान्तरं हि टिप्पणीव नामुकस्य शब्दस्यामुकोऽर्थ इति प्रदर्शयति किं तु स्वातन्त्र्येण समग्रं वाक्यार्थं

बोधयति पश्चाच्च पूर्ववदेवाखण्डरसास्वादः । यद्यपि पूर्वं शद्बश्रवणं ततो वाक्यार्थज्ञानं ततो रसास्वाद इति क्रमस्तथापि तादृशस्थले तादृशशद्बप्रभावाद्विद्यमानोपि क्रमो न संलक्ष्यो भवतीत्यतः शद्बश्रवणसमकालमिव रसास्वादः प्रतीयते ।

एवमुक्तप्रकारेण भाषान्तरं यद्यप्यतीवोपयुक्तं भवति तथापि ज्ञानेश्वर्या अद्य यावत्संस्कृतभाषया पद्यरूपेण भाषान्तरं कर्तुं न कस्यापि प्रवृत्तिरभूत् । तादृशं भाषान्तरं स्याच्चेत्सांप्रतमतीवोपयुक्तं स्यात् । यतश्च जन्मसिद्धमहाराष्ट्रभाषाणामपि संस्कृतभाषान्तरप्रणाड्या ज्ञानेश्वरीरसास्वादः सुग्रहो भवति । तथा चात्यावश्यके कर्माणि प्रवृत्तानामोकोपाह्वमहादेवशर्मणामयं प्रयत्नः स्तुत्य इति मन्ये ।

**अभ्यङ्करोपाह्ववासुदेवशास्त्री**

चैत्र शु॥ ५ रविवार शके १८५१.

# FOREWORD

I have great pleasure in writing an English Foreword to this Sanskrit rendering of the famous commentary on the Bhagavadgita by one of the greatest Saints of the Deccan, Namely Jnanesvara. I have to thank very heartily Mr. M. P. Oka for having laid the whole of the Sanskrit-knowing public under obligation by rendering into Sanskrit this unique piece of Vedantic Mysticism in Marathi. I do not think that there is any commentary on the Bhagavadgita in any language which comes up to the level reached by the Jnanesvari in the Marathi language. If Marathi should be an object of study to other Provinces of India and to other Nations, it would not be vain to say that it should be for the sake of this unique work, the Jnanesvari. It is a marvel how a young person like Jnanesvara, who is reported to have entered Samadhi at the age of 21, should have been able to write this unique work, combining the essence of Vedantic teaching with the practical Observation of the world to the smallest detail, couched in a beautiful poetical garb, and throbbing at every stage with Devotional Mysticism which carries one nearest God. The Jnanessvari is not merely one of the very best compositions in Marathi, but also one of the very first. Mr. Oka has done me the honour of inviting me to write this brief foreword to it. I am sure there are many persons in Maharashtra who are in every way better qualified to discharge this task than myself. Having been invited, however, to do this, I cold not but do my duty by the great personality whose work Mr. Oka is presenting in a Sanskrit garb to day. I have heard many

eminent people say that they understand the Sanskrit rendering much sooner than the Marathi original. Thus this Sanskrit rendering would be useful not merely to the Marathi-speaking publie themselvss who take an interest in Sanskrit, but also to persons from other Provinces of India who do not know Marathi, but who still take an interest in Vedantic Mysticism, and who therefore through this Sanskrit garb can appreciate what Jnanesvara has done for the sake of humanity. Mr. Oka has been long known in the Deccan as a very acute scholar of Sanskrit, with powers of trenchant appreciation and exposition, and endowed with an extreme facility for rendering ideas even from other languages into Sanskrit. It is a fitting monument to his grasp of the Sanskrit language that he should have devoted these late years of his life to the rendering of the Jnanesvari in a Sanskrit garb, and thus have served not merely the peoplo of Maharashtra, but also every one in the whole of India who cares either for Sanskrit diction or for Gita exposition, or for Vedantic Mysticism expressed in any language whatsoever. We are very grateful to Mr. Oka for having accomplished this very difficult task, and wish that he is able to turn out the remaining parts of this work also, being thus able to lay the whole text of the Sanskrit Jnanesvari before the world of Oriental Scholars at an early date.

Nimbal, (M. S. M.)
18-5-1929.

R. D. RANADE.

---

# शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| अर्पणपत्रिका | | गर्वाणानाम् | गीर्वाणानाम् |
| निवेदना श्लोकः ४ | | याम्यज्ञेन | वाम्यज्ञेन |
| आशीर्वचनम् | ११ | तैस्मै | तैस्तै |
| ,, ४ | ४ | पमर | पामर |
| ,, ४ | १६ | तत्तद्भषया | तत्तद्भाषया |
| ९ | २ | विघाय | विधाय |
| ९ | ५ | नयिते | नयिते |
| १४ | १० | दृष्टं | दृष्टं |
| १७ | ३ | व्यक्तजीविताः | त्यक्तजीविताः |
| ४३ | १८ | ज्ञानेश्वर्या | ज्ञानेश्वर्याः |
| १०० | ४ | श्रयान् | श्रेयान् |
| १०६ | १ | व्यामिश्रेणैव | व्यामिश्रेणेव |
| १४२ | १ | ग्राह्यमव | ग्राह्यमेव |
| १५४ | ४ | कृणो | कृष्णो |
| १५५ | १६ | ममाश्रुवीरन् | समाश्रुवीरन् |
| १५६ | ११ | केवेलम् | केवलम् |
| १६३ | ७ | पश्यन्त्य भेदेमयि | पश्यन्त्यभेदे: मयि |
| १६३ | १२ | स्ववमेव | स्वयमेव |
| १६३ | १३ | ऽस्तिः | ऽस्ति |
| १६४ | २ | उपचारैर्थथोचितैः | उपचारैर्यथोचितैः |

| पृष्ठम् | पाङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६८ | १४ | कतृत्वं | कर्तृत्वं |
| १८२ | १० | प्रलयाग्निः | प्रलयाग्निः |
| १९२ | ११ | सत् | सन् |
| २४१ | ८ | भक्तिव्रीजस्य | भक्तिवीजस्य |
| २४१ | १० | विभति | विभाति |
| २४१ | १२ | प्रकृत्यवदृशी | प्रकृत्यैवेदृशी |
| २५५ | ११ | दृढं | दृढं |
| २५६ | १२ | गातन् | गतान् |
| २६५ | १२ | श्रोतृन् | श्रोतॄन् |
| २६७ | १० | कुर्तती | कुर्वती |
| २६९ | १२ | प्रवेष्टं | प्रवेष्टुम् |
| २७४ | १० | भुवाहि | भुवीह |
| २७५ | २ | काम्येभ्यो | कामेभ्यो |
| २८४ | ३ | कथनींनं | कथनीयं |
| २८८ | २ | च्छेता | च्छेत्ता |
| २९३ | ५ | मापनोऽय | मापनोऽयं |
| २९५ | ८ | कटमारोढ | कटकमारोढु |
| २९५ | ९ | थाज्यं | याज्यं |

---




॥ श्रीज्ञानेश्वरो विजयते ॥

# संस्कृतज्ञानेश्वरी

## प्रथमोऽध्यायः

ॐ नमस्ते नमोस्त्वाद्य निगमप्रतिपाद्य भोः ।
जयोऽस्तु ते स्वसंवेद्य जयोऽस्त्वात्मस्वरूप ते ॥ १ ॥
गणेशोऽसि स्वयं देव सर्वबुद्धिप्रकाशकः ।
वाणी निवृत्तिदासस्य ममेयमवधार्यताम् ॥ २ ॥
शब्दब्रह्माखिलं यत्सा सुवेषा मूर्तिरेव ते ।
वर्णरूपा वपुःकान्तिर्निर्दोषा यत्र राजते ॥ ३ ॥
स्मृतयो नाम गात्राणि सन्ति ते रुचिराकृतेः ।
लावण्यखनयः साक्षाद्भान्ति यान्यर्थशोभया ॥ ४ ॥
अष्टादश पुराणानि भो मण्याभरणानि ते ।
प्रमेयरत्नखचिता सुघटा पदपद्धतिः ॥ ५ ॥
नागरः पद्यबन्धो यस्तत्ते रञ्जितमम्बरम् ।
अलङ्काराश्च तत्रत्याः सुवर्णमयतन्तवः ॥ ६ ॥

---

ॐ नमो जी आद्या । वेदप्रतिपाद्या । जय जय स्वसंवेद्या । आत्मरूपा ॥ १ ॥ देवा तूंचि गणेशु । सकलमतिप्रकाशु । म्हणे निवृत्तिदासु । अवधारिजो जी ॥ २ ॥ हें शब्दब्रह्म अशेष । तेंचि मूर्ति सुवेष । तेथ वर्णवपु निर्दोष । मिरवत असे ॥ ३ ॥ स्मृति तेचि अवयव । रेखा आंगीकभाव । तेथ लावण्याची ठेव । अर्थशोभा ॥ ४ ॥ अष्टादश पुराणें । तींचि मणिभूषणें । पदपद्धती खेंवणें । प्रमेयरत्नांचीं ॥ ५ ॥ पद्यबंध नागर । तेंचि रंगाथिलें अंबर । जेथ साहित्य वाणें सपूर । उजाळाचें ॥ ६ ॥

काव्यनाटकरूपास्ते प्रबन्धाः क्षुद्रघण्टिकाः ।
क्वणन्त्यो मञ्जुलध्वाना रमणीयार्थसम्पदा ॥ ७ ॥
नानाविधप्रमेयेषु दृष्टेषु निपुणं मया ।
शोभनान्युपलभ्यन्ते पदरत्नानि कान्यपि ॥ ८ ॥
व्यासादीनां मतिं मन्ये त्वदीयं मेखलास्वरम् ।
अहो चोक्षतया यस्य चकासति सदञ्चलाः ॥ ९ ॥
दर्शनानीह षड् यानि ते त्वदीया भुजाः खलु ।
आयुधानि विसंवादीन्यत एव विभर्षि तैः ॥ १० ॥
तर्कं ते परशुं मन्ये नीतिभेदं तवाङ्कुशम् ।
महारसं च वेदान्तं मोदकं गणयाम्यहम् ॥ ११ ॥
यो बौद्धमतसंकेतः स्वभावात्परिखण्डितः ।
एकहस्तधृतं भग्नं तं ते दन्तं समर्थये ॥ १२ ॥
सत्कारवादो वरदस्तव पद्माकृतिः करः ।
तथा धर्मप्रतिष्ठार्थः सिद्धोऽभयकरस्तव ॥ १३ ॥

---

देखा काव्य नाटका । जें निर्धारितां सकौतुका । त्याचि रुणझुणती क्षुद्रघंटिका । अर्थध्वनि ॥ ७ ॥ नाना प्रमेयांची परी । निपुणपणें पाहतां कुसरी । दिसती उचित पदें माझारीं । रत्नें भलीं ॥ ८ ॥ तेथ व्यासादिकांच्या मती । तेचि मेखळा मिरवती । चोखाळपणें झळकती । पल्लवसडका ॥ ९ ॥ देखा षड्दर्शनें म्हणिपती । तेचि भुजांची आकृति । म्हणऊनि विसंवादें घरिती । आयुधें हातीं ॥ १० ॥ तरी तर्कु तोचि परशु । नीतिभेदु अंकुशु । वेदांतु तो महारसु । मोदकु मिरवे ॥ ११ ॥ एके हातीं दंतु । जो स्वभावता खंडितु । तो बौद्धमतसंकेतु । वार्तिकांचा ॥ १२ ॥ मग सहजें सत्कारवादु । तो पद्मकरु वरदु । धर्मप्रतिष्ठा तो सिद्धु । अभयहस्तु ॥ १३ ॥

शुण्डादण्डः सुसरलः सुविवेकः सुनिर्मलः ।
यतो ब्रह्मसुखानन्दः केवलः संप्रवर्तते ॥ १४ ॥
संवादं दशनं मन्ये समतां तत्र शुभ्रताम् ।
उन्मेषं सूक्ष्मदृष्टित्वं विघ्नराट् तव भाति मे ॥ १५ ॥
मीमांसे द्वे तव श्रोत्रे बोधरूपं मदामृतम् ।
मुनयो भ्रमरत्वेन यत्पाने निरताः सदा ॥ १६ ॥
प्रमेयाणि प्रवालानि सुप्रभाणि विभान्ति ते ।
द्वैताद्वैतमते तुल्ये गण्डत्वेन विराजतः ॥ १७ ॥
शोभन्ते गण्डमुकुटे गन्धवन्ति सुमानि ते ।
स्रवज्ज्ञानमरन्दानि दशोपनिषदः स्वयम् ॥ १८ ॥
अकारचरणद्वन्द्व उकारविपुलोदरः ।
मकारमस्तकोऽसि त्वम्–ॐस्वरूपः स्वयं प्रभो ॥ १९ ॥
शब्दब्रह्म समाविष्टमेतद्वर्णत्रयेऽखिलम् ।
आदिबीजं मयादौ तद्वन्दितं कृपया गुरोः ॥ २० ॥

---

देखा विवेकवंतु सुविमळु । तोचि शुंडादंडु सरळु । जेथ परमानंदु केवळु । महासुखाचा ॥ १४ ॥ तरी संवादु तोचि दशनु । जो समता-शुभ्रवर्णु । देवो उन्मेषसूक्ष्मेक्षणु । विघ्नराजु ॥ १५ ॥ मज अवगमलिया दोनी । मीमांसा श्रवणस्थानीं । बोधमदामृत मुनी । अली सेविती ॥१६॥ प्रमेयप्रवालसुप्रभ । द्वैतादैत तेचि निकुंभ । सरिसेपणें एकवटत इभ– । मस्तकावरी ॥ १७ ॥ उपरि दशोपनिषदें । जियें उदारें ज्ञानमकरंदें । तियें कुसुमें मुगुटीं सुगंधें । शोभतीं भलीं ॥ १८ ॥ अकार चरणयुगुल । उकार उदर विशाल । मकार महामंडल । मस्तकाकारें ॥ १९ ॥ हे तिन्ही एकवटले । तेथ शब्दब्रह्म कवळलें । तें मियां श्रीगुरुकृपा नमिलें । आदि-बीज ॥ २० ॥

शारदामथ वन्देऽहं नववाणीविलासिनीम् ।
चातुर्यार्थकलामुख्यदेवतां विश्वमोहिनीम् ॥ २१ ॥
पारं संसारपूरस्य येन नीतोऽस्मि स स्थितः ।
हृदि मे सद्गुरुस्तस्माद्विवेकेऽत्यादरो मम ॥ २२ ॥
निहिताञ्जननेत्रस्य स्फारीभवति लोचनम् ।
ततो गोचरतां याति क्वापि तस्य महानिधिः ॥ २३ ॥
यथा सफलकामोऽसौ यस्य चिन्तामणिः करे ।
अहं निवृत्तिनाथस्य लाभात्पूर्णमनोरथः ॥ २४ ॥
बुधा भक्त्या गुरोरेव कृतकार्या भविष्यथ ।
मूले सिक्ते ह्यनायासं शाखापल्लवतोषणम् ॥ २५ ॥
केवलाम्भोनिधिस्नानात् सर्वतीर्थावगाहनम् ।
तथामृतरसास्वादादशेषरससेवनम् ॥ २६ ॥
मया श्रीगुरुरेवैको भूयो भूयोऽभिवन्द्यते ।
ईप्सितार्थप्रदत्वाद्यः कामकल्पद्रुमः किल ॥ २७ ॥

---

आतां अभिनववाग्विलासिनी । जे चातुर्यार्थकलाकामिनी । ते शारदा विश्वमोहिनी । नमिली मियां ॥ २१ ॥ मज हृदयीं सद्गुरु । जेणें तारिलों हा संसारपूरु । म्हणऊनि विशेषें अत्यादरु । विवेकावरी ॥ २२ ॥ जैसें डोळ्यां अंजन भेटे । ते वेळीं दृष्टीसी फांटा फुटे । मग वास पाहिजे तेथ प्रगटे । महानिधि ॥ २३ ॥ कां चिंतामणि आलिया हातीं । सदा विजयवृत्ति मनोरथीं । तैसा मी पूर्णकाम श्रीनिवृत्ति । ज्ञानदेवो म्हणे ॥ २४ ॥ म्हणोनि जाणतेनो गुरु भजिजे । तेणें कृतकार्य होइजे । जैसें मूळसिंचनें सहजें । शाखापल्लव संतोषती ॥ २५ ॥ कां तीर्थें जियें त्रिभुवनीं । तियें घडती समुद्रावगाहनीं । ना तरी अमृतरसास्वादनीं । रस सकळ ॥ २६ ॥ तैसा पुढतपुढती तोचि । मियां अभिवंदिला श्रीगुरुचि । जो अभिलषित मनोरुचि । पुरविता ॥ २७ ॥

सर्वेषां कौतुकानां या जन्मभूमिरुदाहृता ।
अवधारयतेदानीं तामिमां गहनां कथाम् ॥ २८ ॥
अभिनवमुद्यानमिदं मन्ये तत्तद्विवेकवृक्षाणाम् ।
मूलं सर्वसुखानां महानिधिः सत्प्रमेयाणाम् ॥ २९ ॥
नवरसपीयूषाब्धिः परिपूर्णः परमधाम सुप्रकटम् ।
सद्माखिलविद्यानामावासः सर्वशास्त्राणाम् ॥ ३० ॥
प्रभवोऽखिलधर्माणां जीवातुः सर्वसाधुपुरुषाणाम् ।
लावण्यरत्नपूर्णं भाण्डारं श्रीसरस्वत्याः ॥ ३१ ॥
मन्ये सरस्वती साक्षाच्छ्रीमद्व्यासमहामतिम् ।
संप्रविश्यावतीर्णात्र भारतीयकथाच्छलात् ॥ ३२ ॥
भारतं सर्वकाव्यानां राजत्वेन विराजते ।
गौरवस्य परा काष्ठा रसवन्तो रसा अतः ॥ ३३ ॥
इदं चाप्यवधार्यं यच्छास्त्रीयत्वं गिरामतः ।
कोमलत्वं महाबोधे तासां द्विगुणतां गतम् ॥ ३४ ॥

---

आतां अवधारा कथा गहन । जे सकळां कौतुका जन्मस्थान । कीं अभिनव उद्यान । विवेकतरूचें ॥ २८ ॥ ना तरी सर्व सुखाची आदि । जे प्रमेयमहानिधि । नाना नवरससुधाब्धि । परिपूर्ण हे ॥ २९ ॥ कीं परमधाम प्रकट । सर्व विद्यांचें मूळपीठ । शास्त्रजातां वसौट । अशेषांचें ॥ ३० ॥ ना तरी सकळ धर्मांचें माहेर । सज्जनांचें जिव्हार । लावण्यरत्नभांडार । शारदेचें ॥ ३१ ॥ नाना कथारूपें भारती । प्रकटली असे त्रिजगतीं । आविष्करोनि महामती । व्यासाचिये ॥ ३२ ॥ म्हणोनि हा काव्यां रावो । ग्रंथ गुरुवतीचा ठावो । एथूनि रसां झाला आवो । रसाळपणाचा ॥ ३३ ॥ तेवींचि आइका आणीक एक । एथूनि शब्दश्री सच्छास्त्रिक । आणि महाबोधीं कोंवळीक । दुणावली ॥ ३४ ॥

चातुर्यं चतुरीभूतं प्रमेयं रुचिमाश्रितम् ।
पुष्टं च सुखसौभाग्यं मन्ये भारतसंश्रयात् ॥ ३५ ॥
माधुर्यं चापि माधुर्या शृङ्गारस्य च सौष्ठवम् ।
औचित्यमुचितानां च शोभनत्वमितो गतम् ॥ ३६ ॥
कलानां कौशलं ह्यस्मात्पुण्यस्य गरिमाधिकः ।
अत एवापदोषोऽभूत् सलीलं जनमेजयः ॥ ३७ ॥
प्रमोदानां समोदत्वं गुणित्वं गुणसंततेः ।
क्षणं विचार्य पश्यद्भिर्भूयसात्र प्रतीयते ॥ ३८ ॥
यथा धवलितं भासा भास्वतो भुवनत्रयम् ।
श्रीमद्व्यासधिया व्याप्तं तथा विश्वं विराजते ॥ ३९ ॥
सत्क्षेत्रे पातितं वीजं स्वैरं विस्तारमश्नुते ।
तथैवार्था भारतेऽत्र शोभां पुष्यन्ति कामपि ॥ ४० ॥
यथा नगरवासेन नागरो जायते जनः ।
संसारः पण्डितो जातस्तथा व्यासोक्तितेजसा ॥ ४१ ॥

---

एथ चातुर्य शाहणें झालें । प्रमेय रुचीस आलें । आणि सौभाग्य पोखलें । सुखाचें एथ ॥३५॥ माधुर्यी मधुरता । शृंगारीं सुरेखता । रूढपण उचितां । दिसलें भलें ॥ ३६ ॥ एथ काळाविदपण कळा । पुण्याशि प्रतापु आगळा । म्हणऊनि जनमेजयाचे अवलीळा । दोष हरले ॥ ३७ ॥ आणि पाहतां नावेक । रंगीं सुरंगतेची आगळिक । गुणां सुगुणपणाचें बिक । बहुवस एथ ॥ ३८ ॥ भानुचेनि तेजें धवळलें । जैसें त्रैलोक्य दिसे उजळिलें । तैसें व्यासमती कवळिलें । मिरवे विश्व ॥ ३९ ॥ कां सुक्षेत्रीं बीज घातलें । तें आपुलियापरी विस्तारलें । तैसें भारतीं सुरवाडलें अर्थजात ॥ ४० ॥ ना तरी नगरांतरीं वसिजे । तरी नागराचि होइजे । तैसें व्यासोक्तितेजें । धवळत सकळ ॥ ४१ ॥

लावण्यस्य नवा शोभा सर्वथा कुरुते पदम् ।
अङ्गनानां यथाङ्गेषु यौवनेऽभिनवे सति ॥ ४२ ॥
प्रवृत्ते मधुमासे वा शोभा समधिका यथा ।
लावण्यस्य खनिः साक्षादुद्यानेषु प्रतायते ॥ ४३ ॥
चामीकरं घनीभूतं हन्त सामान्यदर्शनम् ।
सविशेषां रुचिं धत्ते नीतं भूषणतां यथा ॥ ४४ ॥
तथा व्यासमुनेर्वाचालङ्कृतं सुषमां गतम् ।
इतीव भारतं तैस्तैरितिहासैः कृताश्रयम् ॥ ४५ ॥
गौरवं परमं नः स्यादित्यङ्गीकृत्य लाघवम् ।
प्राप्तान्याख्यानरूपेण पुराणानि नु भारतम् ॥ ४६ ॥
यन्महाभारते नास्ति तन्नास्त्येव जगत्त्रये ।
अतस्त्रिभुवनं सर्वं व्यासोच्छिष्टमिति स्मृतम् ॥ ४७ ॥
कथेदृशी रसमयी परमार्थस्य जन्मभूः ।
जनमेजयभूपाय मुनिना कथिता पुरा ॥ ४८ ॥

---

कीं प्रथमवयसाकाळीं । लावण्याची नव्हाळी । प्रकटे जैसी आगळी । अंगनाअंगीं ॥ ४२ ॥ ना तरी उद्यानीं माधवी घडे । तेथ वनशोभेची खाणी उघडे । आदिलापासोनि अपाडें । जियापरी ॥ ४३ ॥ नाना घनीभूत सुवर्ण । जैसें न्याहाळितां साधारण । मग अळंकारीं बरवेपण । निवाडु दावी ॥ ४४॥ तैसें व्यासोक्ती अळंकारिलें । आवडतें बरवेपण पातलें । तें जाणोनि काय आश्रयिलें । इतिहासीं ॥ ४५ ॥ नाना पुरतिये प्रतिष्ठेलागीं । सानीव धरूनि आंगीं । पुराणें आख्यानरूपें जगीं । भारता आलीं ॥ ४६ ॥ म्हणऊनि महाभारतीं नाहीं । तें नोहेचि लोकीं तिहीं । येणें कारणें म्हणिपे पाहीं । व्यासोच्छिष्ट जगत्त्रय ॥ ४७ ॥ ऐसी जगीं सुरस कथा । जे जन्मभूमि परमार्था । मुनि सांगे नृपनाथा । जनमेजया ॥ ४८ ॥

मङ्गलस्य परं धाम कथेयमवधार्यताम् ।
अद्वितीयोत्तमा श्रेष्ठा पवित्रानुपमा भुवि ॥ ४९ ॥
श्रीकृष्णार्जुनसंवादो गीताख्यः सरसोऽस्ति यः ।
तं परागमहं मन्ये कमले भारताभिधे ॥ ५० ॥
मन्ये व्यासधियामन्थि शब्दब्रह्मपयोनिधिः ।
भारताख्यं निरवधि नवनीतं प्रयत्नतः ॥ ५१ ॥
तच्च ज्ञानाग्निसंपर्कात् क्वथितं सद्विवेकतः ।
परिपाकवशाज्जातं घृतमामोदपूरितम् ॥ ५२ ॥
वैराग्यशीलैर्यदपेक्ष्यते सदा यत्साधुवृन्देन मुदानुभूयते ।
सोऽहंधिया पारमुपेयुषामपि चित्तं नृणां यत्र च विन्दते रतिम्॥
भक्तैः सदा यच्छ्रवणीयमादराद्यद्वन्दनीयं प्रथमं जगत्त्रये ।
यद्वर्णितं श्रीमति भीष्मपर्वणि पार्थस्य बोधाय कथानुसारतः ॥
यदाहुर्भगवद्गीतां ब्रह्मणा च शिवेन च ।
स्तूयते यत्सेव्यते यत्सादरं सनकादिभिः ॥ ५५ ॥
शरच्चन्द्रकलान्तःस्थाः कोमलामृतबिन्दवः ।
मृदुस्वान्तैर्निषेव्यन्ते चकोरशिशुभिः शनैः ॥ ५६ ॥

---

जे अद्वितीय उत्तम । पवित्रैक निरुपम । परम मंगलधाम । अवधारिजो ॥ ४९ ॥ आतां भारतकमळपरागु । गीताख्यु प्रसंगु । जो संवादला श्रीरंगु । अर्जुनेंसीं ॥ ५० ॥ ना तरी शब्दब्रह्माब्धि । मथियला व्यासबुद्धी । निवडिलें निरवधि । नवनीत हें ॥ ५१ ॥ मग ज्ञानाग्निसंपर्कें । कडसिलें विवेकें । पद आलें परिपाकें । आमोदासी ॥ ५२ ॥ जें अपेक्षिजे विरक्तीं । सदा अनुभविजे संतीं । सोऽहंभावें पारंगतीं । रमिजे जेथ ॥ ५३ ॥ जें आकर्णिजे भक्तीं । जें आदिवंद्य त्रिजगतीं । ते भीष्मपर्वीं संगती । सांधिजैळ ॥ ५४ ॥ जे भगवद्गीता म्हणिजे । जे ब्रह्मेशांनीं प्रशंसिजे । जे सनकादिकीं सेविजे । आदरेंसीं ॥ ५५ ॥ जैसें शारदीयेचे चंद्रकळे-। माजीं अमृतकण कोंवळे । ते वेंचिती मनें मवाळें । चकोरतलगें ॥ ५६ ॥

तथेयं श्रोतृभिर्गीता सेवनीया शनैः शनैः ।
परं मार्दवमाश्रित्य चित्तैकाग्र्यं विधाय च ॥ ५७ ॥
कथनीया विना वाचं भोग्या भानं विनेन्द्रियैः ।
प्राक् श्रुतेश्चापि सिद्धान्तो ग्राह्योऽस्यां प्रतिपादितः ॥ ५८ ॥
परागो नीयते भृङ्गैर्न त्वम्बुजदला विदुः ।
ज्ञानेऽस्य ग्रन्थरत्नस्य रीतिः सैवावलम्ब्यते ॥ ५९ ॥
अनुज्झन्ती निजं स्थानं चन्द्रालिङ्गननिर्वृतिम् ।
यथा कुमुदिनी भुङ्क्ते करस्पर्शे विकासिनी ॥ ६० ॥
तथा गाम्भीर्ययोगेण स्थिरीभूतमना जनः ।
यः स एवास्य जानाति रहस्यमितरो न हि ॥ ६१ ॥
अर्जुनेन समा ये स्युः श्रोतारः केऽपि भावुकाः ।
तैरत्रावहितैर्भाव्यं ग्रन्थश्रवणकर्मणि ॥ ६२ ॥
सन्तो महाशया यूयमित्येवोक्तं वचो मया ।
इदं दुर्ललितं किंचित् प्रार्थना पादयोरियम् ॥ ६३ ॥

---

तियांपरी श्रोतां । अनुभवावी हे कथा । अति हळुवारपण चित्ता । आणुनियां ॥ ५७ ॥ हे शब्देंवीण संवादिजे । इंद्रियां नेणतां भोगिजे । बोलाआदि झोंबिजे । प्रमेयाशी ॥ ५८ ॥ जैसे भ्रमर परागु नेती । परी कमळदळें नेणती । तैसी परी आहे सेविती । ग्रंथीं इये ॥ ५९ ॥ कां आपुला ठावो न सांडितां । आलिंगिजे चंद्रु प्रकटतां । हा अनुरागु भोगितां । कुमुदिनी जाणे ॥ ६० ॥ ऐसेनि गंभीरपणें । स्थिरावलेनि अंतःकरणें । आथिला तोचि जाणे । मानूं इये ॥ ६१ ॥ अहो अर्जुनाचिये पांती । जे परिसणया योग्य होती । तिहीं कृपा करूनि संतीं । अवधान द्यावें ॥ ६२ ॥ हें सलगी म्यां म्हणितलें । चरणांलागोनि विनविलें । प्रभू सखोल हृदय आपुलें । म्हणौनियां ॥ ६३ ॥

अस्तु नाम शिशुः कोऽपि मुग्धजल्पपरः परम् ।
स्वभावोऽयं गुरूणां यत् तैस्तद्वागभिनन्द्यते ॥ ६४ ॥
अङ्गीकृतस्य युष्माभिः स्वीयत्वेन मतस्य च ।
क्षान्तदोषस्य किं मेऽस्ति संप्रार्थ्यं युष्मदन्तिके ॥ ६५ ॥
अयमेव तु मे दोषोऽपरोऽस्ति परमः खलु ।
यद्गीतां विवुवूर्षामि प्रेरयामि च वः श्रवे ॥ ६६ ॥
अविचार्य प्रवृत्तोऽस्मि कर्मण्यस्मिन् सुदुर्घटे ।
भानोस्तेजसि खद्योतः किं कदाचित् प्रकाशते ॥ ६७ ॥
टिट्टिभी संप्रवृत्ताभूच्चञ्च्वा सागरशोषणे ।
तथाहमस्मि मन्दात्मा गीतार्थप्रतिपादने ॥ ६८ ॥
कवलीकुर्वताकाशं ततो भाव्यं गरीयसा ।
कथमेतन्नु शक्यं स्याद्यत्नमातिष्ठतोऽपि मे ॥ ६९ ॥
विवृण्वन् गिरिशो गीतामनुयुक्तोऽम्बया स्वयम् ।
विस्मयाक्रान्तया वाचमुवाचैवं सगौरवाम् ॥ ७० ॥

---

जैसा स्वभावो मायबापांचा । अपत्य बोले जरी बोबडी वाचा । तरी अधिकचि तयाचा । संतोष आथी ॥ ६४ ॥ तैसा तुम्हीं मी अंगिकारिला । सज्जनीं आपुला म्हणितला । तरी उणें सहजें उपसाहला । प्रार्थू काई ॥६५॥ परी अपराधु तो आणीक आहे । जे मी गीतार्थु कवळूं पाहें । ते अवधारा विनवूं लाहें । म्हणौनियां ॥ ६६ ॥ हें अनावर न विचारितां । वायांचि धिंवसा उपनला चित्ता । येऱ्हवीं काइ भानुतेजीं खद्योता । शोभा आथी ॥ ६७ ॥ कीं टिटिभू चांचूवरी । माप सूये सागरीं । मी नेणतु त्यापरी । प्रवर्ते येथ ॥ ६८ ॥ आयका आकाश गिंवसावें । तरी आणीक त्याहूनि थोर होआवें । म्हणऊनि अपाडु हें आघवें । निर्धारितां ॥ ६९ ॥ तया गीतार्थाची थोरी । स्वयें शंभू विवरी । जेथ भवानी प्रश्नु करी । चमत्कारोनी ॥ ७० ॥

त्वत्स्वरूपमिवानन्तं गीतार्थं देवि मन्महे ।
नित्यं नूतनमेवैतद्गीतातत्त्वं प्रदृश्यते ॥ ७१ ॥
यस्य निःश्वासितं वेदा निद्रितस्येति गद्यते ।
तेन सर्वेश्वरेणेयं गीतोक्ता जाग्रता स्वयम् ॥ ७२ ॥
यदेवं गहनं यत्र वेदानां कुण्ठिता गतिः ।
कोऽहं तत्रातिमन्दात्मा गीतार्थप्रतिपादने ॥ ७३ ॥
अमर्यादमिदं तत्त्वं को वाकलयितुं क्षमः ।
महातेजा रविः केन धवलीक्रियतेतराम् ।
कथं नु मशको मुष्ट्या ग्रहीतुमलमम्बरम् ॥ ७४ ॥
स एवात्र ममाधारो यद्गुरोरनुकूलता ।
तेनैव धृतधैर्योऽहं संप्रवर्तेऽत्र कर्मणि ॥ ७५ ॥
आविवेकं करोम्येतं मौर्ख्यात्कामं विमोहितः ।
अयं तु सत्कृपादीपो ममाग्रे दीप्यते सदा ॥ ७६ ॥
यल्लोहं स्वर्णतां याति शक्तिः स्पर्शमणेर्हि सा ।
सुधाया एव सा सिद्धिर्यज्जीवति पुनर्मृतः ॥ ७७ ॥

---

तेथ हरु म्हणे नेणिजे । देवी जेंसें कां स्वरूप तुझें । तैसें हें नित्य नूतन देखिजे । गीतातत्त्व ॥ ७१ ॥ हा वेदार्थसागरु । जया निद्रिताचा घोरु । तो स्वयें सर्वेश्वरु । प्रत्यक्ष अनुवादला ॥ ७२ ॥ ऐसें जें अगाध । जेथ वेडावती वेद । तेथ अल्प मी मतिमंद । काय होयें ॥ ७३ ॥ हें अपार कैसेनि कवळावें । महातेज कवणें धवळावें । गगन मुठीं सुवावें । मशकें केवीं ॥ ७४ ॥ परी एथ असे एकु आधारु । तेणेंचि बोलें मी सधरु । जैं सानुकूळ श्रीगुरु । ज्ञानदेवो म्हणे ॥ ७५ ॥ येऱ्हवीं तरी मी मूर्खू । जरी जाहला अविवेकु । तरी संतकृपादीपकु । सोज्वळु असे ॥ ७६ ॥ लोहाचें कनक होये । हें सामर्थ्य परिसींच आहे । कीं मृतही जीवित लाहे । अमृतसिद्धी ॥ ७७ ॥

कृपा सिद्धसरस्वत्या मूकं वाचालतां नयेत् ।
वस्तुसामर्थ्यशक्तौ नु विस्मयावसरोऽत्र कः ॥ ७८ ॥
यस्यास्ति माता किल कामधेनुर्लोके किमप्राप्यमिहास्ति तस्य।
जानन्निदं ग्रन्थमिमं प्रणेतुं सिद्धौ सुनिःशङ्कतया प्रवर्ते ॥ ७९ ॥
यन्न्यूनं पूरणीयं तद्यत्किंचिदधिकं मतम् ।
तत्क्षन्तव्यं कृपावद्भिर्भवद्भिरिति याचना ॥ ८० ॥
अवधत्त च मे वाचं यथाप्रेरितभाषिणः ।
सूत्राधीनं दारुयन्त्रमिव चेष्टे हि वः पुरः ॥ ८१ ॥
एवं चानुगृहीतोऽहं नियोज्यो वः सतां सदा ।
स्वेच्छया नटनीयोऽस्मि युष्माभिर्भो दयालवः ॥ ८२ ॥
एतस्मिन् सद्गुरुर्वाक्यं ज्ञानदेवमभाषत ।
अलं तवानया वाचा व्याख्यानं कुरु सत्वरम् ॥ ८३ ॥
श्रुत्वा निवृत्तिदासोऽयं प्रहृष्टात्माभिभाषते ।
उच्यमानं मया सर्वैः श्रोतव्यं स्वस्थमानसैः ॥ ८४ ॥

---

जरी प्रकटे सिद्धसरस्वती । तरी मुकया आथी भारती । एथ वस्तुसामर्थ्यशक्ती । नवल कायी ॥ ७८ ॥ जयातें कामधेनु माये । तयासी अप्राप्य कांहीं आहे । म्हणऊनि मी प्रवर्तों लाहें । ग्रंथीं इये ॥ ७९ ॥ तरी न्यून तें पुरतें । अधिक तें सरतें । करूनि घेयावें हें तुमतें । विनवितु असें ॥ ८० ॥ आतां देइजो अवधान । तुम्हीं बोलविल्या मी बोलेन । जैसें चेष्टे सूत्राधीन । दारुयंत्र ॥ ८१ ॥ तैसा मी अनुग्रहीतु । साधूंचा निरूपितु । ते आपुलिया परी अलंकरितु । भलतैसा ॥ ८२ ॥ तंव श्रीगुरु म्हणती राहीं । हें तुज बोलावें न लगे कांहीं । आतां ग्रंथा चित्त देईं । झडकरी गा ॥ ८३ ॥ या बोला निवृत्तिदासु । पावूनि परम उल्हासु । म्हणे परियेसा मना अवकाशु । देऊनियां ॥ ८४ ॥

धृतराष्ट्र उवाच—

धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत संजय ॥ १ ॥

**धृतराष्ट्रोऽब्रवीद्वाक्यं पुत्रस्नेहेन मोहितः ।**
**कुरुक्षेत्रेऽस्ति यद्वृत्तं तन्मे कथय संजय ॥ ८५ ॥**

**धर्मक्षेत्राह्वया यस्य प्रथा सर्वत्र गीयते ।**
**पाण्डवा मामकाश्चापि गतास्तत्र युयुत्सया ॥ ८६ ॥**
**तस्मात्कालमियन्तं किं क्रियते तैः परस्परम् ।**
**तत्सत्वरं ममाग्रे त्वं निवेदयितुमर्हसि ॥ ८७ ॥**

संजय उवाच—

दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥
पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥

**प्रक्षुब्धं पाण्डवानीकं ददृशे–संजयोऽवदत्—।**
**प्रलयावसरे व्यात्तं कृतान्तवदनं यथा ॥ ८८ ॥**

---

तरी पुत्रस्नेहें मोहितु । धृतराष्ट्र असे पुसतु । म्हणे संजया सांगें मातु । कुरुक्षेत्रींची ॥ ८५ ॥ जें धर्मालय म्हणिजे । तेथ पांडव आणि माझे । गेले असती व्याजें । झुंझाचेनि ॥ ८६ ॥ तरी तिहीं येतुला अवसरीं । काय किजत असे येरयेरीं । तें झडकरी कथन करीं । मजप्रती ॥ ८७ ॥ तिये वेळीं तो संजय बोले । म्हणे पांडवसैन्य उचललें । जैसें महाप्रळयीं पसरलें । कृतांतमुख ॥ ८८ ॥

एवं पाण्डवसैन्यं तत्सहसैव समुत्थितम् ।
को नु वारयितुं शक्तः कालकूटमिवोदधेः ॥ ८९ ॥
और्वानलो यथा दीप्तः प्रवातेन प्रवर्धितः ।
संशोष्य सागराम्भांसि समाक्रामन्नभस्तलम् ॥ ९० ॥
तथा तत्पाण्डवानीकं तैस्तैर्व्यूहैः परिष्कृतम् ।
तदानीमतिदुर्वारं दृश्यते स्म भयंकरम् ॥ ९१ ॥
दुर्योधनो बलं दृष्ट्वा तृणायामंस्त नाम तत् ।
वारणानां घटाजातं वीक्ष्य पञ्चाननो यथा ॥ ९२ ॥
तदाचार्यमुपागम्य द्रोणं पप्रच्छ भूपतिः ।
दृष्टं किं पाण्डुपुत्राणां बलमेतत्समुत्थितम् ॥ ९३ ॥
व्यूहा द्रुपदपुत्रेण धीमता रचितास्तथा ।
यथैते परितो दुर्गाश्चलन्त इव भान्ति मे ॥ ९४ ॥
त्वया शिक्षयता योऽयं विद्याया आस्पदं कृतः ।
सेनाधिपेष तेनैव विततः सर्वतोदिशम् ॥ ९५ ॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥

---

तैसें तें घनदाट । उठावलें एकवाट । जैसे उसळलें काळकूट । धरी कवण ॥ ८९ ॥ नातरी वडवानलु सांदुकला । प्रलयवातें पोखला । सागर शोषूनि उथवला । अंबराशी ॥ ९० ॥ तैसें दळ दुर्धर । नाना व्यूहीं परिकर । अवगमलें भयासुर । तिये काळीं ॥ ९१ ॥ तें देखोनियां दुर्योधनें । अव्हेरिलें कवणें मानें । जैसें न गणिजे पंचाननें । गजघटांतें ॥ ९२ ॥ मग द्रोणापाशीं आला । तयाते म्हणे हा देखिला । कैसा दळभारु उचलला । पांडवांचा ॥ ९३ ॥ गिरिदुर्ग जैसे चाळते । तैसे विविध व्यूह भंवते । रचिले आथी बुद्धिमंतें । द्रुपदकुमरें ॥ ९४ ॥ जो कां तुम्हीं शिक्षापिला । विद्येसी वसौटा केला । तेणें हा सैन्यसिंधु पाखरिला । देखदेख ॥ ९५ ॥

वीरा अन्येऽप्यसामान्याः क्षात्त्रधर्मपरायणाः ।
शस्त्रास्त्रनिपुणा एतां रणभूमिमुपागताः ॥ ९६ ॥
भीमार्जुनसमाः शौर्यबलोत्साहपराक्रमैः ।
त एवादौ प्रकीर्त्यन्ते तवाग्रे कौतुकान्मया ॥ ९७ ॥
सुभटो युयुधानोऽत्र विराटो युधि पण्डितः ।
प्राप्तश्च द्रुपदो नाम वीरः श्रेष्ठो महारथः ॥ ९८ ॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५ ॥
युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

धृष्टद्युम्नश्चेकितानः काशिराजश्च वीर्यवान् ।
उत्तमौजा नृपश्रेष्ठः शैब्यश्च नरपुङ्गवः ॥ ९९ ॥
दृश्यतां कुन्तिभोजोऽयं युधामन्युरुपागतः ।
नृपाः पुरुजिदाद्याश्च वीक्ष्यन्तां सकला अमी ॥ १०० ॥
सुभद्राहृदयानन्दो नवोऽयमपरोऽर्जुनः ।
अभिमन्युस्त्वया दृश्यस्तथैतान् द्रौपदीसुतान् ॥ १०१ ॥

---

आणीकही असाधारण । जे शस्त्रास्त्रीं प्रवीण । क्षात्रधर्मी निपुण । वीर आहाती ॥ ९६ ॥ जे बळें प्रौढी पौरुषें । भीमार्जुनासारिखे । ते सांगेन कौतुकें । प्रसंगेंचि ॥ ९७ ॥ एथ युयुधानु सुभटु । आला असे विराटु । महारथी श्रेष्ठु । द्रुपदु वीरु ॥ ९८ ॥ चेकितान धृष्टकेतु । काशिराज विक्रांतु । उत्तमौजा नृपनाथु । शैब्य देख ॥ ९९ ॥ हा कुंतिभोज पाहें । एथ युधामन्यु आला आहे । आणि पुरुजितादी राय हे । सकळ देख ॥ १०० ॥ हा सुभद्राहृदयनंदनु । जो अपरु नवा अर्जुनु । तो अभिमन्यु म्हणे दुर्योधनु । देखें द्रोणा ॥ १ ॥

सर्वान्महारथान्पश्य समरे समुपस्थितान् ।
अमितानपरान्वीरान्मिलितांश्च रणाजिरे ॥ १०२ ॥

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥
भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥

के वास्माकं बले मुख्या वीराः सन्तीति कथ्यते ।
अनुरोधात्प्रसङ्गस्य तदिदानीं निशाम्यताम् ॥ १०३ ॥
भवदाद्याश्च ये मुख्यास्तेषां नामानि संप्रति ।
संज्ञार्थमभिधीयन्ते केवलं भो द्विजोत्तम ॥ १०४ ॥
अयं गङ्गात्मजो भीष्मः प्रतापे भानुना समः ।
अयं कर्णो महावीरः शत्रुवारणकेसरी ॥ १०५ ॥
एतौ पृथक् पृथग्विश्वं संहर्तुं मनसा क्षमौ ।
बहुना किं कृपोऽप्येष शक्त एकोऽत्र कर्मणि ॥ १०६ ॥
अत्र वीरो विकर्णोऽयमश्वत्थामा तरः परम् ।
कृतान्तोऽपि स्वयं यस्माद्बिभर्ति मनसा दरम् ॥ १०७ ॥

---

आणीकही द्रौपदीकुमरु । हे सकळही महारथी वीरु । मिती नेणिजे अपारु । मीनले असती ॥ २ ॥ आतां आमुच्या दळीं नायक । जे रुढवीर सैनिक । ते प्रसंगें आइक । सांगिजती ॥ ३ ॥ उद्देशें एक दोनी । जाइजती बोलोनी । तुम्ही आदिकरूनी । मुख्य जे जे ॥ ४ ॥ हा भीष्म गंगानंदनु । जो प्रतापतेजस्वी भानु । रिपुगज–पंचाननु । कर्ण वीरु ॥ ५ ॥ या एकेकाचेनि मनोव्यापारें । हें विश्व होय संहरे । या कृपाचार्यु न पुरे । एकलाचि ॥ ६ ॥ एथ विकर्ण वीरु आहे । हा अश्वत्थामा पैल पाहें । याचा अडदरु सदा वाहे । कृतांतु मनीं ॥ ७ ॥

सौमदत्तिश्च सामितिंजयश्च बहवोऽपरे।
येषां धातापि नो वेद बलं कियदिति स्वयम् ॥ १०८ ॥

अन्ये च बहवः शूरा मदर्थे व्यक्तजीविताः।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

निपुणाः शस्त्रविद्यायां येऽस्त्रमन्त्राः शरीरिणः।
अस्त्रजातमिदं रूढं येभ्य एवेति मे मतिः ॥ १०९ ॥
एतेऽप्रतिभटाः सर्वे प्रतापनिधयः स्वयम्।
सर्वात्मना तथाप्यद्य मदीयं पक्षमाश्रिताः ॥ ११० ॥
यथा पतिव्रताचित्तं पत्युरन्यं स्पृशेन्न हि।
तथा सर्वस्वमेतेषां सुभटानामहं द्विज ॥ १११ ॥
जीवितं लघु मन्यन्ते मत्कार्यापेक्षया निजम्।
एवं भक्तिरमर्यादा मय्येषामुत्तमोत्तमा ॥ ११२ ॥
एते युद्धकलाभिज्ञाः कलोपार्जितकीर्तयः।
एभ्य एव प्रवृत्तेत्ति क्षात्त्रनीतिर्विभाति मे ॥ ११३ ॥

---

समितिंजयो सौमदत्ति। ऐसे आणीकही बहुत आहाती। जयांचिया बळाची मिती। धाता ही नेणे ॥ ८ ॥ जे शस्त्रविद्यापारंगत। मंत्रावतार मूर्त। हो का जें अस्त्रजात। एथूनि रूढ ॥ ९ ॥ हे अप्रतिमल्ल जगीं। पुरता प्रतापु अंगीं। परी सर्व प्राणें मजचिलागीं। आराइले असती ॥ ११० ॥ पतिव्रतेचें हृदय जैसें। पतीवांचूनि न स्पर्शे। मी सर्वस्व यां तैसें। सुभटांसी ॥ ११ ॥ आमुचिया काजाचेनि पाडें। देखती आपुलें जीवित थोकडें। ऐसे निरवधि चोखडे। स्वामिभक्त ॥ १२॥ झुंजती कुळकणी जाणती। कळे कीर्तीसी जिती। हें बहु असो क्षात्त्रनीति। एथोनियां ॥ १३ ॥

एवं सर्वाङ्गसम्पूर्णा वीरा अस्मद्बले स्थिताः ।
कथं नु गणयाम्येतान् संख्यातीतानिहाधुना ॥ ११४ ॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥

अपि च क्षत्रियश्रेष्ठे जगज्ज्येष्ठे भटोत्तमे ।
सैनापत्यं मया न्यस्तं भीष्मे भीष्मपराक्रमे ॥ ११५ ॥
तेन पाटवमाश्रित्य व्यूढं सर्वं बलं तथा ।
यथा दुर्ग इवाभाति लघयन् भुवनत्रयम् ॥ ११६ ॥
केवलोऽप्युदधिः कस्य जायते न सुदुस्तरः ।
किं पुनश्चेद्भवेदस्य सहायो वडवानलः ॥ ११७ ॥
प्रलयाग्निमहावातसंयोग इव भाति मे ।
प्रबलानीकगाङ्गेयसेनापतिसमागमः ॥ ११८ ॥
अस्मदीयेन सैन्येन समेतु कः क्षमोऽधुना ।
अत्यल्पं पाण्डवानीकं पश्याम्येतदपेक्षया ॥ ११९ ॥
भीमः प्रथितवैयात्यः सोऽधिष्ठातास्य किं ततः ।
इतीमां वाचमादाय विरराम सुयोधनः ॥ १२० ॥

---

ऐसे सर्वांपरी पुरते । वीर दळीं आमुतें । आतां काय गणूं ययांतें । अपार हे ॥ १४ ॥ वरी क्षत्रियांमाजी श्रेष्ठु । जो जगजेठी जगीं सुभटु । तया दळवैपणाचा पाटु । भीष्मासि पैं ॥ १५ ॥ आतां याचेनि बळें गवसलें । हें दुर्ग जैसें पन्नासिलें । येणें पाडें थेंकुलें । लोकत्रय ॥ १६ ॥ आधींचि समुद्र पाहीं । तेथ दुवाडपण कवणा नाहीं । मग वडवानळु तैसेयाही । विरजा जैसा ॥१७॥ ना तरी प्रलयवह्नि महावातु । या दोघा जैसा सांघातु । तैसा हा गंगासुतु । सेनापति ॥ १८ ॥ आतां येणेंसि कवण भिडे । हें पांडवसैन्य कीर थोकडें । वरिचिलेनि पाडें । दिसत असे ॥ १९ ॥ वरी भीमसेनु बेथु । तो जाहला सेनानाथु । ऐसें बोलोनियां मातु । सांडिली तेणें ॥१२०॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥

ततो दुर्योधनः सर्वान् सेनान्यः पुनरब्रवीत् ।
स्वस्वसैन्यसमूहान् भोः सज्जीकुरुत साम्प्रतम् ॥ १२१ ॥
अक्षौहिण्यश्च या येषामागताः स्यू रणाङ्गणे ।
तत्तन्महारथाधीनास्तैर्विधेया विभज्य ताः ॥ १२२ ॥
महारथैः स्वसैन्येन स्थेयं भीष्मवशेऽखिलैः ।
भवता स्वयमाचार्य कर्तव्यं पर्यवेक्षणम् ॥ १२३ ॥
भीष्म एकोऽभिरक्ष्यो वो द्रष्टव्योऽयमहं यथा ।
अनेनैव बलं सर्वमस्माकं सबलं खलु ॥ १२४ ॥

तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥

अनेन वचसा राज्ञो भीष्मः सेनापतिर्भृशम् ।
संतुतोष च तत्कालं सिंहनादं ननाद च ॥ १२५ ॥
उभयोः सेनयोरन्तः स नादो मातुमक्षमः ।
गगने जनयामास समुत्थाय प्रतिध्वनिम् ॥ १२६ ॥

---

मग पुनरपि काय बोले । सकळ सैनिकांतें म्हणितलें । आतां दळभार आपुलाले । सरसे करा ॥ २१ ॥ जया जिया अक्षौहिणी । तेणें तिया आरणी । वरगण कवणकवणी । महारथिया ॥ २२ ॥ तेणें तिया आवरिजे । भीष्मातळीं राहिजे । द्रोणातें म्हणे पाहिजे । तुम्हीं सकळ ॥ २३ ॥ हाचि एकु रक्षावा । मी तैसा हा देखावा । येणें दळभारु आघवा । साचु आमुचा ॥ २४ ॥ या राजाचिया बोला । सेनापति संतोषला । मग तेणें केला । सिंहनादु ॥ २५ ॥ तो गाजत असे अद्भुतु । दोन्ही सैन्यांआंतु । प्रतिध्वनि न समातु । उपजत असे ॥ २६ ॥

समकालं च तेनैव प्रतिध्वानेन वीर्यवान् ।
दिव्यं शङ्खं निजं दध्मौ भीष्मदेवः स्फुरद्भुजः ॥ १२७ ॥

नादयोरुभयोस्तत्र तदैकीभूतयोस्तयोः ।
त्रैलोक्यं बधिरीभूतं नभः पातोन्मुखं बभौ ॥ १२८ ॥

विरुरावाम्बरं घोरं वार्युच्छलितमम्बुधेः ।
सर्वं संजातसंक्षोभं चकम्पे च चराचरम् ॥ १२९ ॥

महाघोषेण पूर्यन्ते यावत्पर्वतकन्दराः ।
प्रावाद्यन्त वरूथिन्यां रणतूर्याणि सर्वतः ॥ १३० ॥

ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥

वाद्यमानेषु वाद्येषु ध्वनिर्घोरः समुत्थितः ।
महाप्रलयसंकाशो बभौ बलवतामपि ॥ १३१ ॥
ततोऽभिहन्यमानानां काहलानकगोमुख—
भेरीपणववाद्यानां शब्दस्तुमुलतामगात् ॥ १३२ ॥
केचित् संजनयामासुर्भुजनिष्पेषनिस्वनम् ।

---

तयाचि तुलगासवें । वीरवृत्तिचेनि थावें । दिव्य शंख भीष्मदेवें । आस्फुरिला ॥ २७ ॥ ते दोन्ही नाद मीनले । तेथ त्रैलोक्य बधिर जालें । जैसें आकाश का पडिलें । तुटोनियां ॥ २८ ॥ घडघडीत अंबर । उचंबळत सागर । क्षोभलें चराचर । कांपत असे ॥ २९ ॥ तेणें महाघोषगजरें । दुमदुमिताती गिरिकंदरें । तंव दळामाजी रणतुरें । आस्फुरिलीं ॥ १३० ॥ उदंड सैंघ वाजतें । भयानकें खाखातें । महाप्रळयो जेथें । धाकडांसी ॥ ३१ ॥ भेरी निशाण मांदळ । शंख काहळा भोंगळ । आणि भयासुर रणकोल्हाळ । सुभटांचे ॥ ३२ ॥

नामग्राहं चाह्वयन्त वीराः केचित्परस्परम् ।
करिणश्च मदोन्मत्ताः समभूवन्नुच्छृङ्खलाः ॥ १३३ ॥
नैतच्चित्रमुदस्ता यद्वीरवोऽवकरा इव ।
कृतान्तोऽपि भयाक्रान्तोऽमुञ्चदङ्गानि सर्वथा ॥ १३४ ॥
केचित् स्थाने स्थिता एव साध्वसाद् व्यसुतां गताः ।
धीराणां कीलिता दन्ता रणशूराश्चकम्पिरे ॥ १३५ ॥
घोरं तूर्यध्वनिं श्रुत्वा धातापि व्याकुलोऽभवत् ।
देवास्तु मेनिरे नूनं प्रलयोऽयमुपास्थितः ॥ १३६ ॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥

इत्थंभूते च वृत्तान्ते दिवोऽपि सुभयंकरे ।
किं वृत्तं पाण्डवानीके तदिदानीं निशम्यताम् ॥ १३७ ॥

---

आवेशें भुजा त्राहाटिती । विसणैले हांका देती । जेथ महामद भद्रजाती । आवरती ना ॥ ३३ ॥ तेथ भेडांची कवण मातु । काचेया केर फिटतु । जेणें दचकला कृतांतु । आंग नेघे ॥ ३४ ॥ एकां उभेयांचि प्राण गेले । चांगांचे दांत बैसले । बिरुदाचे दादुले । हिंवताती ॥ ३५ ॥ ऐसा अद्भुत तूरबंबाळु । आइकोनि ब्रह्मा व्याकुळु । देव म्हणती प्रळयकाळु । वोढवला आजी ॥ ३६ ॥ ऐसी स्वर्गीं मातु । देखोनि तो आकांतु । तंव पांडव-दळाआंतु । वर्तलें कायी ॥ ३७ ॥

ददृशे स्यन्दनस्तत्र हेमाद्रिरिव पक्षवान् ।
विजयस्य पदं साक्षाद् भाण्डारं नु महाद्युतेः ॥ १३८ ॥

चतुर्भिर्वाजिभिर्युक्तो जवेन गरुडोपमैः ।
व्याश्नुवानो दिशः सर्वा निजतेजोमरीचिभिः ॥ १३९ ॥

यत्र वैकुण्ठनाथोऽभूच्छ्रीकृष्णः सारथिः स्वयम् ।
रथस्य महिमा तस्य केन वर्णयितुं क्षमः ॥ १४० ॥

साक्षाद्रुद्रावतारेणाधिष्ठितो वानरेण यः ।
यत्र गाण्डीविनश्चक्रे सारथ्यं शार्ङ्गपाणिना ॥ १४१ ॥

अहो अत्यद्भुतं प्रेम पार्थे भगवतः प्रभोः ।
यद्वशादमुना तस्य सारथ्यमुररीकृतम् ॥ १४२ ॥

सेवकं पृष्ठतः कृत्वा पुरतस्तिष्ठता स्वयम् ।
सलीलं पाञ्चजन्याख्यः शङ्खो दध्मेऽथ शार्ङ्गिणा ॥ १४३ ॥

शङ्खनादेऽतिगम्भीरे श्रुतमात्रे भयंकरे ।
कर्णमार्गमतिक्रान्ताः सहसा तूर्यनिस्वनाः ॥ १४४ ॥

---

हो का निजसार विजयाचें । कीं तें भांडार महातेजाचें । जेथ गरुडाचिये जावळिचे । कांतले चान्ही ॥ ३८ ॥ कीं पाखांचा मेरु जैसा । रहंवरु मिरवतसे तैसा । तेजें कोंदाटलिया दिशा । जयाचेनि ॥ ३९ ॥ जेथ अश्ववाहकु आपण । वैकुंठींचा राणा जाण । तया रथाचे गुण । काय वर्णूं ॥ १४० ॥ ध्वजस्तंभावरी वानरु । तो मूर्तिमंत शंकरु । सारथी शार्ङ्गधरु । अर्जुनेंसी ॥ ४१ ॥ देखा नवल तया प्रभूचें । अद्भुत प्रेम भक्ताचें । जे सारथ्यपण पार्थाचें । करितु असे ॥ ४२ ॥ पाइकु पाठीसीं घातला । आपण पुढां राहिला ! तेणें पांचजन्यु आस्फुरिला । अवलीळाचि ॥ ४३ ॥ परी तो महाघोषु थोरू । गर्जतु असे गहिरु । जैसा उदेला लोपी दिनकरु । नक्षत्रांतें ॥ ४४ ॥

नक्षत्राणि विलुप्यन्ते यथैवाभ्युदिते रवौ ।
तथा कौरववाद्यानां नादः क्वापि व्यलीयत ॥ १४५ ॥
तद्वदेवाथ तत्कालं दध्मावतिभयानकम् ।
सुघोरनिनदं शङ्खं देवदत्ताख्यमर्जुनः ॥ १४६ ॥
शङ्खनादद्वये तस्मिन्नेकीभूतेऽद्भुते वभौ ।
यदेतद्दीर्यते सर्वं ब्रह्माण्डं शतशोऽधुना ॥ १४७ ॥
एतस्मिन् भीमसेनोऽपि महाकाल इव स्वयम् ।
संक्षुब्धः सन्महाशङ्खमध्मासीत् पौण्ड्रनामकम् ॥ १४८ ॥
तस्मिन्नदति गम्भीरे प्रलयाम्बुदसोदरे ।
अनन्तविजयं नाम शङ्खं दध्मौ युधिष्ठिरः ॥ १४९ ॥
माद्रेयौ दध्मतुः शङ्खौ सुघोषमणिपुष्पकौ ।
यन्नादेनान्तकः साक्षात् संभ्रान्तः समजायत ॥ १५० ॥

काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक् पृथक् ॥ १८ ॥

---

तैसे तूरबंबाळु भंवते । कौरवदळीं गाजत होते । ते हारपोनि नेणों केउते । गेले तेथ ॥ ४५ ॥ तैसाचि देखें येरें । निनादें अतिगहिरें देवदत्त घनुर्धरें । आस्फुरिला ॥ ४६ ॥ ते दोनी शब्द अचाट । मीनले एकवट । तेथ ब्रह्मकटाह शतकूट । हों पाहत असे ॥ ४७ ॥ तंव भीमसेनु विसणैला । जैसा महाकाळु खवळला । तेणें पौंड्र आस्फुरिला । महाशंखु ॥ ४८ ॥ तो महाप्रलयजलधरु । जैसा घडघडिला गहिरु । तंव अनंतविजयो युद्धिष्ठिरु । आस्फुरिता जाला ॥ ४९ ॥ नकुळें सुघोषु । सहदेवें मणिपुष्पकु । जेणें नादें अंतकु । गजबजला ठाके ॥ ५० ॥

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥

द्रुपदो द्रौपदेयाद्यास्तत्र भूपतयोऽभवन् ।
काशीपतिर्महाबाहुः पार्थसूनुः प्रतापवान् ॥ १५१ ॥
अजितः सात्यकिर्धृष्टद्युम्नो भूपवरस्तथा ।
शिखण्डी च विराटश्च सेनामुख्या अथापरे ॥ १५२ ॥
ये ये तत्र समायातास्तत्साहाय्यं चिकीर्षवः ।
ते सर्वेऽपि तदा दध्मुः समं शङ्खान् पृथक् पृथक् ॥ १५३ ॥
तन्महाघोरनिर्घाताच्छेषकूर्मौ भुवो भरम् ।
स्वशिरःस्थं परित्यक्तुमुद्यतौ नु बभूवतुः ॥ १५४ ॥
प्रकम्पितास्त्रयो लोका दोलितौ मेरुमन्दरौ ।
जलमुच्छलितं वेगादाकैलासात्पयोनिधेः ॥ १५५ ॥
जातकम्पेव भूरासीन्नभोऽधःपतनोन्मुखम् ।
नक्षत्राणां ततः सेकः प्रवृत्त इव चावभौ ॥ १५६ ॥
धरित्री प्राप्तसंहारा निराधारा दिवौकसः ।
इत्याक्रन्दितमाकर्णि सत्यलोके समुत्थितम् ॥ १५७ ॥

---

तेथ भूपती होते अनेक । द्रुपद द्रौपदेयादिक । हा काशीपति देख । महाबाहु ॥ ५१ ॥ तेथ अर्जुनाचा सुतु । सात्यकि अपराजितु । धृष्टद्युम्नु नृपनाथु । शिखंडी इन ॥ ५२ ॥ विराटादि नृपवर । जे सैनिकमुख्य वीर । तिहीं नानाशंख निरंतर । आस्फुरिले ॥ ५३ ॥ तेणें महाघोषनिर्घातें । शेषकूर्म अवचितें । गजबजोनि भूभारातें । सांडूं पाहती ॥ ५४ ॥ तेथ तीन्ही लोक डळमळित । मेरुमंदर आंदोळित । समुद्रजळ उसळत । कैलासवेरी ॥ ५५ ॥ पृथ्वीतळ उलथों पहात । आकाश असे आसुडत । तेथ सडा होत । नक्षत्रांचा ॥ ५६ ॥ सृष्टि गेली रे गेली । देवां मोकळवादी जाहली । ऐशी एक टाळी पिटिली । सत्यलोकीं ॥५७॥

दिवैव विरतः सूर्यः प्रलयावसरे यथा ।
प्रवृत्तस्त्रिषु लोकेषु हाहाकारः समन्ततः ॥ १५८ ॥
तदादिपुरुषो वीक्ष्य विस्मितो नादहेतुकम् ।
विध्वंसपरिहाराय लोपयामास संभ्रमम् ॥ १५९ ॥
कृष्णादीनां महाशङ्खनिनदे य उपस्थितः ।
युगान्तो वारितः सोऽभूद्विश्वं च स्थिरतामगात् ॥ १६० ॥
प्रशान्तस्यापि घोषस्य प्रतिध्वनिरभूत्तु यः ।
तेनैव कौरवानीकं दिक्षु विद्रावितं क्षणात् ॥ १६१ ॥
कौरवाणां विभेदासौ हृदयानि प्रतिध्वनिः ।
पञ्चाननो विनायासं वारणानां घटा इव ॥ १६२ ॥
ध्वानिमाकर्ण्य तं केचिदवसन्ना विचुक्रुशुः ।
सावधानाः सावधाना भवतेति परस्परम् ॥ १६३ ॥

अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसंपते धनुरुद्यम्य पाण्डवः ॥ २० ॥

तत्र ये बलशौर्याभ्यां पूर्णा आसन्महारथाः ।
ते समाश्वासयामासुर्भूयोऽपि निखिलं बलम् ॥ १६४ ॥

---

दिहाचि दिन थोकला । जैसा प्रळयकाळ मांडला । तैसा हाहाकारु उठिला । तिहीं लोकीं ॥ ५८ ॥ तंव आदिपुरुष विस्मितु । म्हणे झणें होय अंतु । मग लोपिला अद्भुतु । संभ्रमु तो ॥ ५९ ॥ म्हणोनि विश्व संवरलें । एऱ्हवीं युगान्त होतें वोडवलें । जें महाशंख आस्फुरिले । कृष्णादिकीं ॥ १६० ॥ तो घोष तरी उपसंहरला । परी पडिसाद होता राहिला । तेणें दळभार विध्वंसिला । कौरवांचा ॥ ६१ ॥ जैसा गजघटाआंतु । सिंह लीला विदारितु । तैसा हृदयातें भेदितु । कौरवांचिया ॥ ६२ ॥ तो गाजत जंव आइकती । तंव उभेचि हियें घालिती । एकमेकांतें म्हणती । सावध रे सावध ॥ ६३ ॥ तेथ बळें प्रौढी पुरते । महारथी वीर होते तिहीं पुनरपि दळातें । आवरिलें ॥ ६४ ॥

एवं संचोदिता योधास्त्विषा द्विगुणया तदा ।
चलन्तः क्षोभयामासुस्त्रिलोकीं निजरंहसा ॥ १६५ ॥
वीरैर्धनुर्धरैर्मुक्ताः शरास्तत्र निरन्तरम् ।
प्रलयाम्भोधरैर्धारा इवाभूवन् भयंकराः ॥ १६६ ॥
एतद् दृष्ट्वार्जुनश्चित्ते परां मुदमुपागतः ।
सेनायां दृष्टिमक्षैप्सीत् ससंभ्रमकुतूहलम् ॥ १६७ ॥
कौरवान् सकलान् वीक्ष्य सज्जीभूतान् स सङ्गरे ।
लीलयैवाग्रहीच्चापं सशरं पाण्डुनन्दनः ॥ १६८ ॥

हृषीकेशं तदा वाक्यमिदमाह महीपते ।
अ. उ.-सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥

अब्रवीच्च हृषीकेषं रथं स्थापय मेऽच्युत ।
सेनयोरुभयोर्मध्ये नीत्वा संप्रति सत्वरम् ॥ १६९ ॥

यावदेतान्निरीक्षेऽहं योध्दुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥

क्षणमात्रमहं यावन्निरीक्षिष्ये समन्ततः ।
सकलान्सैनिकान्वीरानेतान् युद्धार्थमागतान् ॥ १७० ॥

---

मग सरिसेपणें उठावले । दुणवटोनि उचलले । तया दंडीं क्षोभलें । लोकत्रय ॥ ६५ ॥ तेथ बाणवरी धनुर्धर । वर्षताती निरंतर । जैसे प्रळयांत जलधर । अनिवार का ॥ ६६ ॥ ते देखलिया अर्जुनें । संतोष घेऊनि मनें । मग संभ्रमें दिठी सेने । घालितसे ॥ ६७ ॥ तंव संग्रामीं सज्ज जाहले । सकळ कौरव देखिले । तंव लीला धनुष्य उचलिलें । पांडुकुमरें ॥ ६८ ॥ ते वेळीं अर्जुन म्हणतसे देवा । आतां झडकरी रथु पेलावा । नेऊनि मध्यें घालावा । दोहीं दळां ॥ ६९ ॥ जंव मी नावेक । हे सकळ वीर सैनिक । न्याहाळीन अशेख । झुंजते जे ॥ १७० ॥

सर्वेऽप्यत्र समायात्रा योद्धव्यं कैः पुनर्मया।
इदं विचारणीयं मे तस्मादेतन्निरीक्षणम् ॥ १७१ ॥
दुःशीला आतुरा एते प्रायशः किल कौरवाः।
विना पराक्रमेणापि मनो बध्नन्ति संयुगे ॥ १७२ ॥
कामं युद्धप्रिया एते न पुनर्धैर्यशालिनः।
इत्युक्त्वा धृतराष्ट्राग्रे संजयः पुनरब्रवीत् ॥ १७३ ॥

संजय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५ ॥
तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान्।
आचार्यान्मातुलान् भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥ २६ ॥
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि।
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥ २७ ॥
कृपया परयाविष्टो विषीदन्निदमब्रवीत्।

पार्थस्येदं वचः श्रुत्वा किं वृत्तं श्रूयतां नृप।
सेनयोरुभयोर्मध्ये कृष्णो रथमतिष्ठिपत् ॥ १७४ ॥

---

एथ आले असती आघवे। परी कवणेंसीं म्यां झुंजावें। हें रणीं लागे पहावें म्हणऊनियां ॥ ७१ ॥ बहुतकरूनि कौरव। हे आतुर दुःस्वभाव। वांटिवेवीण हांव। बांधिती झुंजीं ॥ ७२ ॥ झुंजाची आवडी धरिती। परी संग्रामीं धीर नव्हती। हें सांगोनि रायाप्रती। काय बोले ॥ ७३ ॥ आइका अर्जुन इतुकें बोलिला। तंव श्रीकृष्णें रथु पेलिला। दोन्हीं सैन्यांमाजी केला। उभा तेणें ॥ ७४ ॥

भीष्मद्रोणादयो यत्र संमुखे ज्ञातिवान्धवाः ।
आसन्नन्ये च भूयांसो भूमिपाला अवस्थिताः ॥ १७५ ॥
स्थिरीकृत्य रथं तत्र संभ्रमेण व्यलोकयत् ।
अर्जुनः सकलां सेनां वचनं चेदमब्रवीत् ॥ १७६ ॥
नन्विमान् गोत्रजान् पश्य पश्य देव गुरूनिमान् ।
कृष्णस्याथ क्षणं चित्ते विस्मयेन पदं कृतम् ॥ १७७ ॥
स च स्वगतमाह स्म किं न्वस्य मनसि स्थितम् ।
न ज्ञायते प्रकारस्तु विचित्र इव भाति मे ॥ १७८ ॥
हृदयस्थं हृदिस्थोऽसौ सर्वं जानन्नपि स्वयम् ।
तदानीं नाभ्यधात् किंचिन्मौनमेव समाश्रयत् ॥ १७९ ॥
तदा तत्रार्जुनः सर्वान् पितॄनथ पितामहान् ।
गुरून् बन्धून्मातुलांश्च ददर्श समुपस्थितान् ॥ १८० ॥
इष्टान् सखीन् स्वकीयांश्च कुमारान् सकलानपि ।
समागतान् रणेऽद्राक्षीद्युयुत्सून् जयकाम्यया ॥ १८१ ॥

---

जेथ भीष्मद्रोणादिक । जवळिकेचि सन्मुख । पृथिवीपति आणिक । बहुत आहाती ॥ ७५ ॥ तेथ स्थिर करूनियां रथु । अर्जुन असे पाहातु । तो दळभार समस्तु । संभ्रमेंसीं ॥ ७६ ॥ मग देवा म्हणे देख देख । हे गोत्रगुरु अशेख । तंव कृष्णमनीं नावेक । विस्मो जाहला ॥ ७७ ॥ तो आपणयां आपण म्हणे । एथ कायी कवण जाणे । हें मनीं धरिलें येणें । परि कांहीं आश्चर्य असे ॥ ७८ ॥ ऐसी पुढील से घेतु । तो सहज जाणे हृदयस्थु । परि उगा असे निवांतु । तिये वेळीं ॥ ७९ ॥ तंव तेथ पार्थ सकळ । पितृपितामह केवळ । गुरू बंधु मातुळ । देखता जाहला ॥ १८० ॥ इष्टमित्र आपुले । कुमरजन देखिले । स्याळक असती आले । तयांमाजीं ॥ ८१ ॥

सुहृदः श्वशुरानन्यांस्तांस्तान् सम्बन्धिनोऽपि च ।
पौत्रांश्चापश्यदायातांस्तत्र पार्थो धनुर्धरः ॥ १८२ ॥
ये पूर्वोपकृता आसन् रक्षिता येऽथ वापदि ।
ये ज्येष्ठा ये कनिष्ठा ये तैः समस्तैः समन्विताः ॥ १८३ ॥
गोत्रजाः स्वे संगरार्थं सेनयोरुभयोरपि ।
समुद्यता दृशोर्मार्गमर्जुनस्याययुस्तदा ॥ १८४ ॥
तेन संभ्रान्तचित्तं तं करुणा स्वयमभ्यभूत् ।
तया तथाभिभूतं च वीरवृत्तिरुपाजहात् ॥ १८५ ॥
अङ्गनाः सुकुलीना या गुणलावण्यसंयुताः ।
तास्तेजास्वितया नान्यां सहन्ते हि समुन्नताम् ॥ १८६ ॥
रुचिं विभ्रन्नवीनाया वनितां स्वामुपेक्षते ।
कामुको भजते भ्रान्तस्तां चानर्हां गुणैरपि ॥ १८७ ॥
ऋद्धिं तपोबलात् प्राप्य बुद्धिभ्रंशमुपैति यः ।
हा हा विरक्ततासिद्धिस्तेन विस्मर्यतेऽखिला ॥ १८८ ॥

---

सुहृज्जन सासरे । आणीकही सखे सोइरे । कुमर पौत्र धनुर्धरें । देखिले तेथे ॥ ८२ ॥ जयां उपकार होते केले । कीं आपदीं जे रक्षिले । हे असो वडील धाकुले । आदिकरुनी ॥ ८३ ॥ ऐसें गोत्रचि दोहीं दळीं । उदित जालें असे कळी । हें अर्जुनें तिये वेळीं । अवलोकिलें ॥ ८४ ॥ तेथ मनीं गजबज जाहाली । आणि आपैसी कृपा आली । तेणें अपमानें निघाली । वीरवृत्ति ॥ ८५ ॥ जिया उत्तम कुळींचिया होती । आणि गुणलावण्य आथी । तिया आणिकीतें न साहती । सुतेजपणें ॥ ८६ ॥ नविये आवडीचेनि भरें । कामुक निज वनिता विसरे । मग पाडेंवीण अनुसरे । भ्रमला जैसा ॥ ८७ ॥ कीं तपोबळें ऋद्धी । पातलिया भ्रंशे बुद्धि । मग तया विरक्तासिद्धि । आठवेना ॥ ८८ ॥

तदानीमर्जुनस्यापि तादृश्येव दशाभवत् ।
तच्चित्तं करुणाक्रान्तं तत्रस्था वीरतात्यजत् ॥ १८९ ॥
लुप्तमन्त्राक्षरो मन्त्रव्याहृतौ मान्त्रिको यथा ।
तथा रणोद्यतः पार्थो मोहेन व्याकुलोऽभवत् ॥ १९० ॥
यथा चन्द्रकलास्पृष्टश्चन्द्रकान्ताभिधो मणिः ।
अर्जुनः कृपयाविष्टो लुप्तधैर्यस्तथाद्रवत् ॥ १९१ ॥
एवं संजातकारुण्यः सुतरां खिन्नमानसः ।
तदानीं मोहमापन्नो जिष्णुरच्युतमब्रवीत् ॥ १९२ ॥

अर्जुन उवाच—

दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८ ॥
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥
गाण्डीवं स्रंसते हस्तात् त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३० ॥

निपुणं वीक्षिता एते मयात्र मिलिता जनाः ।
परं सम्बन्धिनः सर्वे प्रायेण मम गोत्रजाः ॥ १९३ ॥
कामं युयुत्सवः सन्तः संग्रामभुवमागताः ।
कथमेतैर्नु योद्धव्यं मया युद्धोद्यतैरपि ॥ १९४ ॥

---

तैसें अर्जुना तेथ जाहलें । असतें पुरुषत्व गेलें । जें अंतःकरण दिधलें । कारुण्यासीं ॥ ८९ ॥ देखा मंत्रज्ञ बरळु जाये । मग तेथ कां जैसा संचारु होये । तैसा तो धनुर्धर महामोहें । आकळिला ॥१९०॥ म्हणऊनि असता । धीरु गेला । हृदया द्रावो आला । जैसा चंद्रकळा शिवतला । सोमकांतु ॥ ९१ ॥ तयापरी पार्थु । अतिस्नेहें मोहितु । मग सखेद असे बोलतु श्रीअच्युतेंसीं ॥ ९२ ॥ तो म्हणे अवधारीं देवा । म्यां पाहिला हा मेळावा । तंव गोत्रवर्गु आघवा । देखिला एथ ॥ ९३ ॥ हे संग्रामीं उदित । जहाले असती कीर समस्त । पण आपणपेयां उचित । केवीं होय ॥९४॥

नास्त्यैव किल युद्धस्य दिङ्मोहमहमागतः ।
आत्मानं नात्मना जाने मनो बुद्धिश्च न स्थिरे ॥ १९५ ॥
कम्पं गृह्णाति मे काय आननं पश्य शुष्यति ।
तथा गात्रेषु सर्वेषु वैकल्यमुपजायते ॥ १९६ ॥
तनौ रोमाणि हृष्यन्ति चित्तं संतप्यते मम ।
करः शिथिलतामेति गाण्डीवं बिभ्रतो धनुः ॥ १९७ ॥
कदा स्रस्तमिदं हस्तादितीदं विदितं न मे ।
एवं मोहेन मे व्याप्तं हृदयं किल सर्वशः ॥ १९८ ॥
वज्रादपि कठोरं यद् दुर्धरं चातिदारुणम् ।
प्रहारः स्नेहशस्त्रस्य तस्यासामान्य एव हि ॥ १९९ ॥
हरः साक्षाज्जितो येन निवातकवचा हताः ।
स स्नेहरक्षसा पार्थः क्षणेन कवलीकृतः ॥ २०० ॥
भिनत्ति लीलया भृङ्गो दारु शुष्कं यदिच्छति ।
रुद्धस्तु न क्षमो भेत्तुं कलिकां कोमलामपि ॥ २०१ ॥

---

येणें नांवेंचि नेणों कायी । मज आपणपें सर्वथा नाहीं । मनोबुद्धी ठायीं । स्थिर नोहे ॥ ९५ ॥ देखें देह कापत । तोंड असे कोरडें होत । विकळता उपजत । गात्रांसीही ॥ ९६ ॥ सर्वांगा कांटाळा आला । अतिसंतापु उपनला । तेथें बेंबळ हातु गेला । गांडीवाचा ॥ ९७ ॥ तें न धरतचि निष्टलें । परि नेणेंचि हातोनि पडिलें । ऐसें हृदय असे व्यापिलें । मोहें येणें ॥ ९८ ॥ जें वज्रापासोनि कठिण । दुर्धर अतिदारुण । तयाहून असाधारण । हें स्नेह नवल ॥ ९९ ॥ जेणें संग्रामीं हरु जिंतिला । निवातकवचांचा ठावो फेडिला । तो अर्जुन मोहेंकवाळिला । क्षणामाजीं ॥ २०० ॥ जैसा भ्रमर भेदी कोडें । भलतैसें काष्ट कोरडें । परि कळिकेमाजीं सांपडे । कोंवळिये ॥ १ ॥

तत्रस्थो व्यसुतां यायान्न दलं दलयेत्पुनः ।
कठिनः कोमलत्वेन स्नेहबन्धोऽयमीक्ष्यताम् ॥ २०२ ॥
मायादिपुरुषस्येयं दुर्वारा वेधसापि या ।
स्नेहरूपानया पार्थोऽप्यत एवाकुलोऽभवत् ॥ २०३ ॥
एवं राजन्नर्जुनस्य पश्यतः स्वजनान् पुरः ।
हृदयान्निरयाद्युद्धाभिमानः सहजोऽखिलः ॥ २०४ ॥
कुतोऽपि करुणाक्रान्तो रणे तत्र धनंजयः ।
व्याजहार तदा कृष्णं स्थातुं नोऽत्र न युज्यते ॥ २०५ ॥
अत्र सर्वेऽप्यमी वध्या इति धीर्मम मानसम् ।
व्याकुलीकुरुते कृष्ण वाचं स्खलयतीव मे ॥ २०६ ॥

निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१ ॥

कौरवाश्चेदमी वध्या न किं धर्मादयस्ततः ।
सगोत्रत्वं हि सर्वेषामस्त्यस्माकं परस्परम् ॥ २०७ ॥
धिक् संग्राममिमं तस्मान्नायं हि प्रीतये मम ।
महापातकमेवेदं किमर्थं क्रियतां मया ॥ २०८ ॥

---

तेथ उत्तीर्ण होईल प्राणें । परि तें कमळदळ चिरूं नेणे । तैसें कठिण कोवळेंपणें । स्नेह देखा ॥ २ ॥ हे आदिपुरुषाची माया । ब्रह्मयाही नयेचि आया । म्हणवूनि भुलविला ऐकें राया । संजयो म्हणे ॥ ३ ॥ अवधारीं मग तो अर्जुनु । देखोनि सकळ स्वजनु । विसरला अभिमानु । संग्रामींचा ॥४॥ कैसी नेणों सदयता । उपनली तेथें चित्ता । मग म्हणे कृष्णा आतां । नसिजे एथ ॥५॥ माझें अतिशयें मन व्याकुळ । होतसे वाचा बरळ । जे वधावे हे सकळ । येणें नांवें ॥ ६ ॥ या कौरवां जरी वधावें । तरी युद्धिष्टिरादिकां कां न वधावें । हे येरयेर आघवे । गोत्रज आमुचे ॥ ७ ॥ म्हणोनि जळो हें झुंज । प्रत्यया नये मज । एणें काय काज । महापापें ॥ ८ ॥

अहो विचार्यमाणेऽत्र रणोऽनर्थाय केवलम् ।
परिहारोऽस्य जायेत किमपि श्रेयसे पुनः ॥ २०९ ॥

न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२ ॥
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥

प्राप्तेन विजयेनैवं न मे कार्यं मनागपि ।
एवं चाधिगतेनापि किं राज्येन करोम्यहम् ॥ २१० ॥
हत्वैवेमान् रणे सर्वान्भोक्ष्यन्ते ये ततो मया ।
धिक् तान्भोगानभोगार्हान्मा रतिर्मेऽत्र जायताम् ॥ २११ ॥
विनानेन सुखेनैव योऽनर्थ उपनंस्यति ।
दुःसहोऽपि स सह्येत त्यज्येतापि च जीवितम् ॥ २१२ ॥
न पुनः शक्यते कर्तुं स्वप्नेऽपि मनसा मया ।
गोत्रजानां वधोऽमीषां राज्यस्वीकरणं ततः ॥ २१३ ॥
अमीषामहितं चिन्त्यं गुरूणां यदि चेतसा ।
तदा किं जन्मनास्माकं कृते केषां नु जीव्यताम् ॥ २१४ ॥

---

देवा बहुतांपरी पाहतां । एथ वोखटें होईल झुंजतां । वर कांहीं चुकवितां । लाभु आथी ॥ २०९ ॥ तया विजयवृत्ती कांहीं । मज सर्वथा काज नाहीं । एथ राज्य तरी कायी । पावोनियां ॥ २१० ॥ या सकळांतें वधावें । मग जे भोग भोगावे । ते जळोत आघवे । पार्थु म्हणे ॥ २११ ॥ तेणें सुखेंवीण होईल । तें भलतैसें साहिजेल । वरी जीवितही वेंचिजेल । याचिलागीं ॥ २१२ ॥ परी यांसी घातु कीजे । मग आपण राज्यसुख भोगिजे । हें स्वप्नींही मन माझें । करूं न शके ॥२१३॥ तरी आम्हीं कां जन्मावें । कवणालागीं जियावें । जरी वडिलां यां चिंतावें । विरुद्ध मनें॥२१४॥

इदमेवाभिसंधाय किं कुलं पुत्रमीप्सति।
यदनेन समुन्मूल्याः केवलं गोत्रजा निजाः ॥ २१५ ॥
वज्रनिष्ठुर एषु स्यामिति चिन्तापि नोचिता।
प्रत्युतैषां हितं कार्यं यावच्छक्यं न किं मया ॥ २१६ ॥
गोत्रजा भोक्तुमर्हन्ति यद्यदस्मदुपार्जितम्।
अपि चैषां कृतेऽस्माभिस्त्यक्तव्यमपि जीवितम् ॥ २१७ ॥
नानादिग्देशभूपालाञ्जित्वास्माभिर्निजं कुलम्।
सकलं यशसा स्वेन संतोष्यं धर्म एष नः ॥ २१८ ॥
प्रातिकूल्यात्तु दैवस्य त एव किल गोत्रजाः।
पश्य संप्रत्यमी सर्वेऽप्यस्माभिर्योद्धुमुद्यताः ॥२१९ ॥
एतैस्त्यक्ताः सुता दारा धनानि च युयुत्सुभिः।
आरोपितं कृपाणस्य धारां च निजजीवितम् ॥ २२० ॥
एवं गतान् कथं हन्यां प्रहरेयं नु कं जनम्।
एतान् घ्नता मया स्वस्य हृदो घातः कृतो भवेत् ॥ २२१ ॥

आचार्याः पितरः पुत्रास्तथैव च पितामहाः।
मातुलाः श्वशुराः पौत्राः श्यालाः संबन्धिनस्तथा ॥ ३४ ॥

---

पुत्रातें इच्छी कुळ। तयाचें कायि हेंचि फळ। जे निर्दाळिजे केवळ। गोत्र आपुलें ॥ २१५ ॥ हें मनींचि केविं धरिजे। आपण वज्राचे यां होइजे। वरी घडे तरी कीजे। भलें इयां ॥२१६॥ आम्हीं जें जें जोडावें। तें समस्तीं इहीं भोगावें। हें जीवितही उपकारावें। काजीं यांच्या॥२१७॥ आम्हीं दिगंतींचे भूपाळ। विभांडूनि सकळ। मग संतोषविजे कुळ। आपुलें जें ॥ २१८ ॥ तेचि हे समस्त। परि कैसें कर्म विपरीत। जे जाहले असती उद्यत। झुंजावया ॥ २१९ ॥ अंतोरिया कुमरें। सांडोनियां भांडारें। शस्त्राग्रीं जिव्हारें। आरोपुनी ॥ २२० ॥ ऐसियांतें कैसेनि मारूं। कवणावरी शस्त्र धरूं। निजहृदया करूं। घातु केवीं ॥ २२१ ॥

केऽमी इति न किं वेत्सि भीष्मद्रोणावमू पुरः।
अद्य यावत्किलास्माकं याभ्यामुपकृतं बहु ॥ २२२ ॥
श्वशुरा मातुला श्याला बान्धवाः सकला इह।
पुत्राः पौत्रास्तथेष्टाश्च सर्वे संबन्धिनो जनाः ॥ २२३ ॥
अस्माकं सुप्रिया एते वधं नार्हन्ति नः करात्।
वधस्य च कथाप्येषां महान्तं दोषमावहेत् ॥ २२४ ॥

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ३५ ॥

भवन्त्वनुचिताचारा हन्तारो वापि सन्तु नः।
चिन्तनीयस्तु नैतेषां घातोऽस्माभिर्घ्नतामपि ॥ २२५ ॥
त्रैलोक्यस्यापि चेद्राज्यं निष्कण्टकमवाप्नुयाम्।
नाचरेयमिदं कर्म सर्वथानुचितं मम ॥ २२६ ॥
एवं चानुचिताचारान् को न्वस्मान्मानयिष्यति।
तवैव च कथं कृष्ण शक्ष्यते द्रष्टमाननम् ॥ २२७ ॥

निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥ ३६ ॥

---

हे नेणसी तूं कवण । परी पैल भीष्म द्रोण । जयांचे उपकार असाधारण । आम्हां बहुत ॥ २२२ ॥ एथ शालक सासरे मातुळ । आणि बंधु कीं हे सकळ । पुत्र नातू केवळ । इष्टही असती ॥ २२३ ॥ अवधारीं अति जवाळिकेचे । हे सकळही सोयरे आमुचे । म्हणोनि दोष आथी वाचे । बोलतांचि ॥ २२४ ॥ हे वरी भलतें करितु । आतांचि एथें मारितु । परी आपण मनें घातु । न चिंतावा ॥ २२५ ॥ त्रैलोक्यींचें अनकाळित । जरी राज्य होईल प्राप्त। तरी हें अनुचित । नाचरें मी॥२२६॥ जरी आजि एथ ऐसें कीजे । तरी कवणाच्या मनीं उरिजे । सांगें मुख केवीं पाहिजे । तुझें कृष्णा ॥ २२७ ॥

गोत्रजानां वधेऽहं स्यां सर्वदोषानिकेतनम् ।
येन मां बद्धमैत्रीकं त्यक्त्वा दूरं गमिष्यसि ॥ २२८ ॥

कृते कुलक्षये तैस्तैः पातकैर्लिप्यते यदा ।
तदा क्षमेत कः कुत्र त्वां गवेषयितुं नरः ॥ २२९ ॥

उद्याने दहनं दृष्ट्वा संचरन्तमितस्ततः ।
कोकिलो न स्थितिं धत्ते तत्र क्षणमपि क्वचित् ॥ २३० ॥

सरः सकर्दमं वीक्ष्य चकोरो न विषेवते ।
अनादृत्यैव तत्तस्मादन्यतः संप्रतिष्ठते ॥ २३१ ॥

तथैव क्षीणपुण्यं मां वञ्चयित्वा स्वमायया ।
परित्यक्ष्यसि गोविन्द न मामभ्युपपत्स्यसे ॥ २३२ ॥

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥

तस्मान्नेदं मया कार्यं शस्त्रं धार्यं न संगरे ।
जुगुप्सितमिदं कर्म भूयसा प्रतिभाति मे ॥ २३३ ॥

---

जरी वधु करूनि गोत्रजांचा । तरी वसौटा होऊनि दोषांचा । मज जोडिलासि तूं हातींचा । दूर होसि ॥ २२८ ॥ कुळहरणीं पातकें । तियें आंगीं जडती अशेखें । तये वेळीं तूं कवणें कें । देखावासी ॥ २२९ ॥ जैसा उद्यानामाजीं अनळु । संचरला देखोनि प्रबळु । मग क्षणभरी कोकिळु । स्थिर नोहे । ॥ २३० ॥ सकर्दम सरोवरु । अवलोकूनि चकोरु । न सेवितु अव्हेरु । करूनि निघे ॥ २३१ ॥ तयापरी तूं देवा । मज झकऊन न येसी मावा । जरी पुण्याचा वोलावा । नाशिजैल ॥ २३२ ॥ म्हणोनि मी हें न करीं । इये संग्रामीं शस्त्र न धरीं । हें किडाळ बहुतीं परी । दिसतसे ॥ २३३ ॥

सान्तरायस्त्वया सङ्गो यद्यस्माकं भविष्यति ।
नामशेषा भविष्यामो हृदयं नः स्फुटिष्यति ॥ २३४ ॥
अतो वार्तापि मास्त्वेषा यद्धत्वा कौरवान्वयम् ।
भोगान्भोक्ष्यामहे कृष्ण नेदं जातु भविष्यति ॥ २३५ ॥

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥

कामं मानमदोन्मत्ता एते युद्धार्थमागताः ।
अस्माभिर्न कथं ज्ञेयं वद स्वहितमात्मनः ॥ २३६ ॥
कथमेतन्न कर्तव्यं हन्तव्या यत्स्वकाः स्वयम् ।
ननु जानद्भिरासेव्यं कालकूटं कथं न्विदम् ॥ २३७ ॥
पथा चेद्गच्छतः सिंहः सहसाभिमुखीभवेत् ।
तं प्रलोभ्यैव गन्तव्यं तेनेति श्रेयसे न किम् ॥ २३८ ॥
सन्तं प्रकाशमुज्झित्वा योऽन्धकूपं निषेवते ।
तस्य कस्तेन लाभः स्यादिति कृष्णाभिधीयताम् ॥ २३९ ॥

---

तुजसीं अंतराय होईल । मग सांगें आम्हुचें काय उरेल । तेणें दुःखें हियें फुटेल । तुजवीण कृष्णा ॥ २३४ ॥ म्हणऊनि कौरव हे वधिजती। मग आम्हीं भोग भोगिजती । हे असो मात अघडती । अर्जुन म्हणे ॥ २३५ ॥ हे अभिमानमदें भुलले । जरी पां संग्रामा आले । तऱ्हीं आम्हां हित आपुलें । जाणावें लागे ॥ २३६ ॥ हें ऐसें कैसें करावें । जे आपुले आपण मारावे । जाणत जाणतांचि सेवावें । कालकूट ॥ २३७ ॥ हां जी मार्गीं चालतां । पुढां सिंह जाहला अवचितां । तो तंव चुकवितां । लाभु आथी ॥ २३८ ॥ असता प्रकाशु सांडावा । मग अंधकूप आश्रावा । तरी तेथ कवणु देवा । लाभु सांगें ॥ २३९ ॥

अग्रे ज्वलनमालोक्य योऽपहाय न गच्छति ।
स क्षणेनावृतोऽनेन समन्ताद्दह्यतेतराम् ॥ २४० ॥

तथा दोषानमून्मूर्तान्प्रपश्यद्भिरुपस्थितान् ।
कथं प्रवृत्तिरस्माभिः कर्तव्यात्र कुकर्मणि ॥ २४१ ॥

इयतीं वाचमादाय पार्थः श्रीकृष्णमभ्यधात् ।
गुरुता कल्मषस्यास्य कियती कथयामि ते ॥ २४२ ॥

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥

काष्ठेन मथितात्काष्ठाज्जायमानोऽनलः किल ।
स्वयं प्रज्वलितो भूत्वा काष्ठजातं विनिर्दहेत् ॥ २४३ ॥

तथा चेन्मत्सरग्रस्तैः परस्परवधः कृतः ।
कल्पेत कुलनाशाय स दोषैरतिदारुणैः ॥ २४४ ॥
कुलधर्मस्य लोपः स्यात् संप्रवृत्ते कुलक्षये ।
धर्मलोपे पदं कुर्यात्सर्वत्राधर्म एव च ॥ २४५ ॥

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥

---

कां समोर अग्नि देखोनी । जरी न वचिजे वोसंडोनी । तरी क्षणीं एका कवळुनी । जाळूं सके ॥ २४० ॥ तैसे दोष हे मूर्त । अंगीं वाजों असती पाहात । हें जाणतांही केवीं एथ । प्रवर्तावें ॥ २४१ ॥ ऐसे पार्थ तिये अवसरीं । म्हणे देवा अवधारीं । या कल्मषाची थोरी । सांगेन तुज॥२४२॥ जैसें काष्ठें काष्ठ मथिजे । तेथ वह्नि एक उपजे । तेणें काष्ठजात जाळिजे । प्रज्वळलेनि ॥ २४३ ॥ तैसा गोत्रींचि परस्परें । जरी वधु घडे मत्सरें । तरी तेणें महादोषें घोरें । कुळचि नाशे ॥ २४४ ॥ म्हणवूनि एणें पापें वंशजधर्मु लोपे । मग अधर्मुचि आरोपे । कुळामाजीं ॥ २४५ ॥

क आचारः शुभः कश्चाशुभोऽस्तीति न चिन्त्यते।
विधयश्च निषेधाश्च नावेक्ष्यन्ते च कैरपि ॥ २४६ ॥
दीपं निर्वाप्य पार्श्वस्थं तिमिरे संचरन् यथा।
ऋजुं प्राप्यापि पन्थानं भवत्येव स्खलद्गतिः ॥ २४७ ॥
तथा कुलक्षयान्नष्टे कुलधर्मेऽत्र मानवैः।
पातकव्यतिरेकेण किमन्यदधिगम्यते ॥ २४८ ॥
अहो निवृत्तचारेषु यमेषु नियमेषु च।
व्यभिचारः कुलस्त्रीषु स्वैरत्वात्संप्रवर्तते ॥ २४९ ॥
उत्तमाधमसंयोगाज्जायते वर्णसंकरः।
ज्ञातिधर्माश्च तेनैव भवन्त्युन्मूलिता इह ॥ २५० ॥
आपतन्ति यथा काका चत्वरे स्थापितं बलिम्।
सर्वतः स्वैरमेनांसि तथैव कुलमीदृशम् ॥ २५१ ॥

संकरो नरकायैव कुलघ्नानां कुलस्य च।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥

ततः कुलमशेषं तत्तथा च कुलघातकाः।
सर्वेऽपि नरकं यान्ति गतिरन्या न विद्यते ॥ २५२ ॥

---

एथ सारासार विचारावें। कवणें काय आचरावें आणि विधिनिषेध आघवे। पारुषती ॥ २४६ ॥ असता दीपु दवडिजे। मग अंधकारीं राहाटिजे। तरी उजूचि आडळिजे। जयापरी ॥ २४७ ॥ तैसा कुळीं कुळक्षयो होये। तये वेळीं तो आद्यधर्मु जाये। मग आन कांहीं आहे। पापावांचुनी ॥ २४८ ॥ जैं यमनियम ठाकती। तेथ इन्द्रियें सैरा राहाटती। म्हणऊनि व्यभिचार घडती। कुळस्त्रियांसी ॥ २४९ ॥ उत्तम अधमीं संचरती। ऐसे वर्णावर्ण मिसळती। तेथ समूळ उपडती। जातिधर्म ॥ २५० ॥ जैसी चोहटांचिये बळी। पाविजे सैरा काउळीं। तैसीं महापापें कुळीं। प्रवेशती ॥ २५१ ॥ मग कुळा तया अशेखा। आणि कुळघातकां। येरयेरां नरका। जाणें आथि ॥ २५२ ॥

पतिते वंशविस्तारे समस्तेऽप्येवमेव च ।
पतन्ति पितरो ह्येषां स्वर्गस्थाः स्वयमेव हि ॥ २५३ ॥
विरामं यत्र गच्छन्ति नित्यनैमित्तिकाः क्रियाः ।
तिलोदकं कुले तस्मिन् कः कदा कस्य निर्वपेत् ॥ २५४ ॥
एवं गते विधेयं किं वस्तव्यं च कथं दिवि ।
अतस्तेऽपि समयान्ति स्वर्गतः स्वकुलं प्रति ॥ २५५ ॥
अहेर्दंशो नखाग्रेऽपि शिखान्तं देहमश्नुते ।
तथा दोषोऽयमुत्पन्नः कुलमाब्रह्म सत्वरम् ॥ २५६ ॥

दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ४३ ॥
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४४ ॥
अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४६ ॥

इदमन्यन्महापापं घटतेऽत्र जनार्दन ।
यदस्मात्सङ्गजाद्दोषाल्लोकाचारः प्रणश्यति ॥ २५७ ॥
स्वकीये भवनेऽकस्मात्प्रोद्दीप्ते ज्वलनो ज्वलन् ।
परेषामपि गेहानि निर्दहत्येव सङ्गतः ॥ २५८ ॥

---

देखें वंशवृद्धि समस्त । यापरी होय पतित । मग वोवांडिती स्वर्गस्थ पूर्वपुरुष ॥ २५३ ॥ जेथ नित्यादि क्रिया ठाके । आणि नैमित्तिक क्रिया पारुखे । तेथ कवणा तिळोदकें । कवण अर्पी ॥ २५४ ॥ तरी पितर काय करिती । कैसेनि स्वर्गी वसती । म्हणोनि तेही येती । कुळापासीं ॥२५५॥ जैसा नखाग्रीं व्याळु लागे । तो शिखांत व्यापी वेगें । तेवीं आब्रह्म कुळ अवघें । आप्लविजे ॥ २५६ ॥ देवा अवधारीं आणीक एक । एथ घडे महापातक । जे संगदोषें हा लौकिक । भ्रंशु पावे ॥ २५७ ॥ जैसा घरीं आपुला। वनविखें अग्नि लागला । तो आणिकांही प्रज्वाळिला । जाळूनि घाली ॥२५८॥

तथा संसर्गदोषस्तान्बाधते सकलानपि।
ये ये कुलेन दुष्टेन संसृज्यन्ते यदृच्छया ॥ २५९ ॥
एवं तैस्तैः कुलं दुष्टं दोषैरच्युत केवलम्।
महाभयानकं भुङ्क्ते निरयं नात्र संशयः ॥ २६० ॥
नरके पतितस्यास्य कल्पान्तेऽपि न निर्गमः।
कुलक्षयकृतः पात ईदृशोऽस्त्यर्जुनोऽब्रवीत् ॥ २६१ ॥
कृष्णैतान्विविधान्दोषाञ् शृण्वतोऽपि न जायते।
कथं हृदि जुगुप्सा ते वज्रसारामिदं नु किम् ॥ २६२ ॥

इदं पद्यं प्रकारान्तरेणानुवदितुं शक्यम्। तद्यथा—

कृष्णैतान्विविधान्दोषाञ् शृण्वतामपि नः कथम्।
हृदये न जुगुप्सा स्याद्वज्रसारमिदं नु किम् ॥ २६२ ॥

कायोऽपि क्षणिको यस्य कृते राज्यमपेक्ष्यते।
इति जानद्भिरस्माभिर्दोषा हेया अमी न किम् ॥ २६३ ॥
इदमेव लघीयः किं पापमस्मानुपस्थितम्।
यदमी गुरवः सर्वे मया दृष्टा जिघांसया ॥ २६४ ॥

---

तैसिया तया कुळसंगती। जे जे लोक वर्तती। तेही बाधा पावती। निमित्तें येणें ॥ २५९ ॥ तैसें नानादोषीं सकळ। अर्जुन म्हणे तें कुळ। मग महाघोर केवळ। निरय भोगी ॥ २६० ॥ पडिलिया तिये ठायीं। मग कल्पांतींही उकलु नाहीं। येसणें पतन कुळक्षयीं। अर्जुन म्हणे ॥ २६१ ॥ देवा हें विविध कानीं ऐकिजे। परी अझुनिवरी त्रासु नुपजे। हृदय वज्राचें हें काय कीजे। अवधारीं पां ॥ २६२ ॥ अपेक्षिजे राज्यसुख। जयालागीं तें तंव क्षणिक। ऐसें जाणतांही दोख। अव्हेरूं ना ॥ २६३ ॥ जे हे वडिल सकळ आपुले। वधावया दिठी सूदले। सांग पां काइ येकुलें। घडलें आम्हां ॥ २६४ ॥

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥

वरमेषां शराः सोढा अस्माभिर्न्यस्तशस्त्रकैः ।
न तु कृत्वेदृशं कर्म जीव्यते निन्द्यजीवितम् ॥ २६५ ॥
एवं ह्युपनमेद्यावद्दुःखं मरणमेव वा ।
सोढव्यं न पुनः कार्यं कल्मषेणेदृशेन मे ॥ २६६ ॥
सर्वं कुलमवेक्ष्यैवमर्जुनो वाक्यमब्रवीत् ।
हत्वेमान् राज्यलाभो यो निरयप्राप्तिरेव सा ॥ २६७ ॥

संजय उवाच—

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४७ ॥

संजयोऽब्रूत राजानं धृतराष्ट्रमिदं वचः ।
शृणु राजन् रणे पार्थस्तदानीमिवमभ्यधात् ॥ २६८ ॥
ततोऽत्यन्तं समुद्विग्नो वाष्पं संरोध्दुमक्षमः ।
अवप्लुत्य रथोपस्थ उपविष्टो धनंजयः ॥ १६९ ॥
दृश्यते वा यथा कश्चिद्राजपुत्रः पदच्युतः ।
सर्वथोपहतो राहुग्रस्तो वा निष्प्रभो रविः ॥ २७० ॥

---

आतां यावरी जें जियावें । तयापासून हें बरवें । जे शस्त्रें सांडूनि साहावे । बाण यांचे ॥ २६५ ॥ इयावरी होय जितुकें । तें मरणही वरी निकें । परी येणें कल्मषें । चाड नाहीं ॥ २६६ ॥ ऐसें देखूनि सकळ । अर्जुनें आपुलें कुळ । मग म्हणे राज्य तें केवळ । निरयभोग ॥ २६७ ॥ ऐसें तिये अवसरीं । अर्जुन बोलिला समरीं । संजयो म्हणे अवधारीं । धृतराष्ट्रातें ॥ २६८ ॥ मग अत्यंत उद्वेगाला । न धरत गहिंवरु आला । तेथ उडी घातली खालां । रथौनियां ॥ २६९ ॥ जैसा राजकुमरु पदच्युतु । सर्वथा होय उपहतु । कां रवि राहुग्रस्तु । प्रभाहीनु ॥ २७० ॥

तापसो वा महासिद्धिसंभ्रमेण विमोहितः
कामाहतस्तपोभ्रष्टो निस्तेजा दीनतां गतः ॥ २७१ ॥
तथा धनुर्धरः पार्थो नितान्तं दुःखजर्जरः ।
बभौ स्वासनमुज्झित्वा रथोपस्थे कृतस्थितिः ॥ २७२ ॥
व्यसृजत्सशरं चापमभूच्चोद्बाष्पलोचनः ।
शृणु राजन्निदं वृत्तं तत्रेत्यब्रूत संजयः ॥ २७३ ॥
अथ वैकुण्ठनाथेन फाल्गुनः खिन्नमानसः ।
परमार्थं कथं नाम तत्त्वतो बोधयिष्यते ॥ २७४ ॥
कुतूहलमयी वार्ता श्रोतव्यैषा सविस्तरम् ।
इति निवृत्तिनाथस्य दासोऽयमभिभाषते ॥ २७५ ॥

---

ना तरी महासिद्धिसंभ्रमें । जिंतला तापसु भ्रमें । मग आकळूनि कामें । दीनु कीजे ॥ २७१ ॥ तैसा तो धनुर्धरु । अत्यंत दुःखें जर्जरु । दिसे जेथ रहंवरु । त्यजिला तेणें ॥ २७२ ॥ मग धनुष्य बाण सांडिले । न धरत अश्रुपात आले । ऐसें ऐक राया वर्तलें । संजयो म्हणे ॥ २७३ ॥ आतां यावरी तो वैकुंठनाथु । देखोनि सखेद पार्थु । कवणेपरी परमार्थु । निरूपील ॥ २७४ ॥ ते सविस्तर पुढारी कथा । अति सकौतुक ऐकतां । ज्ञानदेवो म्हणे आतां । निवृत्ति दासु ॥ २७५ ॥

[ इति श्रीज्ञानेश्वर्या संस्कृतानुवादे प्रथमोऽध्यायः ]



# संस्कृतज्ञानेश्वरी

## द्वितीयोऽध्यायः

संजय उवाच—

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

अथ राजानमब्रूत संजयः शृणु भूपते ।
तत्र पार्थः शुचाक्रान्तो रोदितुं प्रावृतद्रणे ॥ १ ॥
समस्तेऽपि कुले दृष्टेऽद्भुतस्नेहसमाकुलम् ।
अद्रवन्मानसं तस्य कथमित्यवधार्यताम् ॥ २ ॥
लवणं लीयते वारा वातेनाभ्रं विशीर्यते ।
तथा सुधीरमप्यस्य हृदयं तद् व्यलीयत ॥ ३ ॥
कृपाकुलितचित्तोऽसौ बभौ म्लानिमुपागतः ।
राजहंसो महापङ्के निमग्नो दृश्यते यथा ॥ ४ ॥
एवं पाण्डुकुमारं तं महामोहेन जर्जरम् ।
अवलोक्य बभाषे किं शार्ङ्गधन्वा निशम्यताम् ॥ ५ ॥

---

मग संजयो म्हणे रायातें । आइकें, तो पार्थु तेथें ।शोकाकुल रुदनातें । करीतु असे ॥ १ ॥ तें कुळ देखोनि समस्त । स्नेह उपनलें अद्भुत । तेणें द्रवलें असे चित्त । कवणेपरी ॥ २ ॥ जैसें लवण जळें झळंबलें । ना तरी अभ्रवातें हालें । तैसें सधीर परी विरमलें । हृदय तयाचें ॥ ३ ॥ म्हणोनि कृपा आकळिला । दिसतसे अति कोमाइला । जैसा कर्दमी रुपला । राजहंसु ॥ ४ ॥ तयापरी तो पांडुकुमरु । महामोहें अति जर्जरू । देखोनि श्रीशार्ङ्गधरू । काय बोले ॥ ५ ॥

श्रीभगवानुवाच—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ २ ॥

नन्वादौ पश्य पार्थेदमुचितं किमिहास्ति ते ।
कस्त्वं किं कर्तुकामोऽसीतीदं सम्यग्विचारय ॥ ६ ॥
किं ते संवृत्तमाख्याहि त्वत्तः किं परिहीयते ।
शिष्यते क्रियमाणं किं किमर्थं विमनायसे ॥ ७ ॥
नार्थे तेऽनुचिते चित्तं धैर्यं जातु न मुञ्चसि ।
नाममात्रं तवाकर्ण्य विद्रवत्ययशो दिशः ॥ ८ ॥
आवासः शूरवृत्तेस्त्वं क्षत्त्राणां राजसेऽधिपः ।
तव विक्रमशालित्वं त्रिषु लोकेषु गीयते ॥ ९ ॥
त्वया हरो जितो युद्धे निवातकवचा हताः ।
जयोदाहरणं बाह्वोर्गन्धर्वा अपि गापिताः ॥ १० ॥
ईदृशं पौरुषं पार्थ विद्यते ते सुशोभनम् ।
त्रैलोक्यमपि यत्तुच्छं त्वदौपम्येन भाति मे ॥ ११ ॥
स त्वमद्येह संत्यज्य वीरवृत्तिमधोमुखः ।
भूत्वा रणे स्थितः पार्थ कथमश्रूणि मुञ्चसि ॥ १२ ॥

म्हणे अर्जुना आधीं पाहीं । हें उचित काय इये ठायीं । तूं कवण हे कायी । करीतु आहासी ॥ ६ ॥ तुज सांगें काय जाइलें । कवण उणें आलें। करितां काय ठेलें । खेदु कायिसा ॥ ७ ॥ तूं अनुचिता चित्त नेदिसी । धीरु कांहींच न संडिसी । तुझेनि नामें अपयशीं । दिशा लंघिजे ॥ ८ ॥ तूं शूरवृत्तीचा ठावो । क्षत्रियां माजीं रावो । तुझिया लाठेपणाचा आवो । तिहीं लोकीं ॥ ९ ॥ तुवां संग्रामीं हरु जिंकिला । निवातकवचांचा ठावो फेडिला । पवाडा तुवां केला । गन्धर्वांसीं ॥ १० ॥ पाहतां तुझेनि पाडें । दिसे त्रैलोक्यही थोकडें । ऐसें पौरुष चोखडें । पार्था तुझें ॥ ११ ॥ तो तूं कीं आजि येथें । सांडूनियां वीरवृत्तीतें । अधोमुख रुदनातें । करीतु आहासी ॥ १२ ॥

कृपया क्रियसे दीनः कथं त्वं चिन्तयार्जुन।
वद किं तमसा ग्रस्तश्चण्डभानुः कदाचन॥ १३॥
अनिलः किं घनाद्भीतः किं कदाप्यमृतं मृतम्।
इन्धनेन कदाचित्किं निर्गीर्णो हव्यवाहनः॥ १४॥
विलीनं लवणेनैव किं जातु जलधेर्जलम्।
किमन्यविषसंसर्गात्कालकूटं मृतिं गतम्।
दर्दुरेण भुजङ्गः किं कदाचित्कवलीकृतः॥ १५॥
शृगालो मृगराजेन भण किं योध्दुमुद्यतः।
आश्चर्याणि कदाचित्किं संवृत्तानीदृशानि भोः
त्वयाद्य पुनरेतानि मन्ये नीतानि सत्यताम्॥ १६॥
तस्मादद्यापि तावत्ते त्याज्येयं हीनकल्पना।
सत्वरं धैर्यमालम्ब्य सावधानो भवार्जुन॥ १७॥
मतिमान्द्यं जहाहीदं कश्मलं संपरित्यज।
आत्तधन्वा रणे तिष्ठ कारुण्येन तवेह किम्॥ १८॥

---

विचारीं तूं अर्जुनु। कीं कारुण्यें कीजसी दीनु। सांग पां अन्धकारें भानु। ग्रासिला आथी॥ १३॥ ना तरी पवनु मेघासि बिहे। कीं अमृतासि मरण आहे। पाहे पां इन्धनचि गिळोनी जाये। पावकातें॥ १४॥ कीं लवणेंचि जळ विरे। संसर्गें काळकूट मरे। सांगें महाफणी दर्दुरें। गिळिजे कायी॥ १५॥ सिंहासि झोंबे कोल्हा। ऐसा अपाडु आथि कें जाला। परी तो त्वां साच केला। आजि एथ॥ १६॥ म्हणोनि अझुनी अर्जुना। झणें चित्त देसी या हीना। वेगीं धीर करूनिया मना। सावधु होईं॥ १७॥ सांडीं हें मूर्खपण। उठीं घे धनुष्यबाण। संग्रामीं हें कवण। कारुण्य तुझें॥ १८॥

विचारयसि न प्राज्ञः कथमेतन्महामते ।
ब्रूहि युद्धप्रसङ्गेषु कथं सदयतोचिता ॥ १९ ॥
रणे दया यशो हन्ति रुणद्धि च परां गतिम् ।
एवं जगन्निवासेन तदानीं जगदेऽर्जुनः ॥ २० ॥

क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३ ॥

मा स्म शोकमतः कार्षीर्धैर्यं सर्वात्मना भज ।
शोच्यतां विजहाहीमामयि भोः पान्डुनन्दन ॥ २१ ॥
तवेदमुचितं नास्ति लब्धहानिरनेन ते ।
आत्मनः श्रेयसे यत्स्यात्तदद्यापि विचारय ॥ २२ ॥
एभिर्योध्दुं प्रवृत्तस्य तव किं कृपयानया ।
गोत्रजत्वमनुप्राप्ताः किममी अधुनैव ते ॥ २३ ॥
किं नेदं ज्ञातपूर्वं ते नाभ्यजाना अमून्न वा ।
यदायासयसे वाचं त्वमिदानीं वृथात्मनः ॥ २४ ॥

---

हां गा तूं जाणता । तरी न विचारिसी कां आतां । सांगें झुंझावेळे सदयता । उचित कायी ॥ १९ ॥ हे असतिये कीर्तीसि नाशु । आणि पारत्रिकासि अपभ्रंशु । म्हणे जगन्निवासु । अर्जुनातें ॥ २० ॥ म्हणोनि शोकु न करीं । तूं पुरता धीरु धरीं । हे शोच्यता अव्हेरीं । पांडुकुमरा ॥ २१ ॥ तुज नव्हे हें उचित । येणें नासेल जोडलें बहुत । तूं अझुनी तरी हित । विचारीं पां ॥ २२ ॥ येणें संग्रामाचेनि अवसरें । एथ कृपाळूपण नुपकरे । हे आतांचि काय सोयरे । जाहले तुज ॥ २३ ॥ तूं आधींचि काय नेणसी। कीं हे गोत्रज नोळखसी । वायांचि काय करिसी । अतिशयो आतां॥२४॥

अयं युद्धप्रसङ्गस्ते जन्मन्यास्मिन् किमादिमः ।
अहो अन्योन्यसंग्रामे निमित्तं वोऽस्ति शाश्वतम् ॥ २५ ॥
संवृत्तं तत्किमद्येव स्नेहो येनोदपाद्ययम् ।
इदं तावन्न वेदाहं न कृतं साध्विदं त्वया ॥ २६ ॥
प्रतिष्ठा विलयं यायादेवं मोहं गतस्य ते ।
इहेव च परत्रापि श्रेयसा परिहास्यसे ॥ २७ ॥
द्रौर्वल्यं हृदयस्येदं क्षुद्रं तव न युज्यते ।
क्षत्रियाणामधःपातं विध्द्यनेन ध्रुवं रणे ॥ २८ ॥
एवं भगवता पार्थो वोधितोऽथ कृपालुना ।
कृष्णेन विविधैर्वाक्यैरिदं वचनमब्रवीत् ॥ २९ ॥

अर्जुन उवाज—

कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

इयता वचसोक्तेन देव नास्ति प्रयोजनम् ।
अवधार्यस्त्वयैवादौ संग्रामोऽयमुपस्थितः ॥ ३० ॥

---

आजिचें हें झुंज । काय जन्मा नवल तुज । हें परस्परें तुम्हा व्याज । सदाचि आथी ॥ २५ ॥ तरी आतां काय जाहलें । कायि स्नेह उपनलें । हें नेणिजे परी कुडें केलें । अर्जुना तुवां ॥ २६ ॥ मोह धरिलिया ऐसें होईल । जे असती प्रतिष्ठा जाईल । आणि परलोकही अंतरेल । ऐहिकेंसीं ॥ २७ ॥ हृदयाचें ढिलेपण । एथ निकयासी नव्हे कारण । हें संग्रामीं पतन जाण । क्षत्रियांसी ॥ २८ ॥ ऐसेनि तो कृपावंतु । नानापरी असे शिकवितु । हें ऐकोनि पांडुसुतु । काय बोले ॥ २९ ॥ देवा हें येतुलवरी । बोलावें नलगे अवधारीं । आधीं तूंचि विचारी । संग्राम हा ॥ ३० ॥

नेदं युद्धं प्रमादोऽयं दोषायात्र प्रवर्तनम् ।
स्पष्टं गुरुजनोच्छेद एषोऽस्माभिश्चिकीर्ष्यते ॥ ३१ ॥
संतोष्य पितरावादौ सर्वस्वेन सुपूजितौ ।
कथं पश्चान्नु हन्तव्यौ स्वहस्तेन विलोकय ॥ ३२ ॥
साधुवृन्दं नमस्कार्यं यच्छक्यं पूज्यमेव वा ।
अकृत्वेदं कथं निन्दा स्ववाचा नु प्रयुज्यताम् ॥ ३३ ॥
तथा गोत्रगुरू एतौ पूज्यौ च नियमेन नः ।
ऋणित्वाद्बहु मन्येऽहं भीष्मद्रोणौ विशेषतः ॥ ३४ ॥
स्वप्नेऽपि मनसा येषां वैरं कर्तुं न शक्यते ।
तेषां वधः कथं कार्योऽस्माभिः प्रत्यक्षमाहवे ॥ ३५ ॥
हा धिग्जीवितमस्माकं धन्यंमन्या भवाम ये ।
एषामेव वधे मोहादस्त्रविद्यां प्रयुज्य नः ॥ ३६ ॥
पार्थो द्रोणस्य शिष्योऽहं धनुस्तेनैव शिक्षितः ।
तद्बधेनैव किं कुर्यां तस्याहं प्रत्युपक्रियाम् ॥ ३७ ॥

---

हें झुज नव्हे प्रमादु । एथ प्रवर्तलिया दिसतसे बाधु । हा उघड लिंगभेदु । वोढवला आम्हां ॥ ३ ॥ देखें मातापितरें अर्चिजती । सर्वस्वें तोषु पावविजती । तियें पाठीं केवीं वधिजती । आपुलिया हातीं ॥ ३२ ॥ देवा संतवृन्द नमस्कारिजे । कां घडे तरी पूजिजे । हें वांचूनि केवीं निंदिजे । स्वयें वाचा ॥ ३३ ॥ तैसे गोत्रगुरु आमचे । हे पूजनीय आम्हां नेमाचे । मज बहुत भीष्मद्रोणांचें । वर्ततसे ॥३४॥ जयां लागीं मनें विरू । आम्ही स्वप्नीं ही न शकों धरूं । तयां प्रत्यक्ष केवीं करूं । घातु देवा ॥३५॥ वरी जळों हें जियालें । एथ आघवेयांसि हेंचि काय जाहलें । जें यांच्या वधीं अभ्यासिलें । मिरविजे आम्हीं ॥ ३६ ॥ मी पार्थु द्रोणाचा केला । येणें धनुर्वेदु मज दिघला । तेणें उपकारें काय आभारैला । वधीं तयातें ॥ ३७ ॥

कृपयात्तवरा येषां वयं तेषु कृतघ्नताम् ।
विभ्रद्भस्मासुरोऽहं किं वचः पार्थोऽब्रवीदिदम् ॥ ३८ ॥

गुरूनहत्वा हि महानुभावाञ् श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥

अक्षोभ्यः श्रूयते सिन्धुर्दृश्यते स बहिस्तथा ।
द्रोणस्य तु पदं चित्ते क्षोभेण क्रियते न हि ॥ ३९ ॥
काममेतन्नभोऽपारं मानं नाशक्यमस्य तु ।
द्रोणस्यागाधगाम्भीर्यं विद्यते हृदयं पुनः ॥ ४० ॥
सुधाप्यम्लीभवेज्जातु स्फुटेत्कालवशात्पविः ।
द्रोणस्य क्षोभितस्यापि मनो नेयात्तु विक्रियाम् ॥ ४१ ॥
स्निग्धो मातृसमो नान्यो जनः कोऽपीति गद्यते ।
द्रोणस्तु मूर्तिमान् स्नेह इत्येतत्प्रतिभाति मे ॥ ४२ ॥
कारुण्यस्य प्रभवः सकलगुणानां निधिः साक्षात् ।
विद्यासिन्धुर्निरवधिरयमिति मे निश्चिता बुद्धिः ॥ ४३ ॥

---

जयाँचिया कृपा लाहिजे वरु । तेयांचि मनें व्यभिचारु । तरी काय मीं भस्मासुरु । अर्जुन म्हणे ॥ ३८ ॥ देवा समुद्र गंभीर आइकिजे । वर तोहि आहाच देखिजे । परी क्षोभु मनीं नेणिजे । द्रोणाचिये ॥ ३९ ॥ हें आपार जें गगन । वरी तयाही होईल मान । परी अगाध भलें गहन । हृदय याचें ॥ ४० ॥ वरी अमृतही विटे । कीं काळवशें वज्र फुटे । परी मनोधर्मु न लोटे । विकरविलाही ॥ ४१ ॥ स्नेहालागीं माये । म्हणिपे तें कीरु होये । परी कृपा ते मूर्त आहे । द्रोणीं इये ॥ ४२ ॥ हा कारुण्याची आदि । सकलगुणांचा निधि । विद्यासिन्धु निरवधि । अर्जुन म्हणे ॥ ४३ ॥

एवं महानुभावः कृपालुरस्मासु चैवमाचार्यः ।
तत्कथय युज्यते किं घातो मनसाप्यमुष्य चिन्तयितुम् ४४
राज्यं सुखेन भोक्तव्यं हत्वेमानीदृशान् रणे ।
इतीदं नाभिनन्दामि कथंचित्कर्म दुष्करम् ॥ ४५ ॥
राज्यभोगस्य का वार्ता गरीयांसस्ततोऽपि ये ।
तेऽपि भोगा न नः सन्तु भिक्षापि श्रेयसी ततः ॥ ४६ ॥
देशं त्यक्त्वैव गन्तव्यं वस्तव्यं वाद्रिकन्दरे ।
करे शस्त्रं न धर्तव्यमेतेषां तु वधेच्छया ॥ ४७ ॥
मर्मस्वेषां प्रहृत्यैव प्रत्यग्रनिशितैः शरैः ।
किं भोगान् रुधिरे मग्नान् विचेतुमुचितं नु नः ॥ ४८ ॥
विचितैरपि तैः किं नः शक्ष्यन्ते सेवितुं कथम् ।
असृग्लिप्ता अतो वाचोयुक्तिं ते नैव रोचये ॥ ४९ ॥
अवधारय कृष्णेदामिति पार्थस्ततोऽभ्यधात् ।
आकर्ण्यापि मुरारातिर्नाभ्यनन्दत्तु तद्वचः ॥ ५० ॥

---

हा येणें मानें महंतु । वरी आम्हांलागीं कृपावंतु । आतां सांग पां येथ घातु । चिन्तूं येईल ॥ ४४ ॥ ऐसे हे रणीं वधावे । मग आपण सुखें राज्य भोगावें । तें मना नये आघवें । जीवितेंसीं ॥ ४५ ॥ हें येणें मानें दुर्भर । जे यांहीहुनी भोग सधर । ते असतु येथवर । भिक्षा मागतां भली ॥ ४६ ॥ ना तरी देशत्यागें जाइजे । कां गिरिकंदर सेविजे । परी शस्त्र आतां न धरिजे । इयांवरी ॥ ४७ ॥ देवा नवनिशितीं शरीं । वावरोनि यांच्या जिव्हारीं । भोग गिंवसावे रुधिरीं । बुडाले जे ॥ ४८ ॥ ते काढूनि काय कीजती । लिप्त केवीं सेविजती । मज नये हे उपपत्ति याचिलागीं ॥ ४९ ॥ ऐसें अर्जुन ते अवसरीं । म्हणे श्रीकृष्णा अवधारीं । परी तें मना नयेचि मुरारी । आइकोनियां ॥ ५० ॥

वीक्ष्येदमथ भीतः सन्नर्जुनः पुनरब्रवीत् ।
भगवन् भाषणेऽस्मिन्मे सावधानोऽपि नासि किम् ॥ ५१ ॥

न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥

मया स्पष्टतया प्रोक्तं यत् स्थितं मम मानसे ।
अतोऽपि तु वरीयः किं तवैव विदितं हि तत् ॥ ५२ ॥
अहो नो जीवितान्ताय येषु वैरकथाप्यलम् ।
त एव संमुखेऽस्माकं संग्रामार्थमवस्थिताः ॥ ५३ ॥
तेऽमी वध्या इदानीं वा गन्तव्यं समुपेक्ष्य वा ।
इत्यत्र कतरच्छ्रेयो नैव जानीमहे वयम् ॥ ५४ ॥

कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्

विमृशन्नपि नो जाने किं कर्तुं योग्यमत्र नः ।
भृशं हि व्याकुलीभूतं मोहेनानेन मे मनः ॥ ५५ ॥
तिमिरेणावृतं तेजश्चक्षुषोरपहीयते ;
येन पार्श्वस्थमप्येव वस्तुजातं न दृश्यते ॥ ५६ ॥

---

हें जाणोनि विहाला । मग पुनरपि बोलों लागला । म्हणे देवो कां चित्त या बोला । देतीचि ना ॥ ५१ ॥ येऱ्हवीं माझ्या चित्तीं जें होतें । तें मी विचारूनि बोलिलों एथें । परी निकें काय या परौतें । तें तुम्ही जाणा ॥ ५२ ॥ पैं विरु जयांसी ऐकिजे । आणि या बोलींचि प्राणु सांडिजे । ते एथ संग्रामव्याजें । उभे आहाती ॥ ५३ ॥ आतां ऐसेयांतें वधावें । कीं अव्हेरुनियां निघावें । या दोहींमाजीं वरवें । तें नेणों आम्हीं ॥ ५४ ॥ आम्हां काय उचित । तें पाहतां न स्फुरे एथ । जे मोहें येणें चित । व्याकुळ माझें ॥ ५५ ॥ तिमिरावरुद्ध जैसें । दृष्टीचें तेज भ्रंशे । मग पासींच असतां न दिसे । वस्तुजात ॥ ५६ ॥

तादृशी मे दशा जाता भो भ्रान्तिग्रस्तचेतसः।
स्वयं तदपि नो जने भवेदात्महिताय यत् ॥ ५७ ॥
तत्त्वया कृष्ण विज्ञाय यच्छ्रेयस्तन्निगद्यताम्।
त्वं ह्यस्माकं सखा स्निग्धो जीवसर्वस्वमेव नः ॥ ५८ ॥
गुरुर्बन्धुः पितासि त्वं त्वमभीष्टं च दैवतम्।
त्वमेव शरणं नित्यं सर्वेषु व्यसनेषु नः ॥ ५९ ॥
बुद्धिपूर्वमुपेक्षेत किं शिष्यान्ज्जातु सद्गुरुः।
सागरोऽपि न गृह्णीयादायान्तीः सरितः कथम् ॥ ६० ॥
जातमात्रमपत्यं चेत् संविहायापयास्यति।
जनन्येव स्वयं देव जीविष्यति कथं नु तत् ॥ ६१ ॥
एवं नः सर्वथा देव त्वमेवैकः क्षमोऽवने।
यन्मयाभिहितं पूर्वं तच्चेन्नाभिमतं तव ॥ ६२ ॥
तदा यदुचितं नः स्याद् यच्च धर्माविरोधि न।
तदेव कथयेदानीं सत्वरं पुरुषोत्तम ॥ ६३ ॥

---

देवा तैसें मज जाहलें। जे मन हें भ्रांती ग्रासिलें। आतां काय हित आपुलें। तेंही नेणें ॥ ५७ ॥ तरी श्रीकृष्णा तुवां जाणावें। निकें तें आम्हां सांगावें। जे सखा सर्वस्व आघवें। आम्हांसि तूं ॥ ५८ ॥ तूं गुरु बन्धु पिता। तूं आमुची इष्ट देवता। तूंचि सदा रक्षिता। आपदीं आमुतें ॥ ५९ ॥ जैसा शिष्यांतें गुरु। सर्वथा नेणें अव्हेरूं। कीं सरितांतें सागरू। त्यजी केवीं ॥ ६० ॥ नातरी अपत्यातें माये। सांडूनि जरी जाये। तरी तें कैसेंनि जिये। ऐकें कृष्णा ॥ ६१ ॥ तैसा सर्वांपरि आम्हांसि। देवा तूंचि एक आहासी। आणि बोलिलें जरी न मनिसी। मागील माझें ॥ ६२ ॥ तरी उचित काय आम्हां। जें व्यभिचरेना धर्मा। तें झडकरी पुरुषोत्तमा। सांगें आतां ॥ ६३ ॥

न हि प्रपश्यापि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

शोकश्चित्ते समुत्पन्नो गोत्रजान्पश्यतो मम ।
त्वद्वाक्यव्यतिरिक्तेन नोपायेनापयास्यति ॥ ६४ ॥
अत्र राज्यं भुवः प्राप्य माहेन्द्रमपि वा पदम् ।
न मोक्ष्येऽनेन मोहेन मानसेन कदाचन ॥ ६५ ॥
सत्क्षेत्रे सम्यगुप्तानि सुसिक्तान्यपि वारिणा ।
न बीजान्यग्निभृष्टानि प्ररोहन्ति कदाचन ॥ ६६ ॥
आयुःक्षये मनुष्याणां विनैकं परमामृतम् ।
किमन्यैरोषधैः कार्यं तदेव गुणमावहेत् ॥ ६७ ॥
तथा नोज्जीवयिष्यन्ति राज्यभोगसमृद्धयः ।
मूढां मम मतिं तत्र गतिः कारुण्यमेव ते ॥ ६८ ॥
क्षणं दूरीकृतभ्रान्तिस्तत्रैवं जिष्णुरब्रवीत् ।
परं भूयोऽपि मायोर्मिरकरोत्तं तदाकुलम् ॥ ६९ ॥

---

हें सकळ कुळ देखोनी । जो शोक उपनलासे मनीं । तो तुझिया वाक्यावांचुनी । न जाय आणिकें ॥ ६४ ॥ एथ पृथ्वीतळ आपु होईल । हें महेन्द्रपदही पाविजेल । परी मोह हा न फिटेल । मानसींचा ॥ ६५ ॥ जैसीं बीजें सर्वथा आहाळलीं । तीं सुक्षेत्रीं जऱ्ही पेरिलीं । तरी न विरूढती सिंचलीं । आवडे तैसीं ॥ ६६ ॥ ना तरी आयुष्य पुरलें आहे । तरी औषधें कांहीं नोहे । एथ एकचि उपेगा जाये । परमामृत ॥ ६७ ॥ तैसें राज्य भोग समृद्धि । उज्जीवन नोहे इये बुद्धि । एथ जिव्हाळा कृपानिधि । कारुण्य तुझें ॥ ६८ ॥ ऐसें अर्जुन तेथ बोलिला । तंव क्षण एक भ्रांती सांडिला । मग पुनरपि व्यापिला । ऊर्मी तेणें ॥ ६९ ॥

नायं मायोर्मिरस्यासीन्मन्येऽन्यात्किंचिदेव तु ।
हा महामोहसंज्ञेन ग्रस्तः कालाहिना ह्यसौ ॥ ७० ॥
कारुण्यभरमालोक्य हृत्कह्लारे समुत्थितम् ।
दष्टो मर्माणि तेनायमनारतविषोर्मिणा ॥ ७१ ॥
गुर्विदं व्यसनं वीक्ष्य प्राप्तो गारुडिको हरिः ।
कृपाकटाक्षमात्रेण विषं स्तम्भयितुं क्षमः ॥ ७२ ॥
पार्श्वस्थेनेव कृष्णेन पार्थो व्याकुलतां गतः ।
नूनं त्रातव्य इत्येतदभिसंधाय केवलम् ॥ ७३ ॥
मयावर्णि महामोहः सर्पत्वेन तथार्जुनः ।
तद्ग्रस्त इति कृष्णश्च प्रोक्तो गारुडिकः स्वयम् ॥ ७४ ॥
पटलेन पयोदानां भानुराच्छाद्यते यथा ।
समावृतस्तथा भ्रान्त्या तदानीं फाल्गुनोऽभवत् ॥ ७५ ॥
यथा दावाग्निना ग्रीष्मे महाशैलस्तथार्जुनः ।
दुःखेन महता तत्र तदा जर्जरतां ययौ ॥ ७६ ॥

---

कीं मज पाहतां ऊर्मी नोहे । हें अनारिसें गमत आहे । तो ग्रासिला महामोहें । काळसर्पें ॥ ७० ॥ सवर्म हृदयकल्हारीं । तेथ कारुण्यवेळेच्या भरीं । लागला म्हणोनि लहरी । भांजेचि ना ॥ ७१ ॥ हें जाणोनि ऐसी प्रौढी । जो दृष्टिसवें विष फेडी । तो धांवया श्रीहरी गारुडी । पातला कीं ॥ ७२ ॥ तैसिया पांडुकुमरा व्याकुळा । मिरवतसे श्रीकृष्ण जवळा । तो कृपावशें अवलीळा । रक्षील आतां ॥ ७३ ॥ म्हणोनि तो पार्थु । मोह-फणिग्रस्तु । म्यां म्हणितला हा हेतु । जाणोनियां ॥ ७४ ॥ मग देखा तेथ फाल्गुनु । घेतला असे भ्रांती कवळूनु । जैसा घनपडळीं भानु । आच्छादिजे ॥ ७५ ॥ तयापरी तो धनुर्धरु । जाहलासे दुःखें जर्जरु । जैसा ग्रीष्मकाळीं गिरिवरु । वणवला कां ॥ ७६ ॥

अतः प्रकृतिनीलोऽसौ कृपामृतजलान्वितः ।
पार्थशैलवरं कृष्णमहामेघोऽन्वपद्यत ॥ ७७ ॥

दशनद्युतयस्तत्र विद्युदुन्मेषतां गताः ।
सुगभीरा गिरश्चापि जज्ञिरे घनगर्जनाः ॥ ७८ ॥

उदारः कृष्णमेघोऽसौ वर्षेद्वागमृतं कथम् ।
तेनार्जुनगिरेर्दाहः कथं निर्वाणतामियात् ।
संजायेत तदा तत्र नवो ज्ञानाङ्कुरः कथम् ॥ ७९ ॥

शृणुतेमां कथामग्रे भोः समाहितमानसाः ।
दासो निवृत्तिनाथस्य श्रोतॄनेवं प्रभाषते ॥ ८० ॥

संजय उवाज—

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तप ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥

एवमात्तवचाः पश्चाद्राजानं संजयोऽब्रवीत् ।
शृणु राजन् पुनः पार्थः किं शोकाकुलितोऽभ्यधात् ॥८१॥
सखेदं सोऽब्रवीत् कृष्णं मा मां प्रत्याययाधुना ।
सर्वथा नैव योत्स्येऽहं विद्धीमं निश्चयं मम ॥ ८२ ॥

---

म्हणोनि सहजें सुनीळु । कृपामृतें सजळु । तो वोळलासे श्रीगोपाळु । महामेघु ॥ ७७ ॥ तेथ सुदर्शनांची द्युति । तेचि विद्युल्लता झळकती । गंभीर वाचा ते आयती । गर्जनेची ॥ ७८ ॥ आतां तो उदार कैसा वरुषेल । तेणें अर्जुनाचलु निवेल । मग नवी विरूढी फुटेल । उन्मेषाची ॥ ७९ ॥ ते कथा आइका । मनाचिये आराणुका। ज्ञानदेवो म्हणे देखा । निवृत्तिदासु॥८०॥ ऐसें संजयो सांगतु । म्हणे राया तो पार्थु । पुनरपि शोकाकुलितु । काय बोले ॥ ८१ ॥ आइकें सखेदु बोले श्रीकृष्णातें । आतां नाळवावें तुम्हीं मातें । मी सर्वथा न झुंजें एथें । भरंवसेनी ॥ ८२ ॥

उक्त्वेमां सहसा वाचं तूष्णींभावमुपाश्रयत् ।
तथा स्थितं तमालोक्य हृषीकेशो विसिष्मिये ॥ ८३ ॥

तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

आसीच्चास्य मनस्येवं किमारम्भोऽयमर्जुनः ।
न च किंचिदयं वेद करवाणि बतात्र किम् ॥ ८४ ॥
कथमेष प्रबुद्धः स्यादालम्बेत कथं धृतिम् ।
कश्चोपायः प्रयोक्तव्य इति चिन्तातुरोऽभवत् ।
ग्रहभूतपिशाचादिवारणे मान्त्रिको यथा ॥ ८५ ॥
असाध्यं व्याधिमालोक्य प्रयुङ्क्ते वैद्य औषधिम् ।
कालक्षेपं विना दिव्यामुत्तमाममृतोपमाम् ॥ ८६ ॥
पार्थभ्रान्तिनिरासार्थमुपायं चिन्तयंस्तथा ।
सेनयोरुभयोर्मध्ये वासुदेवो व्यतिष्ठत ॥ ८७ ॥
हेतुं तमभिसंधाय रुषा वक्तुं प्रचक्रमे ।
स्नेहपूर्णा सकोपापि माता निजशिशुं यथा ॥ ८८ ॥

---

ऐसें येकि हेळां बोलिला । मग मौन धरूनि ठेला । तेथ श्रीकृष्ण विस्मो पावला । देखोनि तयातें ॥ ८३ ॥ मग आपुलां चित्तीं म्हणे । एथ हें कायी आदरिलें येणें । अर्जुन सर्वथा कांहीं नेणें । काय कीजे ॥ ८४ ॥ हा उमजे आतां कवणेपरी । कैसेनि धीरू स्वाकारी । जैसा ग्रहातें पंचाक्षरी । अनुमानी कां ॥ ८५ ॥ ना तरी असाध्य देखोनि व्याधि । अमृतासम दिव्य औषधि । वैद्य सूची निरवधि । निदानींची ॥ ८६ ॥ तैसे विवरीतु असे श्रीअनंतु । तया दोन्हीं सैन्यां आंतु । जया परी पार्थु । भ्रान्ति सांडी ॥ ८७ ॥ तें कारण मनीं धरिलें । मग सरोष बोलों आदरिलें । जैसें मातेच्या कोपीं थोकलें । स्नेह आथी ॥ ८८ ॥

औषधस्य कटुत्वेऽपि मिश्रितामृतमाधुरी।
आपाततो न सा दृश्या गुणे प्राकट्यमेति तु ॥ ८९ ॥
तथापातकठोराणि सुरसान्यन्तरेव तु।
हितोपदेशवाक्यानि प्रवृत्तो गदितुं हरिः ॥ ९० ॥

श्रीभगवानुवाच—

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥

अद्याश्चर्यमिदं पार्थ नन्वस्माभिर्विलोकितम्।
यत्त्वया मध्य एवैषा परिपाटी समादृता ॥ ९१ ॥
त्वं तावत्पण्डितंमन्यो नाज्ञानेन तु मुच्यसे।
ईहेऽनुशासितुं त्वां चे न्नानानीतीः प्रवक्षि माम् ॥ ९२ ॥
जनुषान्धो नरः कश्चिदुन्मादं प्राप्य धावति।
स्वैरमेव, तव प्रज्ञा तादृशी प्रतिभाति मे ॥ ९३ ॥
न जानास्यात्मनात्मानं कौरवांस्त्वनुशोचसि।
जायते मानसेऽस्माकं विस्मयोऽयं मुहुर्मुहुः ॥ ९४ ॥

---

औषधाचिया कडुवटपणीं। जैसी अमृताची पुरवणी। ते आहाच न दिसे, परिगुणीं। प्रकट होय ॥ ८९ ॥ तैसीं वरिवरी पाहतां उदासें। आंत तरी अतिसुरसें। तियें वाक्यें हृषीकेशें। बोलों आदरिलीं ॥ ९० ॥ मग अर्जुनातें म्हणितलें। आम्हीं आजि हें नवल देखिलें। जें तुवां एथ आदरिलें। माझारींचि ॥ ९१ ॥ तूं जाणता तरी म्हणविसी। परी नेणिवेतें न संडिसी। आणि शिकवूं म्हणों तरी बोलसी। बहुसाल नीति ॥ ९२ ॥ जात्यन्धा लागे पिसें। मग ते सैरा धांवे जैसें। तुझें शाहाणपण तैसें। दिसतसे ॥ ९३ ॥ तूं आपणपें तरी नेणसी। परी या कौरवांतें शोचूं पहासी। हा बहु विस्मय आम्हांसी। पुढतपुढती ॥ ९४ ॥

तदर्जुन त्वमेवेदं मह्यमाचक्ष्व सांप्रतम्।
त्रयाणामपि लोकानां स्थितिः किं त्वत्त एव हि।
विश्वस्य रचना येयं सानादिरिति यद्वचः
तदप्यलीकमस्तीति किं संभावयसे वद ॥ ९५ ॥
एकः कोऽपि समर्थोऽत्र भूतानामुद्भवो यतः।
इति यत्प्रोच्यते लोके तद्वृथा मनुषे नु किम् ॥ ९६ ॥
किमेवमधुना जातं यज्जन्ममरणे त्वया।
सृष्टे तथा विपत्स्येते त्वया व्यापादिते यदि ॥ ९७ ॥
भ्रान्तिमूलादहंकाराद्यद्येतान्न जिघांससि।
चिरंजीवा भविष्यन्ति किं तदा कौरवा वद ॥ ९८ ॥
त्वमेवैकोऽसि हन्ता किं मर्ता लोकोऽखिलश्च किम्।
किं ते चित्त इमां भ्रान्तिं सहसे कुर्वतीं पदम् ॥ ९९ ॥
अनादिसिद्ध एवायं क्रमः स्वाभाविकोऽखिलः।
तमिमं तद्वृथा पार्थ किमर्थमनुशोचसि ॥ १०० ॥
मौर्ख्याद्वेत्सि न यद्वेद्यमचिन्त्यं चिन्तयस्यहो।
एवं गते नयं चक्षे पुरतोऽस्माकमीदृशम् ॥ १०१ ॥

---

तरी सांग पां मज अर्जुना। तुजपासूनि स्थिति या त्रिभुवना। हे अनादि विश्वरचना। तें लटकें कायी ॥ ९५ ॥ एथ समर्थु एक आथी। तयापासूनि भूतें होती। तरी हें वायांचि काय बोलती। जगामाजीं ॥ ९६ ॥ हो कां सांप्रत ऐसें जाहलें। जे हे जन्ममृत्यु तुवां सृजिले। आणि नाशु पावे नाशिलें। तुझेनि कायी ॥ ९७ ॥ तूं भ्रमलेपणें अहंकृति। यांसि घातु न धरिसी चित्तीं। तरी सांगें कायि हे होती। चिरंतन ॥ ९८ ॥ कीं तूं एक वधिता। आणि सकळ लोकु हा मरता। ऐसी भ्रांति झणें चित्ता। येवों देसी ॥ ९९ ॥ अनादि सिद्ध हें आघवें। होत जात स्वभावें। तरी तुवां कां शोचावें। सांगें मज ॥ १०० ॥ परी मूर्खपणें नेणसी। न चिंतावें तें चिंतिसी। आणि तूंचि नीति सांगसी। आम्हांप्रति ॥ १०१ ॥

विवेकिनश्च ये केचित्सन्ति ते नाम जानते ।
जन्म मृत्युश्च मायेति नानुशोचन्त्युभे अपि ॥ १०२ ॥

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतःपरम् ॥ १२ ॥

शृणु यत्कथ्यते पार्थ यूयं वयमिमे नृपाः ।
इतरे चात्र ये सर्वे संगताः स्मो रणाजिरे ॥ १०३ ॥
ते तथैव भविष्यामो नित्यमेवाथवा लयम् ।
गमिष्यामो ध्रुवमिति भ्रमे दूरीकृते सति ।
उभे अपीमे मिथ्येति प्रत्ययो नो भविष्यति ॥ १०४ ॥
उत्पत्तिश्च विपत्तिश्च मायया भाति वस्तुनः ।
विद्यमानं तु यद्वस्तु तत्त्वतो ह्यविनाशि तत् ॥ १०५ ॥
तरङ्गाकारता तोये जाता चेत्पवनेरिते ।
तदा तोयेतरस्यात्र कस्य जन्म निगद्यताम् ॥ १०६ ॥
विरते स्फुरणे वायोर्जले च स्थिरतां गते ।
स्वयमेव लयः कस्य संजातोऽत्र विचारय ॥ १०७ ॥

---

देखें विवेकी जे होती । ते दोहींतेही न शोचिती । जे होय जाय हे भ्रांति । म्हणऊनियां ॥ १०२ ॥ अर्जुना सांगेन आइक । एथ आम्ही तुम्ही देख । आणि हे भूपति अशेख । आदिकरुनी ॥ १०३ ॥ नित्यता ऐसेचि असोनी । ना तरी निश्चित क्षया जाउनी । हे भ्रान्ति वेगळी करुनी । दोन्ही नाहीं ॥ १०४ ॥ हें उपजे आणि नाशे । तें मायावशें दिसे । येऱ्हवीं तत्त्वता वस्तु जे असे । ते अविनाशचि ॥ १०५ ॥ जैसें पवनें तोय हालविलें । आणि तरंगाकार जाहलें । तरी कवण कें जन्मलें । म्हणों ये तेथ ॥ १०६ ॥ तेंचि वायूचें स्फुरण ठेलें । आणि उदक सहज सपाट जाहलें । तरी आतां काय निमालें । विचारीं पां ॥ १०७ ॥

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥

शरीरं तावदस्त्येकं वयोभेदे त्वनेकता ।
दशानां दृश्यते तत्र प्रत्यक्षं नन्विदं तव ॥ १०८ ॥
दृश्यते बाल्यमत्रादौ तारुण्ये तद्विलीयते ।
अवस्थायामवस्थायां शरीरं तु न नश्यति ॥ १०९ ॥
चैतन्येऽपि तथा पश्य जायन्ते चापयान्ति च ।
रूपान्तराणि देहानामिदं जानन् न मुह्यति ॥ ११० ॥

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥

यन्नेदं ज्ञायते तत्र हेतुरिन्द्रियवश्यता ।
इन्द्रियाकालिते चित्ते भ्रम एष हि मूर्च्छति ॥ १११ ॥
इन्द्रियाणि निषेवन्ते विषयांस्तेन जायते ।
हर्षो हृदि तथा शोको यत्सङ्गाद्भ्रममेति तत् ॥ ११२ ॥
शब्दादीनां स्थितिर्नैका विषयाणां कदाचन ।
अतस्तत्र क्वचिद्दुःखं सुखं वा विद्यते क्वचित् ॥ ११३ ॥

---

आइकें शरीर तरी एक । परी वयसा भेद अनेक । हें प्रत्यक्षचि देख । प्रमाण तूं ॥ १०८ ॥ एथ कौमारत्व दिसे । मग तारुण्यीं तें भ्रंशे । परी देहचि हा न नाशे । एकेका सवें ॥ १०९ ॥ तैसीं चेतन्याच्या ठायीं । इयें शरीरान्तरें होती जाती पाहीं ! ऐसें जाणे तया नाहीं । व्यामोहदुःख ॥ ११० ॥ एथ नेणावया हेंचि कारण । जें इन्द्रियां अधीनपण । तिहीं आकळिजे अन्तःकरण । म्हणऊनि भ्रमे ॥ १११ ॥ इंद्रियें विषय सविती । तेथ हर्ष शोकु उपजती । ते अंतर आप्लविती । संगें येणें ॥ ११२ ॥ जयां विषयांच्या ठायीं । एकनिष्ठता कहीं नाहीं । तेथ दुःख आणि कांहीं । सुखही दिसे ॥ ११३ ॥

साधारणेऽपि शब्दत्वे निन्दा द्वेषाय कल्पते।
संतोषं जनयत्येव श्रूयमाणा स्तुतिः पुनः ॥ ११४ ॥
मृदुत्वं कठिनत्वं चेत्येतौ स्पर्शगुणावुभौ।
त्वचा संपृच्यमानौ तु हेतुः संतोषखेदयोः ॥ ११५ ॥
करालं सुन्दरं चेति द्विविधं रूपमुच्यते।
नेत्रद्वारा त्विदं हेतुर्दुःखस्य च सुखस्य च ॥ ११६ ॥
भेदौ सुगन्धदुर्गन्धावुभौ परिमलस्य यौ।
घ्राणसंपर्कतो हेतुस्तौ संतोषविषादयोः ॥ ११७ ॥
रसोऽपि द्विविधः प्रीतेस्त्रासस्य जनकस्तथा।
अतो विषयसङ्गोऽयमपभ्रंशकरो नृणाम् ॥ ११८ ॥
ये भवन्तीन्द्रियाधीनाः सुखदुःखवशं हि ते।
कुर्वते स्वयमात्मानं शीतोष्णाभ्यां प्रबाधिताः ॥ ११९ ॥
पश्य स्वभाव एवायमिन्द्रियाणां विलोक्यते।
यदेषां विषयेभ्योऽन्यद्रम्यं भाति न किंचन ॥ १२० ॥

---

देखें शब्दाची व्याप्ति। निन्दा आणि स्तुति। तेथ द्वेषाद्वेष उपजती। श्रवणद्वारें ॥ ११४ ॥ मृदु आणि कठिण। हे स्पर्शाचे दोन्ही गुण। जे वपूचेनि संगें कारण। संतोषखेदां ॥ ११५ ॥ भ्यासुर आणि सुरेख। हें रूपाचें स्वरूप देख। जें उपजवी सुखदुःख। नेत्रद्वारें ॥११६॥ सुगंधु आणि दुर्गंधु। हा परिमळाचा भेदु। जो घ्राणसंगें विषादु-। तोषु देता ॥ ११७ ॥ तैसाचि द्विविध रसु। उपजवी प्रीतित्रासु। म्हणूनि हा अपभ्रंशु। विषयसंगु ॥ ११८ ॥ देखें इन्द्रियाधीन होइजे। तैं शीतोष्णांतें पाविजे। आणि सुखदुःखीं आकळिजे। आपणपें ॥ ११९ ॥ या विषयांवांचूनि कांहीं। आणीक सर्वथा रम्य नाहीं। ऐसा स्वभावेचि पाहीं। इन्द्रियांचा ॥ १२० ॥

किंरूपा विषया एते-इति चेच्छृणु सादरम् ।
मृगतृष्णेव भासन्ते स्वप्ने वा गोचरा गजाः ॥ १२१ ॥
अनित्या इत्यवेत्येमान् विषयांस्त्वं परित्यज ।
मनागपि च मा कार्षीरेतेषां सङ्गमर्जुन ॥ १२२ ॥

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥

अनाकृष्टस्य विषयैः सुखदुःखे उभे समे ।
न चानुभूयते तेन गर्भवासस्य पद्धतिः ॥ १२३ ॥
वशे यो नेन्द्रियार्थानां कदाचिदपि वर्तते ।
नित्यरूपं तमेवेह पार्थ वेदितुमर्हसि ॥ १२४ ॥

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥

इदानीमर्जुनान्यत्ते कथयाम्यवधारय ।
यद्विचारपरैरेव जनैरत्रावगम्यते ॥ १२५ ॥
गुप्तमेकं जगत्यस्मिंश्चैतन्यं सर्वगामि यत् ।
सद्भिस्तदेव तत्त्वज्ञैर्ज्ञात्वा स्वीक्रियते सदा ॥ १२६ ॥

---

हे विषय तरी कैसे । रोहिणीचें जळ जैसें । कां स्वप्नींचा आभासे । भद्रजाति ॥ १२१ ॥ देखें अनित्य तियापरी । म्हणऊनि तूं अव्हेरीं । हा सर्वथा संगु न धरीं । धनुर्धरा ॥ १२२ ॥ हे विषय जयातें नाकळिती । तया सुखदुःखें दोनी न पवती । आणि गर्भवासुसंगति । नाहीं तया ॥ १२३ ॥ तो नित्यरूपु पार्था । वोळखावा सर्वथा । जो या इन्द्रियार्थी । नागवेचि ॥ १२४ ॥ आतां अर्जुना कांहीं एक । सांगेन मी आइक । जें विचारपरलोक । वोळखिती ॥ १२५ ॥ या उपाधिमाजीं गुप्त । चैतन्य असे सर्वगत । तें तत्त्वज्ञ संत । स्वीकारिती ॥ १२६ ॥

अस्तु नाम जले दुग्धमेकीभूतं सुमिश्रितम् ।
विविच्य राजहंसेन तत् पृथक् क्रियते न किम् ॥ १२७ ॥
अशुद्धं हेम तप्ताग्नौ शुद्धतां नीयते न किम् ।
बुद्धिमद्भिर्जनैर्दग्ध्वा तत्रत्यं सकलं जलम् ॥ १२८ ॥
न किं निर्मथिते दाध्नि बुद्धिचातुर्यशालिभिः ।
अन्ततो नवनीतस्य प्रादुर्भावो विलोक्यते ॥ १२९ ॥
अपयाते बुसे वातैः शूर्पास्फालनकर्मणि ।
वीजमेव घनीभूतमधः किं नावशिष्यते ॥ १३० ॥
एवं विचार्यमाणेऽत्र प्रपञ्चोऽयं निरस्यते ।
शिष्यते तत्त्वचिन्तार्थं ज्ञानिनां ब्रह्म केवलम् ॥ १३१ ॥
चैतन्योपाधिनिष्कर्षमतो येऽत्र विजानते ।
तेषामास्तिक्यबुद्धिर्न वस्तुन्यसति कर्हिचित् ॥ १३२ ॥

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥

---

सलिलीं पय जैसें । एक होऊनि मीनलें असे । परी निवडूनि राजहंसें । वेगळें कीजे ॥ १२७ ॥ कीं अग्निमुखें किडाळ। तोडोनियां चोखाळ। निवडती केवळ । बुद्धिमंत ॥ १२८ ॥ ना तरी जाणिवेच्या आयणी । करितां दधिकडसणी । मग नवनीत निर्वाणीं । दिसे जैसें ॥ १२९ ॥ कीं भूस बीज एकवट । उपणितां राहे घनवट । तेथ उडे तें फलकट । जाणों आलें ॥ १३० ॥ तैसें विचारितां निरसलें । तें प्रपंचु सहजें सांडवलें । मग तत्त्वतां तत्त्व उरलें । ज्ञानियांसी ॥ १३१ ॥ म्हणोनि अनित्याच्या ठायीं । तयां आस्तिक्यबुद्धि नाहीं । निष्कर्षु दोहींही । देखिला असे ॥ १३२ ॥

असारता ननु भ्रान्तिः सारं नित्यं स्वभावतः ।
इति विद्धि ध्रुवं पार्थ सारासारविचारतः ॥ १३३ ॥
अयं लोकत्रयाकारो यस्य विस्तार उच्यते ।
नाम रूपं तथा वर्ण इति चिह्नानि तस्य न ॥ १३४ ॥
सदा सर्वगतो योऽस्ति जन्ममृत्युविवार्जितः ।
चिकीर्षितोऽपि घातोऽस्य कर्तुं जातु न शक्यते ॥ १३५ ॥

अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ १८ ॥

सर्वं शरीरजातं यत् तद्विनाशि स्वभावतः ।
तस्माद्युद्धे प्रवृत्तस्त्वं भव भोः पाण्डुनन्दन ॥ १३६ ॥

य एवं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥

धृतदेहाभिमानस्त्वं दत्तदृष्टिः कलेवरे ।
ब्रूषेऽहमेव हन्तैषाममी मर्तार एव च ॥ १३७ ॥
नेदं तु तत्त्वतो वेत्सि विचारयसि चेत्पुनः ।
वधिता त्वं न वध्याश्च नामी इत्यवभोत्स्यसे ॥ १३८ ॥

---

देखें सारासार विचारितां । भ्रान्ति ते पाहीं असारता । तरी सार तें स्वभावता । नित्य जाणें ॥ १३३ ॥ हा लोकत्रयाकारु । तो जयाचा विस्तारु । तेथ नाम वर्ण आकारु । चिह्न नाहीं ॥१३४॥ जो सर्वदा सर्वगतु । जन्मक्षयातीतु । तया केलियाहि घातु । कदा नोहे ॥ १३५ ॥ आणि शरीरजात आघवें । हें नाशवंत स्वभावें । म्हणोनि तुवां झुंजावें । पाण्डुकुमरा ॥१३६॥ तूं धरूनि देहाभिमानातें । दिठी सूनि शरीरातें । मी मारिता हे मरते । म्हणत आहासी ॥ १३७ ॥ तरी अर्जुना तूं हें नेणसी । जरी तत्वता विचारिसी । तरी वधिता तूं नव्हेसी । हे वध्य नव्हती ॥ १३८ ॥

५

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २० ॥

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥

**स्वप्ने यद् दृश्यते किंचित् तत्तथा स्वप्न एव हि ।**
**स्वप्नोत्तरं पश्यतां तु द्रष्टुं किंचिन्न विद्यते ॥ १३९ ॥**
**मायामिमां विजानीहि वृथैवास्मि भ्रमाकुलः ।**
**छायायां कृत आघातः शरीरे नैव मूर्च्छति ॥ १४० ॥**
**बिम्बं भ्रष्टं रवेर्भाति पूर्णकुम्भेऽवपातिते ।**
**वस्तुतस्तु रविः साक्षात् सह तेन न नश्यति ॥ १४१ ॥**
**मठेऽवतीर्णमाकाशं मठाकृत्येव दृश्यते ।**
**मठे तस्मिन्पुनर्भग्ने स्वरूपेणैव शिष्यते ॥ १४२ ॥**
**तथा लोपे शरीरस्य लोपो भवति नात्मनः ।**
**न नाशोऽतस्त्वयारोप्यः स्वरूपे भ्रान्तिमूलकः ॥ १४३ ॥**

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २२ ॥

---

जैसें स्वप्नामाजीं देखिजे । तें स्वप्नींचि साच आपजे । मग चेऊनियां पाहिजे । तंव कांहीं नाहीं ॥ १३९ ॥ तैसी हे जाण माया । तूं भ्रमत आहासी वांया । शस्त्रें हाणितलिया छाया । जैसी आंगीं न रुपे ॥१४०॥ कां पूर्ण कुंभ उलंडला । तेथ बिंबकारु दिसे भ्रंशला । परी भानु नाहीं नाशला । तयासवें ॥ १४१ ॥ ना तरी मठीं आकाश जैसें । मठाकृती अवतरलें असे । तो भंगलिया आपैसें । स्वरूपाचि ॥ १४२ ॥ तैसें शरीराच्या लोपीं । सर्वथा नाशु नाहीं स्वरूपीं । म्हणऊनि तूं हे नारोपीं । भ्रांति बापा ॥ १४३ ॥

जीर्णं वस्त्रं परित्यज्य नूतनं गृह्यते यथा।
तथा चैतन्यनाथेन देहिनापि वपुर्नवम् ॥ १४४ ॥

नैनं छिन्दति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥

अनादिर्नित्यसिद्धोऽयं विशुद्धो निरुपाधिकः।
अतः कर्तुं न शक्योऽस्य च्छेदः शस्त्रादिभिः क्वचित् ॥१४५॥
अग्निनापि न दाह्योऽयं नाप्लाव्यः प्रलयोदकैः ।
नैनं शोषयितुं शक्तो बलवानपि मारुतः ॥ १४६ ॥
नित्योऽयमचलोऽयं भोः शाश्वतोऽयं धनञ्जय |
परिपूर्णतया चास्ते सर्वत्र च सदैव च ॥ १४७ ॥

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥

पार्थ तर्कस्य मूर्तस्य न दृशोरेष गोचरः।
वहते दर्शनोत्कण्ठामस्य ध्यानं च मूर्तिमत् ॥ १४८ ॥
मानसा दुर्लभो नित्यमप्राप्यः साधनैरयम् ।
निःसीमत्वादनन्तोऽयं पुरुषोत्तम उच्यते ॥ १४९ ॥

---

जैसीं जीर्णें वस्त्रें सांडिजे । मग नूतनें आणिकें वेढिजे । तैसें देहान्तरातें स्वीकारिजे । चैतन्यनाथें ॥१४४॥ हा अनादि नित्यसिद्धु । निरुपाधि विशुद्धु । म्हणऊनि शस्त्रादिकीं छेदु । न घडे यया ॥१४५॥ हा प्रळयोदकें नाप्लवे । अग्निदाहो न संभवे । एथ महाशोषु न प्रभवे । मारुताचा ॥ १४६ ॥ अर्जुना हा नित्यु । अचलु हा शाश्वतु । सर्वत्र सदोदितु । परिपूर्णु हा ॥ १४७ ॥ हा तर्कांचीये दिठी । गोचर नोहे किरीटी । ध्यान याचिये भेटी । उाकण्ठा वाहे ॥ १४८ ॥ हा सदा दुर्लभु मना । आपु नोहे साधना । निःसीमु हा अर्जुना । पुरुषोत्तमु ॥ १४९ ॥

अयं गुणत्रयातीतोऽनादिर्विकृतिवर्जितः ।
व्यक्तिं कदाप्यनापन्नः सर्वरूपश्च विद्यते ॥ १५० ॥
अयमेतादृशो ज्ञेयो दृश्यः सर्वात्मकोऽर्जुन ।
एवं गतेऽपशोकस्त्वं सर्वथैव भविष्यसि ॥ १५२ ॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥२६ ॥

अथैनं नेदृशं वेत्सि नाशवन्तं च मन्यसे ।
तथाप्ययं न शोच्यस्ते सर्वथा पाण्डुनन्दन ॥ १५२ ॥
सर्वस्थितिलयानां हि क्रमो नित्यमखण्डितः ।
यथा भागीरथीवारां प्रवाहो दृश्यते भुवि ॥ १५३ ॥
गाङ्गमम्बूद्गमेऽखण्डं समुद्रगमनारतम् ।
मध्येमार्गमविछिन्नं प्रवहद् दृश्यतेऽपि च ॥ १५४ ॥
एवं तिस्रो दशा एताः समा इत्यवधारय ।
भूतैः स्तम्भयितुं शक्या नैताः सन्ति कदाचन ॥ १५५ ॥
तस्मात्सर्वमपीदं ते नानुशोच्यमिहार्जुन ।
प्रवृत्ता नादिकालाद्धि स्थितिरेषा स्वभावतः ॥ २५६ ॥

---

हा गुणत्रया रहितु । व्यक्तीसी अतीतु । अनादि आविकृतु । सर्वरूप ॥ १५० ॥ अर्जुना ऐसा हा जाणावा । सकळात्मकु देखावा । मग सहजें शोकु आघवा । हरेल तुझा ॥ १५१ ॥ अथवा ऐसा नेणसी । तूं अन्तवन्तचि मानिसी । तऱ्ही शोचूं न पवसी । पांडुकुमरा ॥ १५२ ॥ जो आदि स्थिति अंतु । हा निरंतर असे नित्यु । जैसा प्रवाहो अनुस्यूतु । गंगाजळाचा ॥ १५३ ॥ तें आदि नाहीं खंडलें । समुद्रीं तरी असे मिनलें । आणि जातांचि मध्यें उरलें । दिसे जैसें ॥ १५४ ॥ इयें तिन्ही तयापरी । सरसींच सदा अवधारीं । भूतांसि कवणीं अवसरीं । ठाकती ना ॥ १५५ ॥ म्हणोनि हें आघवें । एथ तुज नलगे शोचावें । जे स्थितीचि हे स्वभावें । अनादि ऐसी ॥ १५६ ॥

इदं नानुमतं ते चेद्भाषणं मम विद्यते ।
जानास्येव न किं पार्थ जन्ममृत्युवशाञ्जनान् ॥ १५७ ॥
जानतश्च तवेहास्ति न किंचिच्छोककारणम् ।
न शक्यौ जन्ममृत्यू हि परिहर्तुं कथंचन ॥ १५८ ॥

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥

जातं नश्यति वस्त्वत्र नष्टं भूयोऽपि दृश्यते ।
अरघट्टघटीयन्त्रं भ्रमतीवेदमर्जुन ॥ १५९ ॥
उदयास्तमने भानोः प्रवर्तेते स्वयं यथा ।
तथा जन्मक्षयौ लोके कस्तौ वारयितुं क्षमः ॥ १६० ॥
महाप्रलयकालेऽस्य त्रैलोक्यस्यापि संक्षयः ।
तस्मादपरिहार्योऽयं नूनं जन्मक्षयक्रमः ॥ १६१ ॥
अभ्युपेतं त्वयेदं चेत् किमर्थं विमनायसे ।
जानन्नपि किमज्ञानमाविष्कुरुष ईदृशम् ॥ १६२ ॥

---

ना तरी हें अर्जुना । न येचि तुझिया मना । जे देखोनि लोकु अधीना । जन्मक्षया ॥ १५७ ॥ तरी येथ कांहीं । तुज शोकासि कारण नाहीं । हे जन्ममृत्यु पाहीं । अपरिहर ॥ १५८ ॥ उपजे तें नाशे । नाशलें पुनरपि दिसे । हें घटिकायंत्र जैसें । परिभ्रमे गा ॥ १५९ ॥ ना तरी उदो अस्तु आपैसे । अखंडित होत जात जैसे । हें जन्ममरण तैसें । आनिवार जगीं ॥ १६० ॥ महाप्रलयअवसरें । हें त्रैलोक्यही संहरे । म्हणोनि हा न परिहरे । आदि अंतु ॥ १६१ ॥ तूं जरी हें ऐसें मानिसी । तरी खेदु कां करिसी । काय जाणताचि नेणसी । धनुर्धरा ॥ १६२ ॥

एवं विचार्यमाणेऽर्थे बहुशोऽत्र धनुर्धर ।
शोकस्य विषयः कोऽपि तव नास्त्येव सर्वथा ॥ १६३ ॥

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २८ ॥

प्रागुत्पत्तेरमूर्तानि भूतानि सकलान्यपि ।
आपन्नानि पुनर्व्यक्तिं जन्मनः समनन्तरम् ॥ १६४ ॥
तानि यत्र क्षयं यान्ति तत्रान्यानि भवन्ति न ।
स्वीयां पूर्वदशामेव प्राप्नुवन्तीति दृश्यताम् ॥ १६५ ॥
जन्मक्षयान्तरे व्यक्तं यत्किंचित् प्रतिभाति तत् ।
चैतन्ये मायया भाति स्वप्नवन्निद्रितस्य वै ॥ १६६ ॥
उदकं पवनस्पृष्टं तरङ्गाकृति दृश्यते ।
कनकं भूषणाकारं भासते वा परेच्छया ॥ १६७ ॥
एवं विश्वमिदं व्यक्तं मायायोगेन दृश्यते ।
प्रतिबिंबितमाकाशे पयोदपटलं यथा ॥ १६८ ॥

---

एथ आणिकही एक पार्था । तुज बहुतीं परी पहातां । दुःख करावया सर्वथा । विषो नाहीं ॥ १६३ ॥ जियें समस्तें इयें भूतें । जन्माआदि अमूर्तें । मग पातलीं व्यक्तीतें । जन्मलेया ॥ १६४ ॥ तियें क्षयासि जेथ जाती । तेथ निभ्रांत आनें नव्हती । देखें पूर्वस्थितीचि येती । आपुलिये ॥ १६५ ॥ परि मध्यें जें प्रतिभासे । तें निद्रिता स्वप्न जैसें । तैसा आकारु हा मायावशें । सत्स्वरूपीं ॥१६६॥ ना तरी पवनें स्पर्शिलें नीर । पढियासे तरंगाकार । का परापेक्षा अळंकार-। व्यक्ती कनकीं ॥ १६७ ॥ तैसें सकळ हें मूर्त । जाण पां मायाकारित । जैसें आकाशीं बिंबत । अभ्र-पटळ ॥ १६८ ॥

आदावेव च यन्नास्ति तदर्थं रुद्यते नु किम् ।
अक्षय्ये निर्विकारे त्वं चैतन्ये धेहि मानसम् ॥ १६९ ॥
त्यज्यन्ते विषयैः सन्तस्तस्मिन्नासक्तमानसाः ।
अहो वैराग्यसंपन्ना वनवासमुशन्ति च ॥ १७० ॥
तत्कृते साधका ब्रह्मचर्यादीनि व्रतानि च ।
आचरन्ति मुनिश्रेष्ठास्तानि तानि तपांस्यपि ॥ १७१ ॥

आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥२९॥

केचिद् ध्यायन्त एवैनमात्मानं स्थिरचेतसः ।
संसारजातमाश्वेतद्विस्मरन्त्यखिलं किल ॥ १७२ ॥
गायन्तस्तद्गुणान् केचिन्निवृत्तविषयस्पृहाः ।
तल्लीनतां निषेवन्ते निर्मर्यादां निरन्तरम् ॥ १७३ ॥
केचिच्छाम्यन्ति शृण्वन्तो देहभावेन वर्जिताः ।
केचित्तद्रूपतां यान्ति साक्षादनुभवेन च ॥ १७४ ॥

---

तैसें आदीचि जें नाहीं । तयालागीं तूं रुदसी कायी । तूं अवीट तें पाहीं । चैतन्य एक ॥ १६९ ॥ जयाचि आर्तीचि भोगित । विषयीं त्यजिले संत । जयालागीं विरक्त । वनवासिये ॥ १७० ॥ दिठी सूनि जयातें । ब्रह्मचर्यादि व्रतें । मुनीश्वर तपातें । आचरताती ॥ १७१ ॥ एक अंतरीं निश्चळ। जें निहाळितां केवळ । विसरले सकळ । संसार जात ॥ १७२ ॥ एकां गुणानुवादु करितां । उपरति होऊनि चित्ता । निरवधि तल्लीनता । निरंतर॥१७३॥ एक ऐकतांचि निवाले । ते देहभावीं सांडिले । एक अनुभवें पातले । तद्रूपता ॥ १७४ ॥

यथैव सरितामोघाः समस्ता यान्ति सागरम् ।
ततस्तु न निवर्तन्ते मातुं तत्राक्षमा इति ॥ १७५ ॥
योगीश्वरधियो यान्ति तथैवात्मसरूपताम् ।
ततस्तु पुनरावृत्तिं विचार्यापि भजन्ति न ॥ १७६ ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात् सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥

सर्वदेहेषु सर्वत्र स्थितं यद्यत्नतोऽपि न ।
शक्यं नाशयितुं विश्वव्याप्येकं ब्रह्म केवलम् ॥ १७७ ॥
स्वभावत इदं सर्वं जायते लयमेति च ।
बलेनास्यैव चेद् ब्रूहि तत्र का परिदेवना ॥ १७८ ॥
किमन्यथापि पार्थेदं मनसोऽभिमतं न ते ।
निन्द्यं शोचनमेतत्तु बहुधा प्रतिभाति मे ॥ १७९ ॥

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३१ ॥

---

जैसे सरिता ओघ समस्त । समुद्रामाजीं मिळत । परी माघौते न समात। परतले नाहीं ॥ १७५ ॥ तैसिया योगीश्वरांचिया मति । मिळणीं सवें एक-वटती । परी जे विचारूनि पुनरावृत्ति । भजतीचि ना ॥ १७६ ॥ जें सर्वत्र सर्वही देहीं । जया करितांही घातु नाहीं । तें विश्वात्मक तूं पाहीं । चैतन्य एक ॥ १७७ ॥ जयाचेनि स्वभावें । हें होत जात आघवें । तरी सांग काय शोचावें । एथ तुवां ॥ १७८ ॥ एऱ्हवीं तरी पार्था । तुज कां नेणों न मने चित्ता । परी किडाळ हें शोचितां । बहुतीं परी ॥ १७९ ॥

विचारयसि नो कस्मात् किमिदं चिन्त्यते त्वया ।
तारहेतुः स्वधर्मो यस्तं तावद्विस्मृतो भवान् ॥ १८० ॥
कौरवेषु विपन्नेषु त्वपि वापि तथा स्थिते ।
संप्राप्ते वा युगान्तेऽपि स्वधर्मस्त्यज्यते नु किम् ॥ १८१ ॥
तस्मिंस्त्यक्ते दयापीयमुत्पन्ना तव चेतसि ।
किं त्वां तारयितुं शक्ता भवेदिति विचारय ॥ १८२ ॥
स्नेहेन यद् द्रवीभूतं पार्थ चित्तमिदं तव ।
तदिदानीं न ते योग्यं संग्रामावसरेऽत्र भोः ॥ १८३ ॥
गोक्षीरमपि रुग्णस्य पथ्यत्वेन न संमतम् ।
एवं गतेऽपि दत्तं चेद्विषवत्स्यान्नवज्वरे ॥ १८४ ॥
तथान्यत्कृतमन्यत्र हितं कर्तुर्विहिंसति ।
अत एव गुडाकेश जागरूको भवाधुना ॥ १८५ ॥
व्याकुलः किं वृथैवाभूः स्वधर्मे धेहि मानसम् ।
यमाचरन् कदाप्येव कोऽपि दोषैर्न लिप्यते ॥ १८६ ॥

---

तूं अझुनि कां न विचारिसी । काय हें चिंतितु आहासी । स्वधर्मु तो विसरलासी । तरावें जेणें ॥ १८० ॥ या कौरवां भलतें जाहलें । अथवा तुजाचि कांहीं पातलें । कीं युगचि हें बुडालें । जऱ्ही एथ ॥ १८१ ॥ तरी स्वधर्मु एक आहे । तो सर्वथा त्याज्य नोहे । मग तरिजेल काय पांहें । कृपाळूपणें ॥ १८२ ॥ अर्जुना तुझें चित्त । जऱ्ही जाहलें द्रवीभूत । तऱ्ही हें अनुचित । संग्रामसमयीं ॥ १८६ ॥ अगा गोक्षीर जरी जाहलें । तरी पथ्यासि नाहीं म्हणितलें । ऐसेनिहि विष होय सुदलें । नवज्वरीं देतां ॥ १८४ ॥ तैसीं आनीं आन करितां । नाशु होईल हिता । म्हणऊन आतां । सावध होईं ॥ १८५ ॥ वायांचि व्याकुळ कायी । आपुला निजधर्मु तूं पाहीं । जो आचरितां बाधु नाहीं । कवणें काळीं ॥ १८६ ॥

सत्पथेन चलन्प्रायो नापायमनुविन्दति ।
न च स्खलति गाढेऽपि तिमिरे दीपमाश्रयन् ॥ १८७ ॥
एवमेव स्वधर्मेण वर्तमानो धनंजय ।
पूर्तिं सकलकामानामनायसमुपाश्नुते ॥ १८८ ॥
धर्मोऽयं क्षत्रियाणां वो यत्संग्रामे प्रसज्यते ।
तदन्यन्नोचितं किंचित्कर्म युष्माकमर्जुन ॥ १८९ ॥
क्षत्रियः प्रतियुध्येत युध्यमानमकैतवः ।
आस्तां तावदिदं किं ते निगाद्यं जानतः स्वयम् ॥ १९० ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥

फलितं दैवमेवेदं किमु युद्धमुपस्थितम् ।
निधानं किमु धर्मस्य पूर्णं प्रकटतां गतम् ॥ १९१ ॥
संग्रामः किमयं गण्यः स्वर्गस्तद्रूप एव वा ।
मूर्तिमानुदितोऽयं वा त्वत्प्रतापदिवाकरः ॥ १९२ ॥
कीर्तिस्त्वद्गुणलुब्धा वा त्वयि चासक्तमानसा ।
औत्सुक्यातिशयात्साक्षात्त्वां वुवूर्षुरुपागता ॥ १९३ ॥

---

जैसें मार्गेंचि चालतां । अपावो न पवे सर्वथा । कां दीपाधारें वर्ततां । नाडळिजे ॥ १८७ ॥ तयापरी पार्था । स्वधर्में राहाटतां । सकळ काम पूर्णता । सहजें होय ॥ १८८ ॥ म्हणोनि यालागीं पाहीं । तुम्हां क्षत्रियां आणिक कांहीं । संग्रामावांचूनि नाहीं । उचित जाणें ॥ १८९ ॥ निष्कपट होआवें । उसिणा घाई झुंजावें । हें असो काय सांगावें । प्रत्यक्षावरी ॥ १९० ॥ अर्जुना झुंज देखें आतांचें । हें हो कां दैव तुमचें । कीं निधान सकळ धर्माचें । प्रगटलें असे ॥१९१॥ हा संग्रामु काय म्हणिपे । कीं स्वर्गुचि येणें रूपें । मूर्त कां प्रतापें । उदो केला ॥ १९२ ॥ ना तरी गुणाचेनि पतिकरें । आर्तीचेनि पडिभरें । हे कीर्तीचि स्वयंवरें ॥ आली तुज ॥ १९३ ॥

बहुपुण्यकृता युद्धं क्षत्त्रियेणोपलभ्यते।
ईदृशं जातु पान्थेन पथि चिन्तामणिर्यथा॥ १९४॥
पीयूषं जृम्भमाणस्य विवृते वा मुखे यथा।
तथापतितमेवेदं युद्धं युष्माकमग्रतः॥ १९५॥

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि॥ ३३॥

युद्धं प्राप्तं विहायेदं यदि शोचेः किमप्यसत्।
अहो आत्मविनाशस्य स्वयं यास्यसि हेतुताम्॥ १९६॥

इदं पद्यं प्रकारान्तरेणानुवदितुं शक्यम्। तद्यथा—

यदीदमधुना हित्वा वृथा शोके प्रवर्तसे।
तदा त्वत्सदृशो मूर्खस्त्वमेवेहेति मे मतिः॥ १९६॥
अद्य शस्त्रपरित्यागं रणेऽस्मिन् कुरुषे यदि।
पूर्वजैरर्जितं यत्ते तत्त्वया हापितं भवेत्॥ १९७॥
कीर्तिस्तेऽपि लयं यायाल्लोकनिन्दामवाप्नुयाः।
त्वामन्विष्य महादोषा भजेयुः स्वयमेव च॥ १९८॥
भर्त्रा हीना यथा नारी सर्वथोपहता भवेत्।
विवर्जिता स्वधर्मेण जीवितस्य दशा तथा॥ १९९॥

---

क्षत्रियें बहुत पुण्य कीजे। तैं झुंज ऐसें लाहिजे। जैसें मार्गें जातां आडळिजे। चिंतामणिसी॥ १९४॥ ना तरी जांभया पसरे मुख। तेथ अवचटें पडे पीयूख। तैसा संग्रामु हा देख। पातला असे॥ १९५॥ आतां हा ऐसा अव्हेरिजे। मग नाथिलें शोचूं बैसिजे। तरी आपण आहाणा होइजे। आपणपेयां॥ १९६॥ पूर्वजांचें जोडलें। आपणचि होय घाडिलें। जरी आजि शस्त्र सांडिलें। रणीं इये॥ १९७॥ असती कीर्ति जाईल। जगचि अभिशापु देईल। आणि गिंवसित पावतील। महादोष॥ १९८॥ जैसी भर्तारें हीन वनिता। उपहती पावे सर्वथा। मग तैसी दशा जीविता। स्वधर्मेंविण॥ १९९॥

शवो यथा रणे क्षिप्तोऽभितो गृध्रैर्विदार्यते।
धर्महीनो महादोषैर्ना तथैवाभिभूयते ॥ २०० ॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥

अतस्त्यागे स्वधर्मस्य पापभाक् त्वं भविष्यसि।
अपकीर्तिकलङ्कश्च कल्पान्तेऽपि न नङ्क्ष्यति ॥ २०१ ॥
तावदेव बुधो जीवेद्यावन्नाकीर्तिभाजनम्।
कथं नु प्रतिगन्तव्यमितस्तत्कथयार्जुन ॥ २०२ ॥
निर्मत्सरो दयार्द्रस्त्वमितः कामं निवत्स्यसि।
न त्वियं स्थितिरेभिस्ते याथार्थ्येन ग्रहीष्यते ॥ २०३ ॥
वेष्टिष्यन्ते समन्तात्त्वां वर्षिष्यन्ति शरांस्त्वयि।
कृपेयं न तदामीभ्यस्तव त्राणाय कल्प्स्यति ॥ २०४ ॥
इयताप्यनपायस्ते निर्गमः स्यात्ततो यदि।
ईदृशं जीवनं मृत्योरपि निन्द्यतरं भवेत् ॥ २०५ ॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः।
येषां च त्वं बहु मतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥

---

ना तरी रणीं शव सांडिजे। तें चौमेरीं गिधीं विदारिजे। तैसें स्वधर्महीना अभिभविजे। महादोषीं ॥ २०० ॥ म्हणोनि स्वधर्मु हा सांडसील। तरी पापा वरपडा होसील। आणि अपेश तें न वचेल। कल्पांतवरी ॥ २०१ ॥ जाणतेनि तंवचि जियावें। जंव अपकीर्ति आंगा न पवे। आणि सांग पां केवीं निगावें। एथोनिया ॥ २०२ ॥ तूं निर्मत्सरु सदयता। येथूनि निघसील कीर माघौता। परी ते गती समस्तां। न मनेल ययां ॥ २०३ ॥ हे चहूंकडूनि वेढितील। बाण वरी घेतील। तेथ पार्था न सुटिजेल। कृपाळूपणें ॥ २०४ ॥ ऐसेनिहि प्राणसंकटें। जरी विपायें पां निघणें घटे। तरी तें जियालें वोखटें। मरणाहुनी ॥ २०५ ॥

इदमन्यत्त्वया पार्थ कथं नात्र विचार्यते ।
ससंभ्रममिह प्राप्य सकृपं प्रतिगच्छता ॥ २०६ ॥
यन्मदीयमिदं कृत्यं प्रत्येष्यन्ति न विद्विषः ।
मंस्यन्ते रणभीरुं मां भयादेव पलायितम् ॥ २०७ ॥

अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥

वदिष्यन्ति च पार्थोऽयं विद्रुतोऽस्मद्भयादितः ।
दुर्वादोऽयं प्रसक्तःसन् वद किं तव युज्यते ॥ २०८ ॥
महान्तं यत्नमास्थाय प्राणानपि विहाय वा ।
जनाः कीर्तिमुपार्जन्ति लब्धां तां वर्धयन्ति वा ॥ २०९ ॥
सेयं पूर्णा त्वया प्राप्तानायासेन धनुर्धर ।
विस्तारे नभसा तुल्या निर्मर्यादेन केवलम् ॥ २१० ॥
अनन्तानुपमा कीर्तिरतिश्रेष्ठा गुणास्तव ।
इतीयं त्रिपु लोकेपु वरीवर्ति तव प्रथा ॥ २११ ॥
दिगन्तगतभूपाला बन्दिभावं गतास्तव ।
कीर्तिं गायन्ति यां श्रुत्वा सभया अन्तकादयः ॥ २१२ ॥

---

तूं आणिकही एक न विचारिसी । एथ संभ्रमें झुंजों आलासी । आणि सकणवपणें निघालासी । मागुता जरी ॥ २०६ ॥ तरी तुझें तें अर्जुना । या वैरियां दुर्जनां । कां प्रत्यया येईल मना । सांगें मज ॥ २०७ ॥ हे म्हणतील गेला रे गेला । अर्जुन आम्हां बिहाला । हा सांगें बोलु उरला । निका काथी ॥ २०८ ॥ लोक सायासें करूनि बहुतें । वेंचिती आपुलीं जीवितें । परी वाढविती कीर्तीतें । धनुर्धरा ॥ २०९ ॥ ते तुज अनायासें अनकाळित जोडिली असे । हें अद्वितीय जैसें । गगन आहे ॥२१०॥ तैसी कीर्ती निःसीम । तुझ्या ठायीं निरुपम । तुझे गुण उत्तम । तिहीं लोकीं ॥ २११ ॥ दिगंतींचे भूपति । भाट होऊनि वाखाणिती । जे ऐकिलिया दचकती । कृतान्तादिक ॥ २१२ ॥

गङ्गोदकमिवागाधं निर्मलं च यशस्तव।
यस्य श्रवणमात्रेण सुभटाः स्तब्धतां गताः ॥ २१३ ॥
पौरुषं तेऽद्भुतं श्रुत्वा समस्ताः कौरवा अमी।
स्वजीविते निराशत्वात्परं वैराग्यमाश्रिताः ॥ २१४ ॥
यथा गजो मदोन्मत्तो मन्यते सिंहगर्जनाम्।
तथा त्वां कौरवा एते युगान्तमिव दारुणम् ॥ २१५ ॥
यथा वा पर्वता वज्रं सर्पा वा गरुडं यथा।
तथा त्वां कौरवा एते पार्थ सर्वेऽपि मन्वते ॥ २१६ ॥
यदि युद्धमकृत्वैव रणात्प्रतिनिवर्त्स्यसि।
लघिम्ना योक्ष्यसे नूनं तदास्तंगतगौरवः ॥ २१७ ॥
न ते पलायमानाय दास्यन्ति च पलायितुम्।
गृहीत्वा गर्हयिष्यन्ते वाचा च त्वामवाच्यया ॥ २१८ ॥
पश्चान्मर्मभिदां वाचां श्रवणाद्रणमद्य ते।
श्रेयः स्याच्छौर्यमालम्ब्य जयभाग्भोक्ष्यसे महीम् ॥ २१९ ॥

---

ऐसी महिमा घनवट। गंगा तैसी चोखट। जया देखीं जगीं सुभट। वांठ जहाले ॥ २१३ ॥ तें पौरुष तुझें अद्भुत। आइकोनियां समस्त जाहले आथि विरक्त। जीवितेंसी ॥ २१४ ॥ जैसा सिंहाचिया हांका। युगांतु होय मदमुखा। तैसा कौरवां अशेखां। धाकु तुझा ॥ २१५ ॥ जैसे पर्वत वज्रातें। ना तरी सर्प गरुडातें। तैसे अर्जुना हे तूतें। मानिती सदा ॥ २१६ ॥ तें अगाधपण जाईल। मग हिणावो अंगा येईल। 'जरी मागुता निघसील। न झुंजताचि ॥२१७॥ आणि हे पळतां पळों नेदिती। धरूनि अवकळा करिती। न गणित कुटी बोलती। आइकतां तुज ॥ २१८ ॥ मग ते वेळीं हियें फुटावें। आतां लाठेपणें कां न झुंजावें। हें जितलें तरी भोगावें। महीतळ ॥ २१९ ॥

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥

यदि वात्र रणे प्राणान्युध्यमानो विहास्यसि ।
तदा स्वर्गसुखं नूनं विनायासमवाप्स्यसि ॥ २२० ॥

अतोऽत्र विषये पार्थ न ते कार्या विचारणा ।
उत्तिष्ठ धनुरादाय योद्धुकामोऽधुना द्रुतम् ॥ २२१ ॥

स्वधर्मश्चरितो दोषं विद्यमानं निरस्यति ।
कुतः पातकशङ्का तु चित्ते तेऽत्र कृतास्पदा ॥ २२२ ॥

नावा गच्छन् निमज्जेत्किं सुपथा किं स्खलेद्व्रजन् ।
चलितुं यस्तु नो वेद तस्येदं जातु संभवेत् ॥ २२३ ॥

दुग्धं स्यान्मृत्यवे पातुर्विषेण सह सेवितम् ।
स्वधर्मोऽपि हि दोषाय चरितश्चेत्फलाशया ॥ २२४ ॥

तस्मान्निष्काम एव त्वं प्रवर्तस्व रणेऽर्जुन ।
न पापं युध्यमानस्य क्षात्रधर्मानुसारतः ॥ २२५ ॥

---

ना तरी रणीं एथ । झुंजतां वेंचलें जीवित । तरी स्वर्गसुख अनकळित। पावसील ॥ २२० ॥ म्हणोनि ये गोठी । विचारु न करीं किरीटी । आतां धनुष्य घेऊनि उठीं । झुंजें वेगीं ॥ २२१ ॥ देखें स्वधर्मु हा आचरतां । दोषु नाशे असता । तुज भ्रांति हे कवण चित्ता । पातकाची ॥ २२२ ॥ सांगें प्लवेंचि काय बुडिजे । कां मार्गीं जातां आडळिजे । परी विपायें चालों नेणिजे । तरी तेंही घडे ॥ २२३ ॥ अमृतें तरीचि मरिजे । जरी विखेंसीं सेविजे । तैसा स्वधर्में दोषु पाविजे । हेतुकपणें ॥२२४॥ म्हणोनियां पार्था । हेतू सांडूनि सर्वथा । तुज क्षात्रवृत्ति झुंजतां । पाप नाहीं ॥ २२५ ॥

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥

प्राप्ते सुखे धीरमतिर्न हृष्येद् दुःखे विषादं न भजेत्कदापि।
लाभस्य हानेश्च तथैव चित्ते दद्याद्विचाराय च नावकाशम् ॥२२६॥
रणे जयश्रीरिह मां वृणीत देहोऽथवा मे लयमेव यायात्
इत्येतदज्ञेयमतर्कगम्यं न चिन्तयेद्भाविनमर्थमादौ ॥ २२७ ॥
स्वयं स्वधर्मं चरता शुभं यद्यद्वाशुभं प्राप्यत एव किंचित्।
स्वस्थेन चित्तेन तदेव सर्वमनन्यगत्या मनुजेन भोग्यम् ॥ २२८ ॥
एवं नृणां निश्चितमानसानां दोषाः प्रकृत्यैव न संभवन्ति ।
तस्मादिदानीमविशङ्कमेव युद्धे प्रवर्तस्व सुधीरचेताः ॥ २२९ ॥

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु ।
बुध्या युक्तो यथा पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥

इयं सांख्यस्थितिः पार्थ कथिता ते समासतः ।
इदानीं बुद्धियोगश्च कथ्यते स निशम्यताम् ॥ २३० ॥
निष्कामकर्मयोगोऽयं येन संसेव्यतेऽर्जुन ।
कदापि स नरो नैव कर्मबन्धेन बध्यते ॥ २३१ ॥

---

सुखीं संतोषा न यावें । दुःखीं विषादा न भजावें । आणि लाभालाभ न धरावे । मनामाजीं ॥ २२६ ॥ एथ विजयपण होईल । कां सर्वथा देह जाईल । हें आधींच कांहीं पुढील । चिंतावें ना ॥ २२७ ॥ आपणयां उचिता । स्वधर्मे राहाटतां । जें पावें तें निवांता । साहोनि जावें ॥२२८॥ ऐसेया मनें होआवें । तरी दोषु न घडे स्वभावें । म्हणोनि आतां झुंजावें । निभ्रांत तुवां ॥ २२९ ॥ हे सांख्यस्थिति मुकुलित । सांगितली तुज एथ आतां बुद्धियोगु निश्चित । अवधारीं पां ॥ २३० ॥ जया बुद्धियुक्ता । जाहलिया पार्था । कर्मबंधु सर्वथा । बाधूं न पवे ॥ २३१ ॥

कवचं विभ्रताभेद्यं वज्रसारं विषह्यते ।
जयिना शस्त्रसंपातः क्षतेन च न भूयते ॥ २३२ ॥

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥

तथास्मिन्कर्मयोगेऽपि पूर्वानुक्रमशुद्धितः ।
भज्यन्ते नैहिका भोगाः स्वर्गोऽपि समवाप्यते ॥ २३३ ॥
वर्तितव्यं जगत्यस्मिन् कर्माधारेण मानवैः ।
न तु कर्मफले भाव्यं सोत्सुकं वद्धदृष्टिभिः ॥ २३४ ॥
मन्त्रज्ञे भूतबाधेव नोपाधिस्तत्र मूर्च्छति ।
योऽनासक्ततया कर्म कर्तुं जानाति बुद्धिमान् ॥ २३५ ॥
अबाध्या पुण्यपापाभ्यामतिसूक्ष्मा सुनिश्चला ।
गुणत्रयाद्यलिप्ता च यदि पुण्यवशान्नृणाम् ॥ २३६ ॥
सुबुद्धिः संप्रकाशेत स्तोकांशेनापि चेतसि ।
तदा विनाशयेन्नूनं सर्वं संसारजं भयम् ॥ २३७ ॥

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥

---

जैसें वज्रकवच लेइजे । मग शस्त्रांचा वर्षावो साहिजे । पर जैतेंसी उरिजे । अचुंबित ॥ २३२ ॥ तैसें ऐहिक तरी न नशे । आणि मोक्षु तो उरला असे । जेथ पूर्वानुक्रमु दिसे । चोखाळत ॥ २३३ ॥ कर्माधारें राहाटिजे । परी कर्मफळ न निरीक्षिजे । जैसा मंत्रज्ञु न बाधिजे । भूतबाधा ॥ २३४ ॥ तियापरी जे सुबुद्धि । आपु जालिया निरवधि । हा असताचि उपाधि । आकळूं न सके ॥ २३५ ॥ जेथ न संचरे पुण्यपाप । जें सूक्ष्म अति निष्कंप । गुणत्रयादि लेप । न लगती जेथ ॥ २३६ ॥ अर्जुना ते पुण्यवशें । जरी अल्पचि हृदयीं बुद्धि प्रकाशे । तरी अशेषही नाशे । संसारभय ॥ २३७ ॥

अल्पा दीपशिखानल्पं तेजो नाविष्करोति किम् ।
अहो सुबुद्धिरल्पापि तथात्वेन न गृह्यताम् ॥ २३८ ॥
विचारपटुभिः पार्थ बहुधेयमपेक्ष्यते ।
चराचरेषु सर्वेषु या प्रायेण सुदुर्लभा ॥ २३९ ॥
न हि स्पर्शोपला लभ्या भूयांसोऽन्योपला इव ।
प्राप्यः पीयूषलेशोऽपि न विना भाग्यसंपदम् ॥ २४० ॥
परमात्मा ध्रुवं साक्षात्पर्यन्ते प्राप्यते यया ।
भागीरथ्या यथाम्भोधिः सद्बुद्धिः सा सुदुर्लभा ॥ २४१ ॥
न यस्या ईश्वरादन्यत् प्राप्यं किमपि विद्यते ।
एवंविधा जगत्यस्मिन् सद्बुद्धिः केवलार्जुन ॥ २४२ ॥
बुद्धिस्तदितरा सर्वा दुर्मतिर्या विकारिणी ।
रमन्ते सततं यत्र विवेकविमुखा जनाः ॥ २४३ ॥
लभन्ते निरयावस्थां संसारं स्वर्गमप्यमी ।
दुर्धियो जायतेऽमीषां न त्वात्मसुखदर्शनम् ॥ २४४ ॥

---

जैसी दीपकळिका धाकुटी । परी बहु तेजातें प्रगटी । तैसी सद्बुद्धि हे थेकुटी । म्हणों नये ॥ २३८ ॥ पार्था बहुतीं परीं । हे अपेक्षिजे विचारशूरीं । जे दुर्लभ चराचरीं । सद्वासना ॥ २३९ ॥ आणिकां सारिखा बहुवसु । जैसा न जोडे परिसु । कां अमृताचा लेशु । दैवगुणें ॥ २४० ॥ तैसी दुर्लभ सद्बुद्धि । जिये परमात्माचि अवधि । जैसा गंगेसी उदधि । निरंतर ॥ २४१ ॥ तैसी ईश्वरावांचुनि कांहीं । जिये आणीक लाणी नाहीं । ते एकचि बुद्धि पाहीं । अर्जुना जगीं ॥ २४२ ॥ येर ते दुर्मति । जे बहुधा असे विकरती । तेथ निरंतर रमती । अविवेकिये ॥ २४३ ॥ म्हणोनि त्यां पार्था । स्वर्ग संसार नरकावस्था । आत्मसुख सर्वथा । दृष्ट नाहीं ॥ २४४ ॥

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥
भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥४४॥

**वेदवाक्यानुसारेण कर्मश्रेष्ठत्ववादिनाम् ।**
**एतान्कर्मफलासक्तान् दुर्बुद्धीन्कलयार्जुन ॥ २४५ ॥**
**संसारे जन्म लब्ध्वेह कार्या यज्ञादिकाः क्रियाः ।**
**भोग्यं मनोहरं स्वर्गसुखं चेति ब्रुवन्त्यमी ॥ २४६ ॥**
**अन्यत्स्वर्गसुखादत्र सुखमेव न सर्वथा ।**
**इति दुर्बुद्धिसंयुक्तैः सिद्धान्तः प्रतिपाद्यते ॥ २४७ ॥**
**कामनाधीनचित्तास्ते मन्दा भोगैकदृष्टयः ।**
**तानि तानीह कर्माणि पश्य काम्यानि कर्वते ॥ २४८ ॥**
**नानाविधैरनुष्ठानैरलुम्पन्तो मनागपि ।**
**विधिं पटुत्वमाश्रित्य धर्मकृत्यं वितन्वते ॥ २४९ ॥**
**अयुक्तं त्विदमेवैषां स्वर्गकामा भवन्ति यत् ।**
**विस्मरन्ति च भोक्तारं यज्ञस्य परमेश्वरम् ॥ २५० ॥**

---

वेदाधारें बोलती । केवळ कर्म प्रतिष्ठिती । परी कर्मफळीं आसक्ति । धरूनियां ॥ २४५ ॥ म्हणती संसारीं जन्मिजे । यज्ञादिक कर्म कीजे । मग स्वर्गसुख भोगिजे । मनोहर ॥ २४६ ॥ एथ हें वांचूनि कांहीं । आणिक सर्वथा सुखचि नाहीं । ऐसें अर्जुना बोलती पाहीं । दुर्बुद्धि ते ॥ २४७ ॥ देखें कामनाअभिभूत । होऊनि कर्में आचरत । ते केवळ भोगीं चित्त । देऊनियां ॥ २४८ ॥ क्रियाविशेषें बहुतें । न लोपिती विधीतें । निपुण होऊनि धर्मातें । अनुष्ठिती ॥ २४९ ॥ परी एकचि कुडें करिती । जे स्वर्गकामु मनीं धरिती । यज्ञपुरुषा चुकती । भोक्ता जो ॥ २५० ॥

पावकेन महाराशिः कर्पूरस्य विदह्यते।
मिष्टान्नं कालकूटेन मिश्रितं जीवितापहम् ॥ २५१ ॥
दैवलब्धः सुधाकुम्भः पादघातेन शीयते।
तथात्रानुष्ठितो धर्मो विनश्यति फलाशया ॥ २५२ ॥
आयासादर्जिते पुण्ये संसारः किमपेक्ष्यते।
मन्दात्मानो न जानन्ति ते त्विदं किं विधीयताम् ॥२५३ ॥
यथा वा पाचिका काचिद्रन्धितं स्वयमुत्तमम्।
अन्नं धनाशया दद्याद् गृहीत्वा मूल्यमन्यतः।
तथा भोगेच्छया धर्मं विसृजन्त्यविवेकिनः ॥ २५४ ॥
वेदानामर्थवादेषु पार्थ येषामतो रतिः।
तेषां चेतसि दुर्बुद्धिमवेहीमां कृतास्पदाम् ॥ २५५ ॥

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥४५॥

त्रैगुण्येनावृता वेदा इतीदमवधारय।
तत्रोपनिषदाद्या ये भागास्ते सात्त्विकाः पुनः ॥ २५६ ॥

---

जैसा कर्पूराचा राशि कीजे। मग अग्नि लावूनि दीजे। कां मिष्टान्नीं संचराविजे। काळकूट ॥ २५१ ॥ दैवें अमृतकुम्भ जोडला। तो पायें हाणोनि उलंडिला। तैसा नाशिती धर्मु निपजला। हेतुकपणें ॥ २५२ ॥ सायासें पुण्य आर्जिजे। मग संसारु कां अपेक्षिजे। परी नेणती ते काय कीजे। अप्राप्त देखें ॥ २५३ ॥ जैसी रांधवणी रससोय निकी। करूनियां मोलें विकी। तैसा भोगासाठीं अविवेकी। घाडिती धर्मु ॥ २५४ ॥ म्हणोनि हे पार्था। दुर्बुद्धि देख सर्वथा। तयां वेदवादरतां। मनीं वसे ॥ २५५ ॥ तिहीं गुणीं आवृत। हे वेद जाण निभ्रांत। म्हणोनि उपनिषदादि समस्त। सात्त्विक ते ॥ २५६ ॥

रजस्तमोवृतास्त्वन्ये यत्र कर्मादि वर्णितम् ।
ये चार्जुन भवन्तीह केवलं स्वर्गसूचकाः ॥ २५७ ॥
अतो हेतुमिमान्विद्धि केवलं सुखदुःखयोः ।
तत्र मा स्म पदं कार्षीद्-हृदयं जातुचित्तव ॥ २५८ ॥
निस्त्रैगुण्यत्वमातिष्ठ निर्द्वन्द्वो निर्ममो भव ।
मा विस्मृतिपदं ते भूदेकमात्मसुखं हृदि ॥ २५९ ॥

यावानार्थ उदपाने सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥४६॥

वेदेनोक्तं भूय एवास्तु कामं ते ते भेदाः सूचिताः सन्तु नाम ।
श्रेयोऽस्माकं तत्र यन्निश्चयेन तद् ग्राह्यं नः सर्वमन्यद्विहाय ॥
आविर्भूते चण्डभानौ निशान्ते ते ते मार्गा दृक्पथे नः पतन्ति ।
आक्रम्यन्ते किं न्वमी सर्व एव चक्ष्वैतन्मे पार्थ तावत्त्वमेव॥२६१॥
जाता सर्वाप्यम्मयी मेदिनी चेदद्भिः कार्यं तावतीभिर्नु किं नः ।
तृष्णाशान्त्यै गृह्यते तावदम्भः पातुं यावज्जायते नोऽभिलाषः ॥

---

येर रजतमात्मक। जेथ निरूपिजे कर्मादिक। जें कवळ स्वर्गसूचक। धनुर्धरा ॥ २५७ ॥ म्हणोनि तूं जाण। हे सुखदुःखांसीच कारण। एथ झणें अंतःकरण। रिगों देसी ॥ २५८ ॥ तूं गुणत्रयातें अव्हेरीं। मी माझें हें न करीं। एक आत्मसुख अंतरीं। विसंब झणीं ॥ २५९ ॥ जरी वेदें बहुत•बोलिलें। विविध भेद सूचिले। तऱ्ही आपण हित आपुलें। तेंचि घेपें ॥ २६० ॥ जैसा प्रगटलिया गभस्ती। अशेषही मार्ग दिसती। तरी तेतुलेहि काय चालिजती। सांगें मज ॥ २६१ ॥ कां उदकमय सकळ। जऱ्ही जाहलें असे महीतळ। तरी आपण घेपें केवळ। आर्तीचजोगें ॥ २६२ ॥

एवं ये स्युर्ज्ञानवन्तोऽत्र केचित्ते वेदार्थं सम्यगादौ विचार्य ।
पश्चादङ्गीकुर्वते ब्रह्म नित्यमेतेषां यद्वाञ्छितं केवलं स्यात् ॥

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ४७ ॥

अतः शृण्वनया दृष्ट्या पश्यतो मे वचोऽर्जुन ।
यत्संग्रामः स्वकर्मैव युक्तरूपस्तवाधुना ॥ २६४ ॥
विविच्यार्थमिमं सर्वमिदमेव सुनिश्चितम् ।
मया यद्विहितं कर्म न ते त्याज्यं कदाचन ॥ २६५ ॥
नेहा कर्मफले कार्या न वा सङ्गोऽप्यकर्मणि ।
करणीया तु सत्येव क्रिया निष्कामचेतसः ॥ २६६ ॥

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥

निष्कामकर्मयोगस्थः फलसङ्गं परित्यजन् ।
भूत्वावहितचित्तस्त्वं सत्कर्माण्याचरार्जुन ॥ २६७ ॥
यदि कर्म समारब्धं दिष्ट्या सिद्धिमवाप्नुयात् ।
सविशेषतया तोषस्तदा कर्तुं न युज्यते ॥ २६८ ॥

---

तैसे ज्ञानी जे होती । ते वेदार्थातें विवरिती । मग अपेक्षित तें स्वीकारिती । शाश्वत जें ॥ २६३ ॥ म्हणोनि आइकें पार्था । याचि परी पहातां । तुज उचित होय आतां । स्वकर्म हें ॥ २६४ ॥ आम्हीं समस्तही विचारिलें । तंव ऐसेंचि हें मना आलें । जे न सांडिजे तुवां आपुलें । विहित कर्म ॥ २६५ ॥ परी कर्मफळीं आस न करावी । आणि कुकर्मीं संगति न व्हावी । हे सत्क्रियाचि आचरावी । हेतूविण ॥ २६६ ॥ तूं योगयुक्त होउनी । फळाचा संगु टाकुनी । मग अर्जुना चित्त देउनी । करीं कर्में ॥ २६७ ॥ परी आदरिलें कर्म दैवें । जरी समाप्तीतें पावे । तरी विशेषें तेथ तोषावें । हेंही नको ॥ २६८ ॥

कुतोऽपि यदि वा हेतोस्तिष्ठेत् सिद्धिमनाप्नुवन्।
तदाप्यपरितोषेण चित्तक्षोभं भजेन्न हि ॥ २६९ ॥
क्रियमाणस्य संसिद्धौ ननु प्राप्ता कृतार्थता।
विपत्तावपि साफल्यं प्राप्तमित्येव गण्यताम् ॥ २७० ॥
यावन्निष्पद्यते कर्म तावच्चेदीश्वरेऽर्प्यते।
परिपूर्णं स्वभावात्तज्जातमित्यवधार्यताम् ॥ २७१ ॥
समत्वं मनसो यद्धि साङ्गे व्यङ्गे न कर्मणि।
सैव योगस्थितिस्तां च प्रशंसन्ति विपश्चितः ॥ २७२ ॥

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥
बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥

मनसश्चापि बुद्धेश्च यत्रैक्यं वर्ततेऽर्जुन।
समता तत्र चित्तस्य योगसारं तदेव च ॥ २७३ ॥
विवृण्वन् बुद्धियोगं तं कलये भूयसाऽवरम्।
कर्मयोगमिमं पार्थ कामाहंकारसंयुतम् ॥ २७४ ॥

---

की निमित्तें कोणे एकें। तें सिद्धी न वचत ठाके। तरी तेथिचेनि अपरितोखें। क्षोभावें ना ॥ २६९ ॥ आचरतां सिद्धी गेलें। तरी काजाचि कीर आलें। परी ठेलियाही सगुण जहालें। ऐसेंचि मानीं ॥ २७० ॥ देखें जेतुलें कर्म निपजे। तेतुलें आदिपुरुषीं अर्पिजे। तरी परिपूर्ण सहजें। जहालें जाणें ॥ २७१ ॥ देखें संतासंतीं कर्मीं। हें जें सरिसेंपण मनोधर्मीं। तेचि योगस्थिति उत्तमीं। प्रशंसिजे ॥ २७२ ॥ अर्जुना समत्व चित्ताचें। तेंचि सार जाण योगाचें। जेथ मना आणि बुद्धीचें। ऐक्य आथी ॥२७३॥ तो बुद्धियोग विचारितां। बहुतें पाडें पार्था। दिसे हा अरुता। कर्मयोगु ॥ २७४ ॥

तदेव त्वाचरन् कर्म बुद्धियोगमुपाश्नुते ।
कर्तृत्वमदहीनं हि फलास्वादाविवर्जितम् ।
शेषं कर्म स्थितं यत्सा योगस्थितिरुदाहृता ॥ २७५ ॥
सुप्रतिष्ठमवेहीमं बुद्धियोगमतोऽर्जुन ।
तत्र स्थिरमना भूत्वा फलसङ्गं परित्यज ॥ २७६ ॥
बुद्धियोगे हि ये युक्तास्त एव भवपारगाः ।
पापपुण्यात्मकैर्बन्धैर्मुच्यन्त उभयोरपि ॥ २७७ ॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥

कुर्वन्तोऽपीह कर्माणि न ते कर्मफलस्पृशः ।
यातायातानि लुप्यन्ति जन्ममृत्युकृतान्यतः ॥ २७८ ॥
बुद्धियोगसमायोगाद् ब्रह्मानन्दपरिप्लुतम् ।
ते धनुर्धर पर्यन्ते प्राप्नुवन्त्यच्युतं पदम् ॥ २७९ ॥

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥

---

परी तेंचि कर्म आचरिजे । तरीच हा योगु पाविजे । जें कर्मशेष सहजें । योगस्थिति ॥ २७५ ॥ म्हणोनि बुद्धियोगु सधरु । तेथ अर्जुना होईं स्थिरु । मन करीं अव्हेरू । फळहेतूचा ॥ २७६ ॥ जे बुद्धियोगा योजिले । तेचि पारंगत जाहले । इहीं उभयबंधीं सांडिलें । पापपुण्यीं ॥ २७७ ॥ ते कर्मी तरी वर्तती । परी कर्मफळा नातळती । आणि यातायाती लोपती । अर्जुना तयां ॥ २७८ ॥ मग निरामयभरित । पावती पद अच्युत । ते बुद्धियोगयुक्त । धनुर्धरा ॥ २७९ ॥

इमं मोहं समुत्तीर्णो भवितासि त्वमीदृशः ।
निर्वेदश्च पदं चित्ते कर्ता तव धनंजय ॥ २८० ॥
ततो विशुद्धगहनमात्मज्ञानं जनिष्यते ।
येन चित्तं निरिच्छं ते विनायासं भविष्यति ॥ २८१ ॥
ज्ञातव्यमधिकं किंचित्-ज्ञातं स्मर्तव्यमेव वा ।
इत्येतत्तदवस्थस्य विरमेदखिलं तव ॥ २८२ ॥

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यति ॥ ५३ ॥

इन्द्रियैः संगतत्वाद्या बुद्धिश्चाञ्चल्यमञ्चति ।
भूयोऽप्यात्मस्वरूपे सा स्थिरतामुपयास्यति ॥ २८३ ॥
तस्यां स्थैर्यमुपेतायां समाधिसुख एव च ।
केवले सकलां योगस्थितिं विद्धि स्वहस्तगाम् ॥ २८४ ॥

अर्जुन उवाच—

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥

तदार्जुनोऽब्रवीद्देव ख्याहि मह्यं कृपानिधे ।
पृच्छ्यसे त्वं मयेदानीमिदमेवाधिकृत्य यत् ॥ २८५ ॥

---

तूं ऐसा तैं होसी । जैं मोहातें यया सांडिसी । आणि वैराग्य मानसीं । संचरेल ॥ २८० ॥ मग निष्कळंक गहन । उपजेल आत्मज्ञान । तेणें निचाड होईल मन । आपैसें तुझें ॥ २८१ ॥ तेथ आणिक कांहीं जाणावें। कां मागिलातें स्मरावें । हें अर्जुना आघवें । पारुषेल ॥ २८२ ॥ इन्द्रियांचिया संगतीं । जिये पसरु होतसे मती । स्थिर होईल मागुती । आत्मस्वरूपीं ॥ २८३ ॥ समाधिसुखीं केवळ । जैं बुद्धि होईल निश्चळ । तैं पावसी तूं सकळ । योगस्थिति ॥ २८४ ॥ तेथ अर्जुन म्हणे देवा । हाचि अभिप्रावो आघवा । मी पुसेन आतां सांगावा । कृपानिधी ॥ २८५ ॥

अच्युतोऽथ जगादैनं पार्थं प्रीतेन चेतसा ।
यत्ते समुचितं प्रष्टुं तत्सुखेनैव पृच्छ्यताम् ॥ २८६ ॥
एवमुक्तोऽर्जुनः कृष्णं प्रपच्छ स्नेहपूर्वकम् ।
कं स्थितप्रज्ञ इत्याहुरभिज्ञेयः कथं च सः ॥ २८७ ॥
उदाहरन्ति यं लोके स्थिरबुद्धिं विपश्चितः ।
यः समाधिसुखं भुङ्क्ते शश्वत् किंलक्षणः स हि ॥ ८८ ॥
किमवस्थः स किंरूपः किमाचारोऽत्र वर्तते ।
इदं लक्ष्मीपते सर्वं मह्यमाख्यातुमर्हसि ॥ २८९ ॥
तदा साक्षात्परब्रह्म संश्रयः षड्गुणस्य यः ।
नारायणः स भगवानिमां वाचमभाषत ॥ २९० ॥

श्रीभगवानुवाच—

प्रजहाति यदा कामान् सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥

विषयेष्वभिलाषो यः प्रौढो मनसि वर्तते ।
सोऽयमात्मसुखस्येह प्रत्यूहं तनुतेऽर्जुन ॥ २९१ ॥

---

मग अच्युत म्हणे सुखें । जें किरीटी तुज निकें । तें पूस पां उन्मेखें । मनाचेनि ॥ २८६ ॥ या बोला पार्थें । म्हणितलें सांग पां श्रीकृष्णातें । काय म्हणिपे स्थितप्रज्ञातें । वोळखें । केवीं ॥ २८७ ॥ आणि स्थिरबुद्धि जो म्हणिजे । तो कैसिया चिन्हीं जाणिजे । जो समाधिसुख भुंजे । अखंडित ॥ २८८ ॥ तो कवणें स्थिती असे । कैसेनि रूपी विलसे । देवा सांगावें हें ऐसें । लक्ष्मपती ॥ २८९ ॥ तंव परब्रह्म अवतरणु । जो षड्गुणाधिकरणु । तो काय तेथ नारायणु । बोलतु असे ॥ २९० ॥ म्हणे अर्जुना परियेसी । जो हा अभिलाषु प्रौढ मानसीं । तो अंतराय स्वसुखेंसीं । करीत असे ॥ २९१ ॥

तमवेहि स्थितप्रज्ञं नित्यतृप्तोऽस्ति यो नरः ।
नित्यानन्दमयं चापि हृदयं यस्य विद्यते ॥ २९२ ॥
पतन्ति यस्य सङ्गेन जना विषयकर्दमे ।
स कामो गलितो यस्य रतश्चात्मसुखेऽस्ति यः ॥ ९३ ॥

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥

नानादुःखेष्ववाप्तेषु यस्योद्वेगो न जायते ।
नास्ति लाभे सुखस्यापि सायासो यः कदाचन ॥ २९४ ॥
कामक्रोधविनिर्मुक्तं स्वभावाद्यस्य मानसम् ।
पूर्णावस्थां गतं यं च न भीः स्पृशति जात्वपि ॥ ९५ ॥
भूतो देहप्रज्ञादीन्सर्वोपाधीन्निरस्य यः ।
भेदहीनो निरवधिः स्थिरबुद्धिमवेहि तम् ॥ २९६ ॥

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥

प्रपातने प्रकाशस्य पूर्णचन्द्रो न पश्यति ।
अधमोत्तमतां तद्वद् यः सर्वत्र समः सदा ॥ २९७ ॥

---

जो सर्वदा नित्यतृप्तु । अंतःकरणभरितु । परी विषयामाजीं पतितु । जेणें संगें कीजे ॥ २९२ ॥ तो कामु सर्वथा जाये । जयाचें आत्मतोषीं मन राहे । तोचि स्थितप्रज्ञु होये । पुरुष जाणे ॥ २९३ ॥ नानादुःखीं प्राप्तीं । जयासी उद्वेगु नाहीं चित्तीं । आणि सुखाचिया आर्ति । अडवैजेना ॥ २९४ ॥ अर्जुना तयाच्या ठायीं । कामक्रोधु सहजें नाहीं । आणि भयातें नेणें कहीं । परिपूर्णु तो ॥ २९५ ॥ ऐसा जो निरवधि । तो जाण पां स्थिरबुद्धि । जो निरसूनि उपाधि । भेदरहितु ॥२९६॥ जो सर्वत्र सदा सरिसा । परिपूर्ण चंद्रु कां जैसा । अधमोत्तम प्रकाशा-। माजीं न म्हणें ॥ २९७ ॥

ईदृशी समता शश्वद्भूतमात्रे दयालुता।
कदापि च मनो यस्य विक्रियां नैव गच्छति ॥ २९८ ॥
शुभे प्राप्ते न संतोषो विषादोऽप्यशुभे न हि।
सर्वथा कुरुते चित्ते पदं यस्य कदाचन ॥ २९९ ॥
एवंविधं नरवरं हर्षशोकविवर्जितम्।
आत्मबोधान्वितं विद्धि स्थिरबुद्धिं धनुर्धर ॥ ३०० ॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥५८॥

यथा कूर्मो निजाङ्गानि प्रसारयति मोदवान्।
स्वेच्छयैवात्मनात्मानं यथा संहरतेऽथवा ॥ ३०१ ॥
तथेन्द्रियाणि सर्वाणि स्वाधीनानि करोति यः
स्वोक्तं कारयते चापि स्थिरबुद्धिमवेहि तम् ॥ ३०२ ॥

विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥५९॥

अन्यत्ते कथयिष्यामि कौतुकं तन्निशम्यताम्।
नियमैर्विषयान्केचिद्ये परित्यज्य साधकाः ॥ ३०३ ॥

---

ऐसी अनवच्छिन्न समता। भूतमात्रीं सदयता। आणि पालटु नाहीं चित्ता। कवणे वेळे ॥ २९८ ॥ गोमटें कांहीं पावे। तरी संतोषें तेणें नाभिभवे। जो ओखटेनि नागवे विषादासी ॥ २९९ ॥ ऐसा हरिखशोकरहितु। जो आत्मबोधभरितु। तो जाण पां प्रज्ञायुक्तु। धनुर्धरा॥३००॥ देखें कूर्मांचिया परी। उवाइला अवेव पसरी। ना तरी इच्छावशें आवरी। आपुले आपुण ॥ ३०१ ॥ तैसीं इन्द्रियें आपैतीं होती। जयाचें म्हणितलें करिती। तयाची प्रज्ञा जाण स्थिति। पातली असे ॥ ३०२ ॥ अर्जुना आणिकही एक। सांगेन ऐकें कवतिक। जे विषयांतें साधक। त्यजिती नियमें ॥ ३०३ ॥

आवृण्वन्तीह कर्णादीनीन्द्रियाणि कथंचन ।
न तु जिह्वां नियच्छन्ति ग्रस्यन्ते विषयैरमी ॥ ३०४ ॥
लूनेषु पल्लवाग्रेषु भूयो भूयोऽपि केवलम् ।
कथं वृक्षो विपद्येत सिक्तमूलोऽम्भसा यदि ॥ ३०५ ॥
यथोदकवलेनासौ तिरोविस्तारमश्नुते ।
तथा रसनया पुष्टिं विषयोऽभ्येति चेतसि ॥ ३०६ ॥
नियन्तुं विषयाः शक्या अन्ये न तु रसो हठात् ।
विनैनं हि मनुष्याणां सुघटं जीवनं न हि ॥ ३०७ ॥
यदा त्वनुभवेनैव ब्रह्म संपद्यते तदा ।
स्वभावादेव शक्नोति नियन्तुं रसनामपि ॥ ३०८ ॥
प्रतीतौ सोऽहमस्मीति यान्त्यदर्शनतां नृणाम् ।
देहभावा इन्द्रियाणि विषयान् विस्मरन्ति च ॥ ३०९ ॥

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥

---

श्रोत्रादि इंद्रियें आवरिती । परि रसने नियमु न करिती । ते सहस्रधा कवाळिजती । विषयीं इहीं ॥ २०४ ॥ जैसी वरिवरी पालवी खुडिजे । आणि मुळीं उदक घालिजे । तरी कैसेनि नाशु निपजे । तया वृक्षा ॥ ३०५ ॥ तो उदकाचेनि बळें अधिकें । जैसा आडवेनि आंगें फांकें । तैसा मानसीं विषो पोखे । रसनाद्वारें ॥ ३०६ ॥ येरां इंद्रियां विषय तुटे । तैसा नियमू न ये रस हटें । जें जीवन हें न घटे । येणेंविण ॥ ३०७ ॥ मग अर्जुना स्वभावें । ऐसियाही नियमातें पावे । जैं परब्रह्म अनुभवें । होऊनि जाइजे ॥ ३०८ ॥ तैं शरीरभाव नासती । इंद्रियें विषय विसरती । जैं सोऽहंभावप्रतीति । प्रगट होय ॥ ३०९ ॥

न चेदं साधनायत्तमिति कौन्तेय गण्यताम् ।
शश्वत्प्रयतमानानां दुर्जयानीन्द्रियाणि हि ॥ ३१० ॥
गोपायितारमभ्यासं वृतिं सनियमान् यमान् ।
ये विधाय मनो मुष्टाविव गृह्णन्ति नित्यशः ॥ ३११ ॥
क्रियन्ते विवशास्तेऽपि पिशाचैरिव मान्त्रिकाः ।
इन्द्रियैः साधका एवंप्रभावाणीन्द्रियाणि भोः ॥ ३१२ ॥
विषया उपयन्त्येतान् ऋद्धिसिद्धिमिषादमी ।
अथैषामिन्द्रियद्वारा मनो व्याकुलयन्ति च ॥ ३१३ ॥
भवत्यक्षममभ्यासे मन एवमवस्थितम् ।
इन्द्रियाणां बलीयस्त्वमीदृशं वर्ततेऽर्जुन ॥ ३१४ ॥

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥

पार्थ यो विषयेष्वास्थां परित्यज्याखिलेष्वपि ।
इन्द्रियाणि स्वकीयानि सर्वथैव नियच्छति ॥ ३१५ ॥

---

येऱ्हवीं तरी अर्जुना । हें आया न ये साधना । जे राहटताती जतना । निरंतर ॥ ३१० ॥ जयातें अभ्यासाची घरटी । यमनियमांची ताटी । जे मनातें सदा मुठी । धरूनि आहांती ॥ ३११ ॥ तेही किजती कासाविसी । या इंद्रियांची प्रौढी ऐसी । जैसी मंत्रज्ञातें विवसी । भुलवी कां ॥३१२॥ देखें विषय हे तैसे । पावती ऋद्धिसिद्धीचेनि मिषें । मग आकळिती स्पर्शें इंद्रियांचेनि ॥ ३१३ ॥ तिये संधीं मन जाये । मग अभ्यासीं थोटावलें ठाये । ऐसें बळकटपण आहे । इंद्रियांचें ॥ ३१४ ॥ म्हणोनि आइकें पार्था । यांतें निर्दळी जो सर्वथा । सर्व विषयीं आस्था । सांडोनियां ॥३१५॥

सुखेन न हृतं यस्य मनो विषयजन्मना ।
तमेव त्वं विजानीहि योगनिष्ठाधिकारिणम् ॥ ३१६ ॥
स आत्मज्ञानसंपन्नः संततं ह्यवतिष्ठते ।
हृदा स्वेन हृदिस्थं मां न तथा विस्मरत्यपि ॥ ३१७ ॥
विषयेषु परित्यक्तेष्वपि बाह्येषु चेद् हृदि।
अल्पापि वासना यस्य संसारस्तस्य न क्षतः ॥ ३१८ ॥
सेवितो विषलेशोऽपि बहुलीभावमाप्नुवन् ।
जीवितान्तं करोत्येव निःशङ्कं सेवितुर्यथा ॥ ३१९ ॥
तथैव विषयांशोऽपि शिष्यमाणो मनोभुवि ।
विवेक जातमखिलमुन्मूलयति सर्वथा ॥ ३२० ॥

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६२ ॥
क्रोधाद्भवति संमोहः संमोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६३ ॥

---

तोचि तूं जाण । योगनिष्ठेसी कारण । जयाचें विषयसुखें अंतःकरण । झकवेना ॥ ३१६ ॥ तो आत्मबोधयुक्तु । होऊनि असे सततु । जो मातें हृदयाआंतु । विसंबेना ॥ ३१७ ॥ येऱ्हवीं बाह्य विषय तरी नाहीं । परी मानसीं होईल जरी कांहीं । तरी साद्यंतुचि पाहीं । संसारु असे ॥ ३१८ ॥ जैसा कां विषाचा लेशु । घेतलियां होय बहुवसु । मग निभ्रांत करी नाशु । जीवितासी ॥ ३१९ ॥ तैसी विषयाची शंका । मनीं वसती देखा । घातु करी अशेखा । विवेकजाता ॥ ३२० ॥

सङ्गः स्मरणमात्रेण विषयेषूपजायते ।
असक्तानामपि नृणां कामो मूर्तश्च सङ्गतः ॥ ३२१ ॥
कामः संजायते यत्र क्रोधस्तत्र कृतास्पदः ।
क्रोधे निहित एवास्ति संमोह इति गण्यताम् ॥ ३२२ ॥
संमोहे व्यक्ततां याते स्मृतिर्नाशं प्रपद्यते ।
चण्डवाते यथा वाति दीपज्योतिर्विनश्यति ॥ ३२३ ॥
सवितुर्ग्रसते दीप्तिं रजन्यस्तमने यथा ।
दुर्दशाभिभवत्येव स्मृतिभ्रंशे तथा नरम् ॥ ३२४ ॥
ततोऽन्धतां गते तस्मिन्नज्ञानतमसावृत ।
बुद्धिर्व्याकुलतां याति हृदये स्मृतिविभ्रमात् ॥ ३२५ ॥
प्रसङ्गे सति जन्मान्धः स्वैरं धावति दीनवत् ।
तथैव भ्रममाप्नोति बुद्धिर्व्याकुलतां गता ॥ ३२६ ॥
एवं जाते स्मृतिभ्रंशे बुद्धिर्व्यसनमृच्छति ।
तत उन्मूल्यते ज्ञानजातमेतदशेषतः ॥ ३२७ ॥

---

जरी हृदयीं विषय स्मरती । तरी निसंगाही आपजे संगती । संगें प्रगटे मूर्ति । अभिलाषाची ॥ ३२१ ॥ जेथ कामु उपजला । तेथ क्रोधु आधींचि आला । क्रोधीं असे ठेविला । संमोह जाणें ॥ ३२२ ॥ संमोहा जालिया व्यक्ति । तरी नाशु पावे स्मृति । चंडवातें ज्योति । आहत जैसी ॥३२३॥ कां अस्तमानीं निशी । जैसी सूर्यतेजातें ग्रासी । तैसी दशा स्मृतिभ्रंशीं । प्राणियासी ॥ ३२४ ॥ मग अज्ञानांध केवळ । तेणें आप्लविजे सकळ । तेथ बुद्धि होय व्याकुळ । हृदयमाजीं ॥३२५॥ जैसी जात्यंधा पळणी पावे । मग ते काकुळती सैरा धांवे । तैसे बुद्धीसि होती भंवे । धनुर्धरा ॥ ३२६ ॥ ऐसा स्मृतिभ्रंशु घडे । मग सर्वथा बुद्धि अवघडे । तेथ समूळ हें उपडे । ज्ञानजात ॥ ३२७ ॥

चैतन्येन विहीनस्य शरीरस्यास्ति या दशा ।
सैव बुद्धया विहीनस्य जीवस्येत्यवधार्यताम् ॥ ३२८ ॥
अल्पोऽपीन्धनसंपृक्तः स्फुलिङ्गो दीप्यते यदा ।
तदा त्रिभुवनस्यापि दहनाय भवत्यलम् ॥ ३२९ ॥
मनसा विषयान्ध्यायन्पुमानेवं मनागपि ।
व्यसनेनेयताभ्येत्य स नूनमभिभूयते ॥ ३३० ॥

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥

अतोऽमी विषयः सर्वे त्याज्याः सर्वात्मनार्जुन ।
स्व-भावादेव तत्त्यागे रागद्वेषौ विनङ्क्ष्यतः ॥ ३३१ ॥
रागद्वेषविहीनस्य रमन्ते विषयेषु चेत् ।
इन्द्रियाणि तदा नैते बाधका इति गण्यताम् ॥ ३३२ ॥
किमाकाशगतः सूर्यः करैः स्वीयैः स्पृशज्जगत् ।
तत्रत्यवस्तुसंसर्गदोषेण जातु लिप्यते ॥ ३३३ ॥

---

चैतन्याच्या भ्रंशीं । शरीरा दशा जैशी । तैशी पुरुषा बुद्धिनाशीं । होय देखें ॥ ३२८ ॥ म्हणोनी आइकें अर्जुना । जैसा विस्फुलिंग लागे इंधना । मग तो प्रौढ जालिया त्रिभुवना । पुरों शके ॥ ३२९ ॥ तैसें विषयांचें ध्यान । जरी विपायें वाहे मन । तरी येसणें हें पतन । गिंवसीत पावे ॥ ३३० ॥ म्हणोनी विषय हे आघवे । सर्वथा मनौनि सांडावे । मग रागद्वेष॰स्वभावें । नाशतील ॥ ३३१ ॥ पार्था आणिकही एक । जरी नाशले रागद्वेख । तरी इंद्रियां विषयीं बाधक । रमतां नाहीं ॥ ३३२ ॥ जैसा सूर्य आकाशगतु । रश्मिकरें जगातें स्पर्शतु । तरी संगदोष काय लिंपतु । तेथिचेनि ॥ ३३३ ॥

एवमेवेन्द्रियार्थेषु य उदासीनतां गतः ।
आत्मानन्दरसे मग्नः कामक्रोधविवर्जितः ॥ ३३४ ॥
विषयेष्वपि यो नान्यत्पश्यत्यात्मस्वरूपतः ।
तस्य के विषया नाम भवेयुर्बाधकाः कथम् ॥ ३३५ ॥
वारि वारिणि चेन्मज्जेद्दहेच्चेदग्निरग्निना ।
तदा विषयसङ्गेन लिप्तः स्यात्पूर्ण ईदृशः ॥ ३३६ ॥
स्वयमेव स्थितः प्राप्य य एवं सर्वरूपताम् ।
निःशङ्कमचलप्रज्ञं तमेव गणयार्जुन ॥ ३३७ ॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥

पश्य प्रसन्नता चित्ते यत्र जागर्ति संततम् ।
तत्र संसारदुःखानां प्रवेशोऽपि सुदुर्घटः ॥ ३३८ ॥
जायते जठरे यस्य साक्षादमृतनिर्झरः ।
क्षुत्पिपासोद्भवा भीतिर्न तमल्पापि बाधते ॥ ३३९ ॥

---

तैसा इंद्रियार्थी उदासीन । आत्मरसेंचि निर्भिन्न । जो कामक्रोधविहीन । होऊनि असे ॥ ३३४ ॥ तरी विषयांतही कांहीं । आपणवेंवांचूनि नाहीं । मग विषय कवण कायी । बाधितील कवणा ॥ ३२५ ॥ जरी उदकीं उदकें बुडिजे । कां अग्नि आगी पोळिजे । तरी विषयसंगें आप्लाविजे । परिपूर्णु तो ॥ ३३६ ॥ ऐसा आपणचि केवळु । होऊनि असे निखळु । तयाची प्रज्ञा अचळु । निभ्रांत मानीं ॥ ३३७ ॥ देखें अखंडित प्रसन्नता । आथी जेथ चित्ता । तेथ रिगणें नाहीं समस्तां । संसारदुःखां ॥ ३३८ ॥ जैसा अमृताचा निर्झरु । प्रसवे जयाचा जठरु । तया क्षुधेतृषेचा अडदरु । कहींचि नाहीं ॥ ३३९ ॥

प्रसन्नहृदयस्यैवं कः कुतो दुःखसंभवः ।
स्वयमेव हि धीस्तस्य लीयते परमात्मनि ॥ ३४० ॥
निर्वाते स्थापितो दीपो निष्कम्पो वर्तते यथा ।
स्थिरबुद्धिः स्वस्वरूपे योगयुक्तोऽपि वै तथा ॥ ३४१ ॥

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥

योगयुक्तिविचारोऽयं हृदि यस्य न विद्यते ।
शब्दस्पर्शादिविषयैः पाशैर्बद्धमवेहि तम् ॥ ३४२ ॥
तस्य बुद्धिः स्थिरा नैव कदाचिज्जायतेऽर्जुन ।
उत्पद्यते च नास्थापि बुद्धिस्थैर्येऽस्य चेतसि ॥ ३४३ ॥
भावनापि स्थिरत्वस्य न चेन्मनसि जायते ।
कथं नु प्रभवेच्छान्तिमवाप्तुं स तदा वद ॥ ३४४ ॥
शान्त्या विवर्जिते स्थाने सुखं न कुरुते पदम् ।
कृतपापे यथा पुंसि मोक्षो वैमुख्यमाश्रितः ॥ ३४५ ॥

---

तैसें हृदय प्रसन्न होये । तरी दुःख कैंचें कें आहे । तेथ आपैसी बुद्धि राहे । परमात्मरूपीं ॥ ३४० ॥ जैसा निर्वातींचा दीपु । सर्वथा नेणें कंपु । तैसा स्थिरबुद्धि स्वस्वरूपु । योगयुक्तु ॥ ३४१ ॥ ये युक्तीची कडसणी । नाहीं जयाच्या अंतःकरणीं । तो आकळिला जाण गुणीं । विषयादिकीं ॥ ३४२ ॥ तया स्थिरबुद्धि पार्था । कहीं नाहीं सर्वथा । आणि स्थैर्याची आस्था । तेही नुपजे ॥ ३४३ ॥ निश्चळत्वाची भावना । जरी नव्हेचि देखें मना । तरी शांति केवीं अर्जुना । आपु होय ॥३४४॥ जेथ शांतीचा जिव्हाळा नाहीं । तेथ सुख विसरोनि न रिघे कहीं । जैसा पापियाच्य ठायीं । मोक्षु न वसे ॥ ३४५ ॥

क्षिप्तान्यग्नौ प्ररोहेयुर्यदि बीजानि कर्हिचित् ।
तदैवाशान्तचित्तोऽपि संप्राप्तुं शक्नुयात्सुखम् ॥ ३४६ ॥
मनसो यदयुक्तत्वं सारं दुःखस्य विद्धि तत् ।
नान्यत्किंचित्, अतः श्रेयान् कृत इन्द्रियनिग्रहः ॥ ३४७ ॥

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥

इन्द्रियाणां यद्यदिष्टं तत्तदेवाचरन्ति ये ।
उत्तीर्णा अपि नोत्तीर्णास्ते नूनं विषयार्णवम् ॥ ३४८ ॥
नौका तीरमनुप्राप्ता यदि वातहता भवेत् ।
तदापायं परिहृतपूर्वं भूयोऽधिगच्छति ॥ ३४९ ॥
लालयेदिन्द्रियाण्येवं सिद्धोऽपि यदि कौतुकात् ।
तदा सांसारिकैर्दुःखैराक्रान्तं तं विदांकुरु ॥ ३५० ॥

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

निग्रहीतुं स्वयं शक्यानीन्द्रियाण्यात्मनो यदि ।
कृतार्थता तदा पार्थ किमतोऽपि गरीयसी ॥ ३५१ ॥

---

देखें अग्निमाजीं घापती । तियें बीजें जरी विरूढती । तरी अशांता सुखप्राप्ति । घडों शके ॥ ३४६ ॥ म्हणोनि अयुक्तपण मनाचें । तेंचि सर्वस्व दुःखाचें । या कारणें इंद्रियांचें । दमन निकें ॥ ३४७ ॥ इंद्रियें जें जें म्हणती । तें तेंचि जे पुरुष करिती । ते तरलेचि न तरती । विषयसिंधु ॥ ३४८ ॥ जैसी नाव थडियें ठाकितां । जरी वरपडी होय दुर्वाता । तरी चुकलाही मागौता । अपावो पावे ॥ ३४९ ॥ तैसीं प्राप्तेंही पुरुषें । इंद्रियें लाळिलीं जरी कौतुकें । तरी आक्रमिला जाण दुःखें । सांसारिकें ॥३५०॥ म्हणोनी आपुलीं आपणपया । जरी इंद्रियें येती आया । तरी अधिक कांही धनंजया । सार्थक असे ॥ ३५१ ॥

यथा कूर्मो निजाङ्गानि प्रसारयति मोदवान् ।
स्वेच्छयैवात्मनात्मानं यथा संहरतेऽथ वा ॥ ३५२ ॥
तथेन्द्रियाणि सर्वाणि स्वाधीनानि करोति यः ।
स्वोक्तं कारयते चापि स्थिरबुद्धिमवेहि तम् ॥ ३५३ ॥
पूर्णावस्थां गतस्यान्यद्गूढं चिह्नं निवेद्यते ।
इदानीं ते मया पार्थ तदिदं श्रोतुमर्हसि ॥ ३५४ ॥

या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥

यत्र सुप्तानि भूतानि तत्र जागर्ति यः पुमान् ।
यत्र जाग्रति चामूनि तत्र निद्राति सर्वथा ॥ ३५५ ॥
निरुपाधिः स एवात्र स्थिरबुद्धिः स एव च ।
तमेवार्जुन जानीहि सर्वथैव मुनीश्वरम् ॥ ३५६ ॥

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥७०॥

---

देखें कूर्म जियापरी । उवाइला अवयव पसरी । ना तरी इच्छावशें आवरी आपणपेंचि ॥ ३५२ ॥ तैशीं इंद्रियें आपैतीं होती । जयाचें म्हणितलें करिती । तयाची प्रज्ञा जाण स्थिति । पातली असे ॥ ३५३ ॥ आतां आणिक एक गहन । पूर्णाचें चिह्न । अर्जुन तुज सांगेन । परिस पां ॥ ३५४ ॥ देखें भूतजात निदेलें । तेथेंचि जया पाहलें । आणि जीव जेथ चेइले । तेथ निद्रितु जो ॥ ३५५ ॥ तोचि तो निरुपाधि । अर्जुना तो स्थिरबुद्धि । तोचि जाणें निरवधि । मुनीश्वर ॥ ३५६ ॥

sai 70-654.

शृणु पार्थ कथं ज्ञेयः स्थितप्रज्ञोऽन्यथापि च ।
अक्षोभत्वं सदैवास्ते तस्मिन्नम्भोनिधाविव ॥ ३५७ ॥
समस्ताः सरितामोघाः संभृता यान्ति सागरम् ।
वर्धते नेषदप्येष मर्यादां नातियाति च ॥ ३५८ ॥
संशुष्कासु निदाघे वा वाहिनीष्वखिलास्वपि ।
नीरं नीरनिधेरेति न्यूनतां नैव कामपि ॥ ३५९ ॥
एवमेव स्थितप्रज्ञो न हर्षं नाधृतिं तथा ।
लाभेऽलाभे च ऋद्धीनां सिद्धीनां चाधिगच्छति ॥ ३६० ॥
किं दीपज्योतिषा गेहं भास्करस्य प्रकाश्यते ।
तदभावे तमोव्याप्तः किमसौ जातु जायते ॥ ३६१ ॥
तद्वदेवर्द्धिसिद्धीनामागमोऽपगमोऽपि वा ।
परमानन्दमग्नेन न मनागपि गण्यते ॥ ३६२ ॥
वैभवेन स्वकीयेन शक्रसद्मानि तुच्छता ।
यस्योपजायते भिल्लपल्यां स रमते कथम् ॥ ३६३ ॥

---

पार्थां आणीकही परी । तो जाणों येईल अवधारीं । जैसी आक्षोभता सागरीं । अखंडित ॥ ३५७ ॥ जरी सरितावोघ समस्त । परिपूर्ण होऊनि मिळत । तरी अधिक नोहे ईषत् । मर्यादा न संडी ॥ ३५८ ॥ ना तरी ग्रीष्मकाळीं सरिता । शोषूनि जाती समस्ता । परी न्यून नव्हे पार्थां । समुद्र जैसा ॥ ३५९ ॥ तैसा प्राप्तीं ऋद्धिसिद्धि । तयासी क्षोभु नाहीं बुद्धी । आणि न पवतां बाधी । अधृति तयातें ॥ ३६० ॥ सांगें सूर्याच्या घरीं । प्रकाशु काय वातीवेरी । कीं न लविजे तरी अंधारीं । कोंडेल तो ॥ ३६१ ॥ देखें ऋद्धिसिद्धि तयापरी । आली गेली से न करी । तो विगुंतला असे अंतरीं । महासुखीं ॥ ३६२ ॥ जो आपुलेनि नागरपणें । इंद्रभुवनातें पाबळें म्हणें । तो केवीं रजे पालिवणें । भिल्लाचेनि ॥ ३६३ ॥

अमृते दोषदृष्टिर्यो यवागूं स कथं पिबेत् ।
तथात्मसुखभाग् ऋद्धिमुपभुञ्जीत वा कथम् ॥ ३६४ ॥
यत्र स्वर्गसुखस्यापि गणना नैव विद्यते ।
तत्र काः पार्थ पश्यामूः प्राकृता ऋद्धिसिद्धयः ॥ ३६५ ॥

विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ७१ ॥

आत्मबोधेन संतुष्टः पुष्टश्च परया मुदा ।
य एवं तं स्थितप्रज्ञं पार्थ वेदितुमर्हसि ॥ ३६६ ॥
अहंभावं निरस्यासौ कमान्सर्वान्विहाय च ।
विश्वस्मिन्विचरत्यस्मिन् बिभ्राणो विश्वरूपताम् ॥३६७॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यसि ।
स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ ७२ ॥

ब्रह्मस्थितिममर्यादामिमामनुभवन्ति ये ।
निष्कामास्ते परं ब्रह्म प्राप्नुवन्त्येव लीलया ॥ ३६८ ॥
ब्रह्मस्थित्या यया चित्तं रोद्धुं नाकुलता क्षमा ।
जीवितान्ते जायमाना चिद्रूपमधिजग्मुषः ॥ ३६९ ॥

---

जो अमृताची टी ठेवी । तो जैसा कांजी न सेवी । तैसा स्वसुखानुभवी । न भोगी ऋद्धि ॥ ३६४ ॥ पार्था नवल हें पाहीं । जेथ स्वर्गसुख लेखनीय नाहीं ? तेथ ऋद्धिसिद्धि कायी । प्राकृता होती ॥ ३६५ ॥ ऐसा आत्मबोधें तोखला । परमानन्दें पोखला । तोचि स्थिरप्रज्ञ भला । बोळख तूं ॥३६६॥ तो अहंकारातें दवडुनी । सकळ काम सांडुनी । विचरे विश्व होउनी । विश्वामाजीं ॥ ३६७ ॥ हे ब्राह्मस्थिति निःसीम । जे अनुभविती निष्काम । ते पावले परब्रह्म । अनायासें ॥ ३६८ ॥ चिद्रूपीं मिळतां । देहांतीची व्याकुळता । आड ठाकों न सके चित्ता । प्राज्ञा जया ॥ ३६९ ॥

तामेवैतां स्थितिं ब्राह्मीं साक्षाच्छ्रीपतिरर्जुनम् ।
स्वमुखेनोक्तवान् पूर्वमित्येवं संजयोऽब्रवीत् ॥ ३७० ॥
एतत्कृष्णवचः श्रुत्वा पार्थश्चित्ते व्यचिन्तयत् ।
उपपत्त्यानया कार्यं सम्यक् संपत्स्यते मम ॥ ३७१ ॥
कर्मजातं हि यत्सर्वं तद्देवेन निराकृतम् ।
मया योद्धव्यमित्येतद्वचोऽपि ननु खण्डितम् ॥ ३७२ ॥
अनेनाच्युतवाक्येन प्रमनस्को धनुर्धरः ।
साशङ्कोऽतःपरं प्रश्नं समीचीनं करिष्यति ॥ ३७३ ॥
संवादोऽसौ सुरुचिरः सर्वधर्मनिकेतनम् ।
विवेकामृतसिन्धुर्वा निर्मर्यादो भविष्यति ॥ ३७४ ॥
अनन्तः सर्वविन्नाथो यन्निरूपयिता स्वयम् ।
दासो निवृत्तिनाथस्य तदेवायं वदिष्यति ॥ ३७५ ॥

---

तेचि हे स्थिति । स्वमुखें श्रीपति । सांगत अर्जुनाप्रति । संजयो म्हणे ॥ ३७० ॥ ऐसें कृष्णवाक्य ऐकिलें । तेथ अर्जुनें मनीं म्हणितलें । आतां आमुचियाचि काजा आलें । उपपत्ति इया ॥३७१॥ जें कर्मजात आघवें । एथ निराकारिलें देवें । तरी पारुषलें म्यां झुंजावें । म्हणूनियां ॥ ३७२ ॥ ऐसा श्रीअच्युताचिया बोला । चित्तीं धनुर्धर उवायिला । आतां प्रश्नु करील भला । आशंकोनी ॥ ३७३ ॥ तो प्रसंगु असे नागरु । जो सकळ धर्मांसी आगरु । कीं विवेकामृतसागरु । प्रांतहीनु ॥ ३७४ ॥ जो आपण सर्वज्ञनाथु । निरूपिता होईल श्रीअनंतु । ज्ञानदेवो सांगेल मातु । निवृत्तिदासु ॥ ३७५ ॥

[ इति श्रीज्ञानेश्वर्याः संस्कृतानुवादे द्वितीयोऽध्यायः ]

---

# संस्कृतज्ञानेश्वरी

## तृतीयोऽध्यायः

अर्जुन उवाच—

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥

तदार्जुनोऽब्रवीद्देव त्वया यत्समुदीरितम् ।
सर्वमेव श्रुतं सम्यक् तन्मया भोः कृपानिधे ॥ १ ॥
निश्चितं ते मतं भाति वचनेऽस्मिन्विचारिते ।
यथा कर्म च कर्ता चेत्युभयं नावशिष्यते ॥ २ ॥
एवं गते कथं देव ब्रूषे मां युध्यतामिति ।
लज्जसे न महाघोरे कर्मण्यस्मिंश्च योजयन् ॥ ३ ॥
स्वयं कर्म निराकुर्वन्नशेषमपि केशव ।
हिंसात्मकमिदं युद्धं किं मया कारयस्यहो ॥ ४ ॥
इदमेव हृषीकेश तस्मात्त्वनु विचारय ।
कारयसीयतीं हिंसां कर्मलेशममानयन् ॥ ५ ॥

---

मग आइका अर्जुनें म्हणितलें । देवा तुम्हीं जें वाक्य बोलिलें । तें निकें॰म्यां परिसिलें । कमळापती ॥ १ ॥ तेथ कर्म आणि कर्ता । उरेचिना पाहतां । ऐसें मत तुझें श्रीअनंता । निश्चित जरी ॥ २ ॥ तरी मातें केवीं श्रीहरी । म्हणसी पार्था संग्रामु करीं । इये लाजसी ना महाघोरीं । कर्मीं सुतां ॥ ३ ॥ हां गा कर्म तूंचि अशेख । निराकरिसी निःशेख । तरी मजकरवीं हें हिंसक । कां करविसी ॥ ४ ॥ तरी हेंचि विचारीं हृषीकेशा । तूं मानु न देसी कर्मलेशा । आणि येवढी हे हिंसा । करवीत आहासी ॥५॥

व्यामिश्रेणैव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

त्वमेव यदि वक्ष्येवं किमज्ञाः करवामहै ।
कथाप्यस्तमिता मन्ये विवेकस्याधुना भुवि ॥ ६ ॥
ईदृशोऽप्युपदेशश्चेद् भ्रष्टत्वं नाम कीदृशम् ।
पूरितो मे किलेदानीमात्मबोधमनोरथः ॥ ७ ॥
पथ्यं विवृत्य यातश्चेद्विषं दद्यात्स्वयं भिषक् ।
तदा कथं नु जीव्येत रोगिणा तन्निवेद्यताम् ॥ ८ ॥
अपमार्गो यथान्धस्य मर्कटस्य यथा सुरा ।
तथा त्वदुपदेशोऽयं प्राप्तोऽस्माकं सुशोभनः ॥ ९ ॥
अज्ञस्तावदहं तत्र मोहेन विवशीकृतः ।
अतो मयानुयुक्तस्त्वं सद्विदेकं जनार्दन ॥ १० ॥
नवं नवं दिशंस्तत्त्वं भ्रमं मे जनयस्यहो ।
युज्यतेऽयं तवाचारः किं जनेऽनुसरत्यपि ॥ ११ ॥

---

देवा तुवांचि ऐसें बोलावें । तरी आम्हीं नेणतीं काव करावें । आतां संपलें म्हणों पां आघवें । विवेकाचें ॥ ६ ॥ हां गा उपदेश जरी ऐसा । तरी अपभ्रंशु तो कैसा । आतां पुरला आम्हां धिंवसा । आत्मबोधाचा ॥ ७ ॥ वैद्यु पथ्य वारूनि जाये । मग जरी आपणाचि विष सुये । तरी रोगिया कैसेनि जिये । सांगें मज ॥८॥ जैसें आंधळें सुइजे आव्हांटा । कां माजवण दीजे मर्कटा । तैसा उपदेशु हा गोमटा । वोढवला आम्हां ॥९॥ मी आधींचि कांहीं नेणें । वरी कवळिलों मोहें येणें । श्रीकृष्णा विवेकु या कारणें । पुसिला तुज ॥१०॥ तंव तुझी एकेक नवाई । एथ उपदेशामाजीं गोवाई । तरी अनुसरलिया काई । ऐसें कीजे ॥ ११ ॥

अवलम्ब्यं त्वदुक्तं नो मनोवाक्कायकर्मभिः ।
त्वयैव चेत्क्रियेतैवमुपायोऽस्तमितोऽखिलः ॥ १२ ॥
इदानीं बोधयन्नेवं हितं नाम करोषि नः।
का वास्माकमिहाशा स्याज्ज्ञानं प्रति जनार्दन ॥ १३ ॥
काममस्तमितं ज्ञानं संवृत्तं चान्यदीदृशम् ।
यत्स्थैर्यं भूतपूर्वं मे मनसश्चलतामगात् ॥ १४ ॥
एवमाचरतः कृष्ण चरितं गहनं तव ।
किं भोश्चित्तपरीक्षां मे कुरुषे च्छद्मनामुना ॥ १५ ॥
उत मामतिसंधत्से ध्वनितं कुहपेऽथ वा ।
तत्त्वमेवेति जानामि यत्सत्यं न हि तत्त्वतः ॥ १६ ॥
अतो गूढार्थया देव कृतं वाचा तवानया ।
कथंनीयो विवेकस्तु ननु प्राकृतयैव मे ॥ १७ ॥
कामं नितान्तमन्दोऽहं तथाप्येवं गतोऽपि सन् ।
यथा सम्यग् विजानीयां तथा वद सुनिश्चितम् ॥ १८ ॥

---

आम्हीं तनुमनुजीवें । तुझिया बोला वोठंगावें । आणि तुवांचि ऐसें करावें । तरी सरलें म्हणें ॥ १२ ॥ आतां ऐशियापरी बोधिसी । तरी निकें आम्हां करिसी । एथ ज्ञानाची आस कायसी । अर्जुन म्हणे ॥ १३ ॥ तरी ये जाणिवेचें कीर सरलें । परी आणीक एक असे जाहलें । जें थितें हें डहुळलें । मानस माझें ॥ १४ ॥ तेवींचि श्रीकृष्णा हें तुझें । चरित्र कांहीं नेणिजे । जरी चित्त पाहसी माझें । येणें मिषें ॥ १५ ॥ नातरी झकवीतु आहासी मातें । कीं तत्त्वचि कथिलें ध्वनितें । हें अवगमितां निरुतें । जाणवेना ॥ १६ ॥ म्हणोनि आइकें देवा । हा भावार्थु आतां न बोलावा । मज विवेकु सांगावा । मऱ्हाटा जी ॥ १७ ॥ मी अत्यंत जड असें । परी ऐसाही निकें परियेसें । श्रीकृष्णा बोलावें तुवां तैसें । एकनिष्ठ ॥ १८ ॥

रोगं चिकित्सता देयं रुग्णाय ननु भेषजम् ।
भाव्यं त्वनेन रुच्येन सुतरां मधुरेण च ॥ १९ ॥
एवं सर्वार्थसंपूर्णं युक्तमाचरितुं च यत् ।
तत्तत्त्वं मे तथाख्येयं यथा यायात्सुबोधताम् ॥ २० ॥
त्वादृशस्य गुरोर्लाभे पूरणीयो मनोरथः ।
न किं कश्चात्र संकोचः कार्यो मातासि नः किल ॥ २१ ॥
दुहती कामधेनुश्चेद्दैवेन यदि लभ्यते ।
कामनानां तदा पूर्तिः कार्या किमननुष्ठिता ॥ २२ ॥
चिन्तामणौ करप्राप्ते का चिन्ता चिन्तितं प्रति ।
यथारुचि न किं सिद्धिरीप्सितस्याभिलष्यते ॥ २३ ॥
तटेऽप्यमृतसिन्धोश्चेद्विद्वलैः स्थीयते तृषा ।
आत्मना तत्र गच्छद्भिर्नृभिरायासितेन किम् ॥ २४ ॥
नैकजन्मान्तरेष्वेवं त्वमस्माभिरुपासितः ।
अयि लक्ष्मीपते दैवादद्य हस्तगतोऽसि नः ॥ २५ ॥

---

देखें रोगातें जिणावें । औषध तरी देयावें । परी तें अति रुच्य व्हावें । मधुर जैसें ॥ १९ ॥ तैसें सकळार्थभरित । तत्त्व सांगावें उचित । परी बोधे माझें चित्त । जयापरी ॥ २० ॥ देवा तुज ऐसा निजगुरु । आजि आर्तीं घणी कां न करूं । एथ भीड कवणाची धरूं । तूं माय आमुची ॥ २१ ॥ हां गा कामधेनूचें दुभतें । दैवें जाहलें आपैतें । तरी कामनेची कां तेथें । वानी कीजे ॥ २२ ॥ जरी चिंतामणी हाता चढे । तरी वांछेचें कवण सांकडें । कां आपुलेनि सुरवाडें । इच्छावें ना ॥ २३ ॥ देखा अमृतसिंधूतें ठाकावें । मग ताहानाचि जरी फुटावें । तरी सायासु कां करावे । मागील ते ॥ २४ ॥ तैसा जन्मांतरीं बहुतीं । उपासितां श्रीलक्ष्मीपती । तूं दैवें आजि हातीं । जाहलासी जरी ॥ २५ ॥

स किं परेश संप्रार्थ्यो नास्ति नः स्वेच्छयाधुना ।
मनोरथद्रुमस्यायं फलकालो ह्युपागतः ॥ २६ ॥
कामाः सफलजन्मानः पुण्यं च फलितं मम ।
मन्ये विजयभाजश्च जाताः सर्वे मनोरथाः ॥ २७ ॥
त्वमस्माकं स्वयं सर्वदेवदेवोत्तम प्रभो ।
परमाणां मङ्गलानां धाम यद्वर्तसे वशे ॥ २८ ॥
न मातुः पिवतः स्तन्यमकालो विद्यते शिशोः ।
तथा त्वां पृच्छतो देव कोऽकालो मे दयानिधे ॥ २९ ॥
अतो यद्रुचितं मेऽस्ति तदेव पृच्छ्यसे मया ।
इदानीमयि गोविन्द कालाकालानपेक्षिणा ॥ ३० ॥
यदिहाचरितुं योग्यं परत्र च हितावहम् ।
तदेकं निश्चितं किंचिन्मह्यं शंसितुमर्हसि ॥ ३१ ॥

श्रीभगवानुवाच—

लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेण योगिनाम् ॥ ३ ॥

---

तरी आपुलिया सवेशा । कां न मागावाशी परेशा । दवा सुकाळु हा मानसा । पाहला असे ॥ २६ ॥ देखें सकळार्तीचें जियालें । आजि पुण्ययशासि आलें । हे मनोरथ जहाले । विजयी माझे ॥ २७ ॥ जी जी परममंगळधामा । सकळदेवदेवोत्तमा । तूं स्वाधीन आजि आम्हां । म्हणऊनियां ॥ २८ ॥ जैसें मातेच्या ठायीं । अपत्या अनवसरू नाहीं । स्तन्या लागूनि पाहीं । जियापरी ॥ २९ ॥ तैसें देवा तूतें । पुसिजतसे आवडे तें । आपुलेनि आर्तें । कृपानिधी ॥ ३० ॥ तरी पारत्रिकीं हित । आणि आचरितां तरी उचित । तें सांगें एक निश्चित । पार्थ म्हणे ॥ ३१ ॥

पार्थस्य वचसानेन श्रीकृष्णो विस्मितोऽभ्यधात् ।
गर्भितोऽयमभिप्रायो मया पार्थ न्यवेदि ते ॥ ३२ ॥
मया प्रसङ्गतः ख्याता बुद्धियोगं विवृण्वता ।
ज्ञानमार्गव्यवस्था ते स्वभावादेव केवलम् ॥ ३३ ॥
अजानंस्तमभिप्रायं वृथैव क्षोभमन्वभूः ।
तस्मात्संप्रति जानीहि मयैवोक्तावुभावपि ॥ ३४ ॥
एतावतादिसिद्धौ द्वौ संप्रदायौ भुवस्तले ।
मत्त एव नरश्रेष्ठ संप्रवृत्तौ विदांकुरु ॥ ३५ ॥
ज्ञानयोगस्तयोरेको योऽस्ति सांख्यैरनुष्ठितः ।
यत्र तद्रूपतां यान्ति ब्रह्मणि ज्ञात एव ते ॥ ३६ ॥
मार्गोऽन्यः कर्मयोगाख्यो यत्र यान्ति मुमुक्षवः ।
निर्वाणं निपुणा भूत्वा ज्ञानप्राप्त्युत्तरं चिरात् ॥ ३७ ॥
अन्ते समफलावेव मार्गावेतावुभावपि ।
यथा तृप्तिः समानैव सिद्धसाध्यान्नभोजने ॥ ३८ ॥

---

या बोला श्रीअच्युतु । म्हणतसे विस्मितु । अर्जुना हा ध्वनितु । अभिप्रावो ॥ ३२ ॥ जे बुद्धियोगु सांगतां । सांख्यमतसंस्था । प्रकटिली स्वभावता । प्रसंगें आम्हीं ॥ ३३ ॥ तो उद्देशु तूं नेणसीचि । म्हणोनि क्षोभलासि वायांचि । तरी आतां जाणें म्यांचि । उक्त दोन्ही ॥ ३४ ॥ अवधारीं वीरश्रेष्ठा । ये लोकीं या दोन्ही निष्ठा । मजचिपासूनि प्रगटा । अनादिसिद्धा ॥ ३५ ॥ एक ज्ञानयोगु म्हणिजे । जो सांख्यीं अनुष्ठिजे । जेथ वोळखीसवें पाविजे । तद्रूपता ॥ ३६ ॥ एक कर्मयोगु जाण । जेथ साधकजन निपुण । होऊनियां निर्वाण । पावती वेळे ॥ ३७ ॥ हे मार्गु तरी दोनी । परी एकवटती निदानीं । जैसी सिद्धसाध्यभोजनीं । तृप्ती एक ॥ ३८ ॥

पूर्वपश्चिमगामिन्यौ भिन्ने द्वे सरितौ यथा ।
भजेते एकतामेव पर्यन्ते सिन्धुसंगमे ॥ ३९ ॥
तथा मते उभे एते एककारणसूचके ।
समायत्ता तु योग्यत्वे सर्वथा तदुपासना ॥ ४० ॥
फलमुत्प्लवनादेव विहंगो यदुपाश्नुते ।
तत्किमासाद्यते वेगान्मनुजेन कदाचन ॥ ४१ ॥
शाखां शाखां स आक्रामन् क्रमादेव शनैः शनैः ।
तत्फलं समवाप्नोति कालेन कियता किल ॥ ४२ ॥
विहंगपरिपाट्यैव सांख्या ज्ञानसमाश्रयात् ।
सद्यः समधिगच्छन्ति मोक्षं पार्थ विदांकुरु ॥ ४३ ॥
पिपीलिकापथेनान्ये विहिताचारचारिणः ।
यथाकालं प्रपद्यन्ते पूर्णतां नात्र संशयः ॥ ४४ ॥

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥

अनारभ्योचितं कर्म कर्महीनो न कश्चन ।
अवाप्तं निश्चयेनालं नैष्कर्म्यं जातु सिद्धवत् ॥ ४५ ॥

---

कां पूर्वापर सरिता । भिन्न दिसती पाहतां । मग सिंधुमिळणीं ऐक्यता । पावती शेखीं ॥ ३९ ॥ तैसी दोनीही मतें । सूचिती एका कारणातें । परी उपास्ति ते योग्यते-। अधीन असे ॥ ४० ॥ देखें उत्प्लवनासरिसा । पक्षी फळासि झोंबे जैसा । सांगें नरु केवीं तैसा । पावे वेगा ॥ ४१ ॥ तो हळू हळू ढाळें ढाळें । केतुलेनि एके वेळे । मार्गाचेनि बळें । निश्चित ठाकी ॥ ४२ ॥ तैसें देख पां विहंगममतें । अधिष्ठूनि ज्ञानातें । सांख्य सद्य मोक्षातें । आकळिती ॥ ४३ ॥ येर योगिये कर्माधारें । विहितेंचि निजाचारें । पूर्णता अवसरें । पावते होती ॥ ४४ ॥ वांचोनि कर्मारंभ उचित । न करितां सिद्धवत । कर्महीना निश्चित । होईजेना ॥ ४५ ॥

वृथैव मूर्खवत्पार्थ वक्तुमेवं न युज्यते ।
यत्त्यागादेव नैष्कर्म्यं प्राप्यं प्राप्तस्य कर्मणः ॥ ४६ ॥
आवश्यकं सरित्पारगमनं यदि कस्यचित् ।
कथं तेन कृतार्थेन भाव्यं नावं विना वद ॥ ४७ ॥
वाञ्छन् भोजनजां तृप्तिं कथं नु समवाप्नुयात् ।
यदि पाकं न कुर्वीत नाद्यात्सिद्धान्नमेव वा ॥ ४८ ॥
यावन्निरीहता नास्ति तावत्कर्म वितिष्ठते ।
विरमत्यात्मसंतोषे प्राप्ते त्वेतत्स्वभावतः ॥ ४९ ॥
तन्नैष्कर्म्यपदे पार्थ बद्धास्थो यः पुमानिह ।
त्यक्तव्यं नोचितं कर्म सर्वथा तेन कर्हिचित् ॥ ५० ॥
स्वेच्छानुरोधमात्रेण किं कर्मोपनमेदिह ।
स्वीकृतं किं घटेतेदं त्यक्तं किं विरमेद्वद ॥ ५१ ॥
अलं स्वैरोक्तया वाचा नन्वर्थेऽस्मिन्विचारिते ।
त्यजता त्यज्यते नेदमिति नूनं प्रतीयते ॥ ५२ ॥

---

कीं प्राप्तकर्म सांडिजे । येतुलेनि नैष्कर्म्य होइजे । हें अर्जुना वायां बोलिजे । मूर्खपणें ॥ ४६ ॥ सांगें पैलतीरा जावें । ऐसें व्यसन कां जेथ पावे । तेथ नावेतें त्यजावें । घडे केवीं ॥ ४७ ॥ ना तरी तृप्ति इच्छिजे । तरी कैसेनि पाकु न कीजे । कीं सिद्धही न सेविजे । केवीं सांगें ॥ ४८ ॥ जंव निरार्तता नाहीं । तंव व्यापारु असे पाहीं । मग संतुष्टीच्या ठायीं । कुंठे सहजें ॥ ४९ ॥ म्हणोनि आइकें पार्था । जया नैष्कर्म्यपदीं आस्था । तया उचित कर्म सर्वथा । त्याज्य नोहे ॥ ५० ॥ आणि आपुलिये चाडे । आपादिलें हें मांडे । कीं त्यजिलें कर्म सांडे । ऐसें आहे ॥ ५१ ॥ हें वायांचि सैरा बोलिजे । उकलु तरी देखोनि पाहिजे । परी त्यजितां कर्म न त्यजे । निभ्रांत मानीं ॥ ५२ ॥

न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

त्यक्ष्यामि स्वीकरिष्ये वा कर्मेत्यज्ञानजं वचः ।
चेष्टा देहभृतः सर्वा गुणाधीनाः स्वभावतः ॥ ५३ ॥
परित्यक्तेऽपि विहिते सर्वस्मिन्नपि कर्मणि ।
इन्द्रियाणां स्वभावाः किं विनश्येयुः कदाचन ॥ ५४ ॥
श्रवणाद्विरते श्रोत्रे किं नेत्रे नष्टतेजसी ।
नासारन्ध्रे संवृते किं गन्धग्रहणकर्मणि ॥ ५५ ॥
प्राणापानगतिः स्तब्धा किं मनो निर्विकल्पताम् ।
गतं क्षुधापिपासादिवासनाः किं नु कुण्ठिताः ॥ ५६ ॥
शान्तौ स्वापप्रबोधौ किं पादौ चारं नु विस्मृतौ ।
अस्तु तावदिदं जन्ममरणे अपि किं मृते ॥ ५७ ॥
व्यापारा इन्द्रियाणां चेदेवं नोपरमन्त्यमी ।
कर्मत्यागेन को लाभो नायं शक्यः शरीरिणाम् ॥ ५८ ॥

---

जंव प्रकृतीचें अधिष्ठान । तंव सांडी मांडी हें अज्ञान । जे चेष्टा ते गुणाधीन । आपैसी असे ॥ ५३ ॥ देखें विहित कर्म जेतुलें । तें सगळें जरी वोसंडिलें । तरी स्वभाव काय निमाले । इंद्रियांचे ॥ ५४ ॥ सांगें श्रवणीं ऐकावें ठेलें । कीं नेत्रींचें तेज गेलें । हें नासारंध्र बुझालें । परिमळु नेघे ॥ ५५ ॥ ना तरी प्राणापानगति । कीं निर्विकल्प जाहली मति । कीं क्षुधातृषादि आर्ति । खुंटलिया ॥ ५६ ॥ हे स्वप्नावबोधु ठेले । चरण चालों विसरले । हें असो काय निमाले । जन्ममृत्यू ॥ ५७ ॥ हें न ठकेचि जरी कांहीं । तरी सांडिलें तें कायी । म्हणोनि कर्मत्यागु नाहीं । प्रकृतिमंतां ॥५८॥

निष्पद्यते पराधीनं कर्म प्रकृतिजैर्गुणैः।
अतस्त्यागेऽभिमानोऽस्य स्वीकारेऽपि च निष्फलः ॥ ५९ ॥
यद्यासीत रथारूढः स्वयं निश्चल एव हि।
रथसंचारतोऽप्यस्य जायते संचरिष्णुता ॥ ६० ॥
निश्चेष्टमपि वृक्षस्य शुष्कं पत्रं समुत्प्लुतम्।
बंभ्रम्यते नभोमार्गे वायुवेगवशाद्यथा ॥ ६१ ॥
निष्कर्माऽपि तथैवेह नित्यं भवति कर्मकृत्।
कर्मेन्द्रियविकाराणां द्वारा प्रकृतिसंश्रयात् ॥ ६२ ॥
अतो यावत्प्रकृत्यास्ति संगस्तावन्न कर्मणः।
त्यागः शक्यस्तथात्वेऽपि य आहुः केऽपि पूरुषाः।
कर्म त्यक्ष्याम इत्येषां केवलोऽयं दुराग्रहः ॥ ६३ ॥

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥

ये त्यजन्त्युचितं कर्म निष्कर्मत्वं प्रपित्सवः।
प्रवृत्तिं केवलं कर्मेन्द्रियाणां विनिरुध्य तु ॥ ६४ ॥

---

कर्म पराधीनपणें। निपजतसे प्रकृतिगुणें। येरीं घरीं मोकलीं अंतःकरणें। वाहिजे वायां ॥ ५९ ॥ देखें रथीं आरूढिजे। मग जरी निश्चळु बैसिजे। तरी चळु होऊनि हिंडिजे। परतंत्रा ॥ ६० ॥ कां उचलिलें वायुवशें। चळे शुष्कपत्र जैसें। निचेष्ट आकाशें। परिभ्रमे ॥ ६१ ॥ तैसें प्रकृति आधारें। कर्मेन्द्रियविकारें। निष्कर्मही व्यापारें। निरंतर ॥ ६२ ॥ म्हणऊनि संगु जंव प्रकृतीचा। तंव त्यागु न घडे कर्मांचा। ऐसियाहि करूं म्हणती तयांचा। आग्रहोचि उरे ॥ ६३ ॥ जे उचित कर्म सांडिती। मग नैष्कर्म्य होऊं पाहती। परी कर्मेंद्रियप्रवृत्ति। निरोधुनी ॥ ६४ ॥

तेषां न घटते कर्मत्यागो यद्वासना हृदि ।
बहिर्नटन्ति यन्नूनं तद्दैन्यमवधारय ॥ ६५ ॥
एतादृशा जनाः पार्थ विषयासक्तचेतसः ।
सर्वथैवावगन्तव्यास्तत्त्वतो नात्र संशयः ॥ ६६ ॥
सावधानो भवेदानीं कथयामि प्रसङ्गतः ।
नैराश्यलक्षणं पार्थ वास्तवं श्रोतुमर्हसि ॥ ६७ ॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥

विश्राणो दृढतामन्तर्गूढतां परमात्मनि ।
रूढतां लौकिकाचारे बहिरेव तु केवलम् ॥ ६८ ॥
अनादिशन्निन्द्रियाणि विषयेभ्योऽभजन् भयम् ।
अत्यजन्नुचितं कर्म यद्यत्प्राप्तं यदृच्छया ॥ ६९ ॥
अनियच्छन्नाचरन्ति कर्म कर्मेन्द्रियाणि यः ।
तज्जन्यानां विकाराणां वशं त्वनुपयन् स्वयम् ॥ ७० ॥

---

तयां कर्मत्यागु न घडे । जें कर्तव्य मनीं सांपडे । वरी नटती तें फुडें । दरिद्र जाण ॥ ६५ ॥ ऐसे ते पार्था । विषयासक्त सर्वथा । ओळखावे तत्त्वता । भ्रांति नाहीं ॥ ६६ ॥ आतां देईं अवधान । प्रसंगें तुज सांगेन । या नैराश्याचें चिन्ह । धनुर्धरा ॥ ६७ ॥ जो अंतरीं दृढ । परमात्मरूपीं गूढ । बाह्यांतरीं रूढ । लौकिक जैसा ॥ ६८ ॥ तो इंद्रियां आज्ञा न करी । विषयांचें भय न धरी । प्राप्त कर्म नाव्हेरी । उचित जें जें ॥ ६९ ॥ तो कर्मेंद्रियें कर्मीं । राहटतां तरी न नियमी । परी तेथिचेनि ऊर्मीं । झांकोळेना ॥ ७० ॥

यया कयापि नो बद्धो जातु वासनया मनाक् ।
पद्मपत्रं जलेनेवालिप्तो मोहमलेन यः ॥ ७१ ॥
संसारे वर्तमानत्वाद् दृश्यमानोऽन्यलोकवत् ।
भानोर्बिम्बमिवाभासभानः सलिलसंगतः ॥ ७२ ॥
आपाततो वीक्षितः सन् सामान्य इव भाति यः ।
वस्तुतस्तु न निर्धार्यं स्वरूपं यस्य सर्वथा ॥ ७३ ॥
लक्षितो लक्षणैरेवंविधैर्योऽस्ति धनंजय ।
स आशापाशहीनश्च मुक्तश्चेत्यवधार्यताम् ॥ ७४ ॥

स एव योगी स गुणैर्विशिष्यते
समस्त एवात्र भुवस्तलेऽर्जुन ।
मयानुशिष्टोऽस्यत एव सादरं
सर्वात्मना पार्थ भव त्वमीदृशः ॥ ७५ ॥
मनो निजं पार्थ नियम्यतां त्वया
स्थिरान्तरङ्गेण तथैव भूयताम् ।
स्वस्वासु चेष्टासु सुखेन वर्ततां
तत्तासु कर्मेन्द्रियवर्ग एष ते ॥ ७६ ॥

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥

---

तो कामनामात्रें न घेपे । मोहमळें न लिंपे । जैसे जळीं जळें न शिंपे । पद्मपत्र ॥ ७१ ॥ तैसा संसार्गामाजीं असे । सकळांसारिखा दिसे । जैसे तोयसंगें आभासे । भानुबिंब ॥ ७२ ॥ तैसा सामान्यत्वें पाहिजे । तरी साधारणुचि देखिजे । येरवीं निर्धारितां नेणिजे । सोय जयाची ॥ ७३ ॥ ऐसा चिन्हीं चिन्हितु । देखसी तोचि मुक्तु । आशापाशरहितु । वोळख पां ॥ ७४ ॥ अर्जुना तोचि योगी । विशेषिजे जो जगीं । म्हणोनि ऐसा होय या लागीं । म्हणिपे तूतें ॥ ७५ ॥ तूं मानसा नियमु करीं । निश्चळ होय अंतरीं । मग कर्मेन्द्रियें व्यापारीं । वर्ततु सुखें ॥ ७६ ॥

एवं निष्कर्मता लोके न संभवति सर्वथा।
निषिद्धं च कथं कर्माचरणीयं विचारय ॥ ७७ ॥
तद्यद्विहितं कर्म प्राप्तं कालानुसारतः।
त्वया तत्तदनुष्ठेयं निष्कामेनैव चेतसा ॥ ७८ ॥
विदितं नान्यदप्येकं कौतुकं त इदं यथा।
निष्कामं चरितं कर्म स्वयं बन्धनमोचकम् ॥ ७९ ॥
अधिकारपरत्वेन स्वधर्मं जन आचरन्।
तेनाचारेण निर्वाणं निश्चयेनाधिगच्छति ॥ ८० ॥

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचार ॥ ९ ॥

स्वधर्मो यस्तमेव त्वं नित्ययज्ञं विदांकुरु।
वर्तमाने कुतस्तत्र पापसंचारसंभवः ॥ ८१ ॥
निजधर्ममिमं परित्यजन्
रमते हन्त यदा कुकर्मणि।
पुरुषोऽत्र तदैव बन्धनै-
र्ननु संसारभवैर्निबध्यते ॥ ८२ ॥

---

म्हणोनि नैष्कर्म्य होआवें। तरी एथ तें न संभवे। आणि निषिद्ध केवीं राहाटावें। विचारीं पां ॥ ७७ ॥ म्हणोनि जें जें उचित। आणि अवसरें करोनि प्राप्त। तें कर्म हेतुरहित। आचरें तूं ॥७८॥ पार्था आणीकही एकि। नेणसी तूं हें कवतिक। जें ऐसें कर्म मोचक। आपैसें असे ॥ ७९ ॥ देखें अनुक्रमाधारें। स्वधर्मु जो आचरे। तो मोक्षु तेणें व्यापारें। निश्चित पावे ॥ ८० ॥ स्वधर्मु जो बापा। तोचि नित्ययज्ञु जाण पां। म्हणोनि वर्ततां तेथ पापा। संचारु नाहीं ॥ ८१ ॥ हा निजधर्मु जैं सांडे। आणि कुकर्मी रति घडे। तैंचि बंधु पडे। संसारिक ॥ ८२ ॥

अनुष्ठानं स्वधर्मस्य शाश्वतं यज्ञयाजनम् ।
तत्र यो निरतस्तस्य न स्यात्किमपि बन्धनम् ॥ ८३ ॥

लोकोऽयं कर्मणा बद्धो यन्मायावशमागतः ।
नित्ययज्ञच्युतिस्तत्र हेतुरित्यवधार्यताम् ॥ ८४ ॥

एतद्विषयिकां पार्थ कथां ते कथयेऽधुना ।
सावधानेन मनसा तामिमां श्रोतुमर्हसि ॥ ८५ ॥

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥

सृष्ट्यादिसंस्थां सृजता विधात्रा
भूतैः सहासृज्यत नित्ययज्ञः ।
सुसूक्ष्म इत्येव तु नैष तेषां
मन्दात्मनां धीविषयीबभूव ॥ ८६ ॥
पृष्टो विधात्रा विनयात् प्रजाभि-
र्भो देव कोऽस्तीह समाश्रयो नः ।
तदाब्जभूर्वाचमिमामुवाच
मनोरमां भूतहिताभिकाङ्क्षी ॥ ८७ ॥

---

म्हणोनि स्वधर्मानुष्ठान । तें अखंड यज्ञयाजन । जो करी तया बंधन । कांहींच न घडे ॥ ८३ ॥ हा लोकु कर्मे बांधिला । जो परतंत्रा भूतला । तो नित्ययज्ञातें चुकला । म्हणोनियां ॥ ८४ ॥ आतां येचिविशीं पार्था । तुज सांगेन एक मी कथा । जैं सृष्ट्यादि संस्था । ब्रह्मेनें केली ॥ ८५ ॥ तैं नित्ययागसहितें । सृजिलीं भूतें समस्तें । परी नेणतीचि तियें यज्ञातें । सूक्ष्म म्हणउनी ॥ ८६ ॥ ते वेळीं प्रजीं विनविला ब्रह्मा । देवा काय आश्रयो येथ आम्हां । तंव म्हणे तो कमळजन्मा । भूतांप्रति ॥ ८७ ॥

वर्णाश्रमाणामनुसारतो वो
धर्मो मयासृज्यत पूर्वमेव ।
तमेव सर्वेऽवहिता उपाध्वं
मनोरथा वः सफला भवेयुः ॥ ८८ ॥
हेयो व्रतौघो नियमा न सेव्याः
कृच्छ्रैः शरीरं न हि शोषणीयम् ।
न क्वापि गन्तव्यमतीव दूरं
स्नातुं च तीर्थेष्वपि तेषु तेषु ॥ ८९ ॥
योगादिकानां न हि साधनानां
नाराधनानामपि कामजानाम् ।
न मन्त्रयन्त्रादिकदुर्विधीनां
कार्योऽवलम्बोऽपि यदा कदाचित् ॥ ९० ॥
उपासितव्या इतरे न देवा
इदं न किंचित्करणीयमन्यत् ।
स्वधर्मयज्ञेन तु शाश्वतेन
सुसेव्यतत्वाद्यजनीयमेव ॥ ९१ ॥
अनन्यभावेन पतिं भजन्ति
पतिव्रताः स्वं सततं यथैव ।
तथा स्वधर्मं फलसङ्गवर्ज्यं
सदैव भो दक्षतया भजध्वम् ॥ ९२ ॥

---

तुम्हां वर्णविशेषवशें । आम्हीं हा स्वधर्मुचि विहिला असे । यातें उपासा मग आपैसे । पुरती काम ॥ ८८ ॥ तुम्हीं व्रतनियमु न करावे । शरीरातें न पीडावें । दुरी केंही न वचावें । तीर्थांसी गा ॥ ८९ ॥ योगादिकें साधनें । साकांक्ष आराधनें । मंत्रयंत्रविधानें । झणीं करा ॥ ९० ॥ देवतांतरा न भजावें । हें सर्वथा कांहीं न करावें । तुम्हीं स्वधर्मयज्ञीं यजावें । अनायासें ॥ ९१ ॥ अहेतुकें चित्तें । अनुष्ठा पां ययातें । पतिव्रता पतीतें । जियापरी ॥ ९२ ॥

स्वधर्मरूपो मख एष एव
युष्माकमेकः किल सेवनीयः ।
स सेव्यमानो व्यसने कदापि
युष्मान्न जह्यादिति निश्चिनुध्वम् ॥ ९३ ॥
स कामधेनुः स्वयमेव भूत्वा
कामान् समस्तानपि वः प्रसोता ।
आश्वासयन्नेवमुदारभावः
स सत्यलोकाधिपतिर्बभाषे ॥ ९४ ॥

देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

अनेन धर्मयज्ञेन तोषमेष्यन्ति देवताः ।
तुष्टाश्च वः प्रदास्यन्ति तांस्तानर्थानभीप्सितान् ॥ ९५ ॥
एवं देवगणाः सर्वे पूजिता धर्मपूजया ।
पुरा वहन्ति वो योगक्षेममत्र न संशयः ॥ ९६ ॥
उपासितेषु देवेषु सुप्रसन्नेषु सर्वथा ।
यदा घटिष्यते नूनं प्रीतियोगः परस्परम् ॥ ९७ ॥
तदा चिकीर्षितं यद्वस्तत्सिद्धिं समवाप्स्यति ।
पूरिताश्च भविष्यन्ति वाञ्छिता वो मनोरथाः ॥ ९८ ॥

---

तैसा स्वधर्मरूप मखु । हाचि सेव्यु तुम्हां एकु । ऐसें सत्यलोकनायकु । बोलता जाहला ॥ ९३ ॥ देखा स्वधर्मातें भजाल । तरी कामधेनु हा होईल । मग प्रजा हो न संडील । तुमतें कदा ॥ ९४ ॥ जे येणेंकरूनि समस्तां । परितोषु होईल देवतां । मग तें तुम्हां ईप्सितां । अर्थातें देती ॥९५॥ या स्वधर्मपूजा पूजितां । देवतागणां समस्तां । योगक्षेमु निश्चिता । करिती तुमचा ॥ ९६ ॥ तुम्हीं देवांतें भजाल । देव तुम्हां तुष्टतील । ऐसी परस्परें घडेल । प्रीति जेथ ॥ ९७ ॥ तेथ तुम्हीं जें करूं म्हणाल । तें आपैसें सिद्धी जाईल । वांछितही पुरेल । मानसींचें ॥ ९८ ॥

उपस्थास्यति वाक्सिद्धिरादेष्टारो भविष्यथ।
अहंपूर्विकया युष्मान् सेविष्यन्ते महर्द्धयः॥ ९९॥
ऋतुश्रेष्ठवसन्तस्य द्वारमाश्रयते यथा।
सपुष्पफललावण्या काननश्रीर्निरन्तरम्॥ १००॥

इष्टान्भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥ १२॥

तथा सर्वसुखैः सार्धं विधिरेव हि मूर्तिमान्।
स्वयं गवेषयन् युष्मान् पृष्ठतोऽनुगमिष्यति॥ १०१॥
स्वधर्मनिरता एवं यदि वत्स्यथ भो जनाः।
समस्तैश्वर्यसंपन्ना अवाप्स्यथ निरीहताम्॥ १०२॥
सकलां संपदं प्राप्य विषयास्वादलोलुपः।
मत्तानामिन्द्रियाणां यो भविष्यति वशंवदः॥ १०३॥
यः सुरैर्यज्ञसंतुष्टैर्दत्तया पूर्णसम्पदा।
सर्वेश्वरं भजेन्नैव निजधर्मानुसारतः॥ १०४॥

---

वाचासिद्धि पावाल। आज्ञापक होआल। म्हणिये तुमतें मागतील। महाऋद्धि॥ ९९॥ जैसें ऋतुपतीचें द्वार। वनश्री निरंतर। वोळगे फळभार–। लावण्येसी॥ १००॥ तैसें सर्वसुखेंसहित। दैवचि मूर्तिमंत। येईल देखी काढत। तुम्हांपाठीं॥ १०१॥ ऐसे समस्त भोगभरित। होआल तुम्हीं अनार्त। जरी स्वधर्मनिरत। वर्ताल बापा॥ १०२॥ कां जालिया सकल संपदा। जो अनुसरेल इंद्रियमदा। लुब्ध होऊनि स्वादा। विषयांचिया॥ १०३॥ तिहीं यज्ञभावितीं सुरीं। जे हे संपत्ति दिधली पुरी। तया स्वधर्मी सर्वेश्वरीं। न भजेल जो॥ १०४॥

न होष्यति हवींष्यग्नौ देवान्नाराधयिष्यति।
न वापि यो यथाकालं ब्राह्मणान् भोजयिष्यति ॥ १०५ ॥
भविष्यति विमूढत्वाद् गुरुभक्तिपराङ्मुखः।
नार्चिष्यत्यातिथीन् यो वा न ज्ञातींस्तोषयिष्यति ॥ १०६ ॥
एवं धर्मक्रियास्त्यक्त्वा धनदर्पसमन्वितः।
भोगेष्वासक्तचित्तो यः केवलेषु भविष्यति ॥ १०७ ॥
ध्रुवोऽपायः पुरस्तस्य गरीयान् येन नङ्क्ष्यति।
सर्वैश्वर्यं स भोगांश्च प्राप्तान् भोक्तुं न लप्स्यते ॥ १०८ ॥
शरीरे विगतायुष्के चैतन्यं न वितिष्ठते।
दैवहीनस्य वा गेहे न लक्ष्मीर्भजते स्थितिम् ॥ १०९ ॥
दीपे निर्वाणतां याते प्रकाशोऽपि विनश्यति।
तथा सर्वसुखाधारः स्वधर्मे लयमीयुषि ॥ ११० ॥
एवं यत्र निजाचार आत्मनो लुप्यतेतराम्।
हन्त स्वतन्त्रता तत्र वसतिं नैव विन्दति ॥ १११ ॥

---

अग्निमुखीं हवन । न करील देवतापूजन। प्राप्तवेळे भोजन । ब्राह्मणाचें ॥ १०५ ॥ विमुख होईल गुरुभक्ती । आदर न करील अतिथी । संतोष नेदील ज्ञाती । आपुलिये ॥ १०६ ॥ ऐसा स्वधर्मक्रियारहितु। आथिलेपणें प्रमत्तु । केवल भोगासक्तु । होईल जो ॥ १०७ ॥ तया मग अपावो थोर आहे । जेणें तें हातींचें सकळ जाये । देखा प्राप्तही न लाहे । भोग भोगूं ॥ १०८ ॥ जैसें गतायुषीं शरीरीं । चैतन्य वासु न करी । कां निर्दैवींच्या घरीं । न राहे लक्ष्मी ॥ १०९ ॥ तैसा स्वधर्मु जरी लोपला । तरी सर्व सुखांचा थारा मोडला । जैसा दीपासवें हरपला । प्रकाशु जाय ॥ ११० ॥ तैसी निजवृत्ति जेथ सांडे । तेय स्वतंत्रते वस्ती न घडे । आइका प्रजा हो फुडें । विरंचि म्हणे ॥ १११ ॥

स्वधर्मस्त्यक्ष्यते येन तं कालो दण्डयिष्यति ।
चोरोऽयमित्यवेत्यास्य सर्वस्वं च हरिष्यति ॥ ११२ ॥

ततः सर्वाणि पापानि तमाक्रामन्ति सर्वतः ।
श्मशानं सर्वभूतानि रजनीसमये यथा ॥ ११३ ॥

त्रिलोक्यां यानि दुःखानि पातकानि च यानि वै ।
सकलं दैन्यजातं च वासं तत्रैव कुर्वते ॥ ११४ ॥

प्रपद्यते स उन्मत्त ईदृशीं कृपणां दशाम् ।
यद्वदन्मुच्यते नैव कल्पान्तेऽपि कथंचन ॥ ११५ ॥

अतः स्वधर्मो न कदापि हेयो
विमार्गयायीनि निजेन्द्रियाणि ।
यथा भवेयुर्न तथा प्रयत्यं
पुंसेति शिक्षा चतुराननस्य ॥ ११६ ॥

जलेन मीनस्य विनाकृतस्य
मृत्युर्यथा जायत एव सद्यः ।
स्वधर्महीनस्य तथा विनाशो
ध्रुवो नरस्येत्यवधारणीयम् ॥ ११७ ॥

---

म्हणऊनि स्वधर्मु जो सांडील । तयातें काळु दंडील । चोरु म्हणूनि हरील । सर्वस्व तयाचें ॥ २१२ ॥ मग सकळ दोषु भंवते । गिंवसोनि घेती तयातें । रात्रिसमयीं श्मशानातें । भूतें जैसीं ॥ ११३ ॥ तैसीं त्रिभुवनींचीं दुःखें । आणि नानाविधें पातकें । दैन्यजात तितुकें । तेथेंचि वसे ॥ ११४ ॥ ऐसें होय तया उन्मत्ता । मग न सुटे बापा रुदतां । कल्पांतींही सर्वथा । प्राणिगण हो ॥ ११५ ॥ म्हणऊनि निजवृत्ति हे न सांडावी । इंद्रियें वरळों नेदावीं । ऐसें प्रशांतें शिकवी । चतुराननु ॥ ११६ ॥ जैसें जळचरा जळ सांडे । मग तत्क्षणीं मरण मांडे । हा स्वधर्मु तेणें पाडें । विसंवो नये ॥ ११७ ॥

अतः समस्तैरपि भो भवद्भिः
स्वे स्वे रतैः कर्माणि भाव्यमेव ।
न कर्म हेयं विहितं कदाचित्
पुनः पुनः कथ्यत एतदेव ॥ ११८ ॥

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥

मानसेन निरिच्छेन विहिता आचरन् क्रियाः ।
तद्विधौ विनियुङ्क्ते यो विद्यमानां स्वसंपदम् ॥ ११९ ॥
गुरुगोत्राग्निपूजायां कालप्राप्तद्विजार्चने ।
रमते यः पितॄणां च कृते श्राद्धादिकर्मसु ॥ १२० ॥
य एवं धर्मयज्ञेन यजते यज्ञपूरुषम् ।
भुङ्क्ते च हुतशेषं यत् कुटुम्बेन सभं सुखम् ॥ १२१ ॥
स नूनं तेन भोग्येन यज्ञशेषेण सर्वथा ।
सेवितेन स्वकैः सर्वैः कल्मषैः परिमुच्यते ॥ १२२ ॥
महारोगा विनश्यन्ति यथैवामृतसेवनात् ।
अशनाद्यज्ञशेषस्य तथाघान्यखिलान्यपि ॥ १२३ ॥

---

म्हणोनि तुम्हीं समस्तीं । आपुलालिया कर्मीं उचितीं । निरत व्हावें पुढतपुढतीं । म्हणिपत अर्थे ॥ ११८ ॥ देखा विहित क्रियाविधि । निर्हेतुका बुद्धि । जो असतिये समृद्धि । विनियोगु करी ॥ ११९ ॥ गुरु गोत्र अग्नि पूजी । अवसरीं भजे द्विजीं । निमित्तादिकीं यजी । पितरोद्देशें ॥१२०॥ या यज्ञक्रिया उचिता । यज्ञेशीं हवन करितां । हुतशेष स्वभावता । उरे जें जें ॥ १२१ ॥ तें सुखें आपले घरीं । कुटुंबेसीं भोजन करी । कीं भोग्यचि तें निवारी । कल्मषातें ॥१२२॥ तें यज्ञावशिष्ट भोगी । म्हणोनि सांडिजे जो अघीं । जयापरी महारोगी । अमृतसिद्धि ॥ १२३ ॥

तत्त्वनिष्ठो यथा भ्रान्तिलेशेनापि न बाध्यते।
तथा यज्ञावशिष्टाशी न दोषेणोपलिप्यते ॥ १२४॥
अतोऽर्जितं स्वधर्मेण तेनैव विनियुज्यताम्।
तच्छेषं यच्च तत्पुंसा संतोषेणोपभुज्यताम् ॥ १२५॥
तुभ्यं निवेदिता पार्थ स्थितिराद्येयमीदृशी।
इयमेवानुसर्तव्या वर्तितव्यं न चान्यथा ॥ १२६॥
देहमेवात्मभावेन गृह्णते ये कुबुद्धयः।
इन्द्रियार्थांश्च ये तांस्तान् भोगार्हान्मन्वते तथा ॥ १२७॥
यज्ञोपकरणं सर्वमिदमित्यनवेत्य ये।
अहंबुद्ध्या प्रवर्तन्ते भ्रान्तवद्भोक्तुमात्मना ॥ १२८॥
कारयित्वोत्तमान्पाकान् यथारुच्याहरन्ति ये।
स्वयमेव त एनांसि भुञ्जते स्वानि केवलम् ॥ १२९॥
सकलाप्यात्मनः संपद् हविरित्यवधार्यताम्।
सा च स्वधर्मयज्ञेन हूयतामादिपूरुषे ॥ १३०॥

---

कीं तत्त्वनिष्ठु जैसा। नागवे भ्रांतिलेशा। तो शेषभोगी तैसा। नाकळे दोषा ॥ १२४ ॥ म्हणोनि स्वधर्में जे अर्जे। तें स्वधर्मेंचि विनियोगिजे। मग उरे तें भोगिजे। संतोषेंसीं ॥ १२५ ॥ हें वांचूनि पार्था। राहाटों नये अन्यथा। ऐसी आद्य हे कथा। श्रीमुरारि सांगे ॥१२६॥ जे देहचि आपुणपें मानिती। आणि विषयांतें भोग्य म्हणती। यापरतें न स्मरती। आणिक कांहीं ॥१२७॥ हें यज्ञोपकरण सकळ। नेणतसाते बरळ। अहंबुद्धि केवळ। भोगूं पाहती ॥ १२८ ॥ इंद्रियरुचीसारखे। करविती पाक निके। ते पापिये पातकें। सेविती जाण ॥१२९॥ हें संपत्तिजात आघवें। हवनद्रव्य मानावें। मग स्वधर्मयज्ञें अर्पावें। आदिपुरुषीं ॥ १३० ॥

तथेदमननुष्ठाय पाकान् नानाप्रकारकान् ।
निष्पादयन्त्यहो मन्दा उपभोगार्थमात्मनः ॥ १३१ ॥
याति येन मखः सिद्धिं परेशो येन तुष्यति ।
तदन्नं नैव मन्तव्यं गुणैर्हीनं कदाचन ॥ १३२ ॥
नेदं साधारणं गण्यं ब्रह्मरूपमिदं विदुः ।
जगतः सकलास्यास्य याति जीवनहेतुताम् ॥ १३३ ॥

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥

अन्नाद्भूतान्यशेषाणि प्रजायन्ते धनंजय ।
इदमन्नं च सर्वत्र पर्जन्येन प्रसूयते ॥ १३४ ॥
पर्जन्यो जायते यज्ञाद् यज्ञो भवति कर्मणः ।
कर्मापि ब्रह्मणो वेदरूपाज्जन्म प्रपद्यते ॥ १३५ ॥
स च वेदोऽक्षरात्साक्षात् समुपन्नः परात्परात् ।
ब्रह्मबद्धमतः सर्वं जगदेतच्चराचरम् ॥ १३६ ॥

---

हें सांडोनियां मूर्ख । आपणपेंयालागीं देख । निपजविती पाक । नानाविध ॥ १३१ ॥ जिहीं यज्ञु सिद्धी जाये । परेशा तोषु होये । तें हें सामान्य अन्न नोहे । म्हणोनियां ॥ १३२ ॥ अन्नास्तव भूतें । प्ररोह पावती समस्तें । मग पर्जन्यु या अन्नातें । सर्वत्र प्रसवे ॥ १३४ ॥ तया पर्जन्या यज्ञीं जन्म । यज्ञातें प्रगटी कर्म । कर्मासि आदि ब्रह्म । वेदरूप ॥ १३५ ॥ तया वेदातें परात्पर । प्रसवतसे अक्षर । म्हणऊनि हें चराचर । ब्रह्मबद्ध ॥ १३६ ॥

यज्ञो यः कर्मणो मूर्तिस्तस्मिन् वासो निरन्तरम् ।
वेदस्यास्तीति जानीहि सुभद्रायाः पतेऽर्जुन ॥ १३७ ॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

इदृशीयं मया पूर्वा कथिता ते परम्परा ।
संक्षेपतोऽध्वरस्यास्य कृत एव धनुर्धर ॥ १३८ ॥
अतः स्वधर्मरूपं यो यज्ञं योग्यतमं जनः ।
अत्र लोके मदोन्मत्तो यथावन्नानुतिष्ठति ॥ १३९ ॥
उपयुङ्क्ते च यः स्वैरमिन्द्रियाणि कुकर्मसु ।
पापराशिर्ध्रुवं भूमेर्भारभूतः स केवलम् ॥ १४० ॥
अकालोन्नतमाकाशे पयोदपटलं यथा ।
तस्यातिनिष्फलं पार्थ जन्मकर्माखिलं तथा ॥ १४१ ॥
स्वधर्माचरणं यस्य घटते नैव जातुचित् ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ १४२ ॥

---

परी कर्माचिये मूर्ति । यज्ञीं अधिवासु श्रुति । ऐकें सुभद्रापति । अखंड गा ॥ १३७ ॥ ऐशी हे आदि परंपरा । संक्षेपें तुज धनुर्धरा । सांगितली या अध्वरा । लागूनियां ॥ १३८ ॥ म्हणूनि समूळ हा उचितु । स्वधर्मरूप क्रतु । नानुष्ठी जो मत्तु । लोकीं इये ॥ १३९ ॥ तो पातकांची राशी । जाण भार भूमीसी । जे कुकर्मे इंद्रियासीं । उपेगा गेला ॥ १४० ॥ तें जन्मकर्म सकळ । अर्जुना अतिनिष्फळ । जैसें कां अभ्रपटल । अकाळींचें ॥ १४१ ॥ कां गळां स्तन अजेचे । तैसें जियालें देखें तयाचें । जया अनुष्ठान स्वधर्माचें । घडेचिना ॥ १४२ ॥

अतो नैव स्वधर्मोऽयं त्यक्तुं केनापि युज्यते ।
सेवितव्योऽयमेवैकः सर्वभावेन सर्वदा ॥ १४३ ॥
शरीरमपि संप्राप्तं स्वस्वकर्मानुसारतः ।
एवं गते किमस्माभिर्हेयं कर्मोचितं निजम् ॥ १४४ ॥

सारं वचो मे शृणु सव्यसाचिन्
संप्राप्य ये मानवदेहमत्र ।
चरन्ति कर्माणि न खेदभाजो
मूर्खेषु तान्मूर्खतमानवेहि ॥ १४५ ॥

'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

देहधर्मैर्युतोऽप्येकः कर्मणेह न लिप्यते ।
स एवात्मस्वरूपे यः केवलं रमते सदा ॥ १४६ ॥
आत्मबोधेन संतुष्टः कृतकार्यो ह्यसौ स्वयम् ।
कर्मसङ्गादतो मुक्तः स्वभावेनैव विद्यते ॥ १४७ ॥

---

म्हणोनि ऐकें पांडवा । हा स्वधर्मु कवणें न संडावा । सर्वभावें भजावा । हाचि एकु ॥१४३॥ हां गा शरीर जरी जाहलें । तरी कर्तव्यबोधें आलें । मग उचित कां आपुलें । वोसंडावें ॥ १४४ ॥ परिस पां सव्यसाची । मूर्ति लाहोनि देहाची । खंती करिती कर्मांची । ते गांवढे गा ॥ १४५ ॥ देखें असतेनि देहधर्में । एथ तोचि एकु न लिंपे कर्में । जो अखंडित रमे । आपणपांचि ॥ १४६ ॥ जो तो आत्मबोधें तोषला । तरी कृतकार्यु देखें जाहला । म्हणोनि सहजें सांडवला । कर्मसंगा ॥ १४७ ॥

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥

तृप्तिलाभेऽवसीयन्ते साधनानि स्वयं न किम् ।
स्वरूपानन्दमग्नस्य तथा कर्माण्यपि स्वयम् ॥ १४८ ॥
पार्थ नावाप्यते यावदात्मबोधः स चेतसा ।
आश्रयस्तावदेवैषां साधनानां विधीयताम् ॥ १४९ ॥

तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥

अतस्त्वं नियतः पार्थ सर्वकामविवर्जितः ।
भूत्वोचितेन धर्मेण स्वेन वर्तितुमर्हसि ॥ १५० ॥
आचरद्भिः स्वधर्मं यैः प्राप्ता निष्कामतार्जुन ।
ते कैवल्यपदं प्राप्ता मानवाः परमार्थतः ॥ १५१ ॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि ॥ २० ॥

अत्यजन्तोऽपि कर्माणि विहितान्यखिलान्यपि ।
ननु मोक्षसुखं पूर्वं संप्रापुर्जनकादयः ॥ १५२ ॥

---

तृप्ति जालिया जैसीं । साधनें सरती आपैसीं । देखें आत्मतुष्टी तैसीं । कर्मे नाहीं ॥ १४८ ॥ जंववरी अर्जुना । तो बोधु भेटेना मना । तंवचि यया साधना । भजावें लागे ॥ १४९ ॥ म्हणऊनि तूं नियतु । सकळ कामरहितु । होऊनियां उचितु । स्वधर्मे रहाटें ॥१५०॥ जे स्वधर्मे निष्कामता । अनुसरले पार्था । ते कैवल्य परम तत्त्वतां । पावले जगीं ॥ १५१ ॥ देख पां जनकादिक । कर्मजात अशेख । न सांडितांचि मोक्षसुख । पावते जाहले ॥ १५२ ॥

तस्मात्पार्थ भवत्वास्था तवेहोचितकर्मसु।
संपत्स्यतेऽनयान्योऽपि कश्चिदर्थः सुशोभनः ॥ १५३ ॥
चरामश्चेत् स्वयं तानि चरिष्यन्ति जना अपि।
कर्मलोपकृता हानिस्तेषां च न भविष्यति ॥ १५४ ॥
अहो निष्कामतां प्राप्ताः कृतार्था इति ये स्वयम्।
कर्म तैरपि कर्तव्यं लोकसंग्रहकारणात् ॥ १५५ ॥
चक्षुष्मानग्रतोऽन्धानामन्धवत्पथि गच्छति।
चरन्तो धर्ममज्ञेभ्यो दिशन्तु ज्ञानिनस्तथा ॥ १५६ ॥
कथमेवमनादिष्टा अज्ञा ज्ञानमवाप्नुयुः।
कथं वा मार्गमेतं ते जानीयुर्योग्यमात्मनः ॥ १५७ ॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तमनुवर्तते ॥ २१ ॥

श्रेष्ठैराचर्यते योऽत्र स धर्म इति गद्यते।
अनुतिष्ठन्ति सामान्यास्तमेव सकला जनाः ॥ १५८ ॥

---

याकारणें पार्था। होआवी कर्मी आस्था। हे आणिकाही एका अर्था। उपकरेल ॥ १५३ ॥ जे आचरतां आपणपयां। देखी लागेल लोका यया। तरी चुकेल अपाया। प्रसंगेंचि ॥ १५४ ॥ देखें प्राप्तार्थ जाहले। जे निष्कामता पावले। तयांही कर्तव्या असे उरलें। लोकांलागीं ॥ १५५ ॥ मार्गी अंधासरिसा। पुढें देखणाही चाले जैसा। अज्ञाना प्रकटावा धर्मु तैसा। जाणतेनि ॥ १५६ ॥ हां गा ऐसें जरी न कीजे। तरी अज्ञाना काय उमजे। तिहीं कवणेपरी जाणिजे। मार्गातें या ॥ १५७ ॥ एथ वडील जें जें करिती। तया नाम धर्मु ठेविती। तेंचि येर अनुष्ठिती। सामान्य सकळ ॥ १५८ ॥

कर्म नैव परित्याज्यमेवंभूतेऽत्र वस्तुनि।
अनुष्ठातव्यमेवैतत् सज्जनैस्तु विशेषतः ॥ १५९ ॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥

इदानीं कृतयान्येषां कथया पार्थ किं मया।
ननु पश्याहमप्यत्र कर्ममार्गं समाश्रये ॥ १६० ॥
केनापि व्यसनेनाहमिच्छया वाकुलीकृतः।
स्वधर्ममाचरामीति यदि ब्रूषे त्वमर्जुन ॥ १६१ ॥
तदा पूर्णगुणत्वेन मत्समो नास्ति कश्चन।
ईदृगैश्वर्यसंपन्नस्तवास्मि विदितो न किम् ॥ १६२ ॥
गुरुपुत्रो मयानायि मृतोऽपि, स पराक्रमः।
त्वयादर्शि, स वर्तेऽहं जोषमेवात्र कर्मणि ॥ १६३ ॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥२३ ॥

यत्स्वधर्मे प्रवर्तेऽहं साकाङ्क्ष इव मानवः।
तत्रायं केवलो हेतुरेक एवास्ति नापरः ॥ १६४ ॥

---

हें ऐसें असे स्वभावें। म्हणोनि कर्म न संडावें। विशेषें आचरावें। लागे संतीं ॥१५९॥ आतां आणिकांचिया गोठी। कायशा सांगों किरीटी। देखें मीचि इये राहाटी। वर्तत असें ॥ १६० ॥ काय सांकडें कांहीं मातें। कीं कवणें एकें आर्तें। आचरें मी कर्मातें। म्हणसी जरी ॥ १६१ ॥ तरी पुरतेपणालागीं। आणिकु दुसरा नाहीं जगीं। ऐसी सामग्री माझ्या अंगीं। जाणसी तूं ॥ १६२ ॥ मृत गुरुपुत्र आणिला। तो तुवां पवाडा देखिला। तोही मी उगला। कर्मी वर्तें ॥ १६३ ॥ परी स्वधर्मी वर्तें कैसा। साकांक्षु कां हो जैसा। तयाचि एका उद्देशा। लागोनियां ॥ १६४ ॥

यदमी अस्मदायत्ताः प्राणिनः सर्व एव हि।
मा भूवन्कर्मलोपेन संभ्रान्ता इह भूतले ॥ १६५ ॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥

भूत्वा वयं चेदिह पूर्णकामा
आत्मस्थितावेव रतिं भजेम।
प्रजास्तदेमाः सकला विमूढाः
कथं नु संसारमिमं तरेयुः ॥ १६६ ॥

पन्थानमस्माभिरुरीकृतं जना
दृष्ट्वानुयान्तीति विलोक्यते क्रमः।
ते चेद्वयं कर्म न संश्रयेमहि
लोकस्थितिर्ध्वस्ततरा भविष्यति ॥ १६७ ॥

तस्मात्समर्थो य इहास्ति कश्चित्
सर्वज्ञता यत्र च विश्रुतास्ते।
विशेषतस्तेन न कर्ममार्गो
हेयः कदापीह धनंजयायम् ॥ १६८ ॥

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

---

जे भूतजात सकळ। असे आम्हांचि अधीन केवळ। तरी न व्हावें बरळ। म्हणोनियां ॥१६५॥ आम्ही पूर्णकाम होउनी। जरी आत्मस्थिती राहुनी। तरी प्रजा हे कैसेनि। निस्तरेल ॥ १६६ ॥ इहीं आमुची वाट पाहावी। मग वर्तती परी जाणावी। ते लोकस्थिति आघवी। नासिली होईल ॥ १६७ ॥ म्हणोनि समर्थु जो एथें। आथिला सर्वज्ञते। तेणें सविशेषें कर्मातें। त्यजावें ना ॥ १६८ ॥

यथेह क्रियते कर्म कामुकेन फलाशया ।
निराशेनापि कर्तव्यमौत्सुक्यादेव तत्तथा ॥ १६९ ॥
सर्वथा रक्षणीयैव लोकसंस्थाखिलार्जुन ।
वारं वारमिति ज्ञात्वा कर्ममार्गमुरीकुरु ॥ १७० ॥
यथाशास्त्रं वर्तितव्यं स्थाप्यं मार्गेऽखिलं जगत् ।
अलौकिकत्वमाचर्यं न लोकेषु कदाचन ॥ १७१ ॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥ २६ ॥

स्तन्यपानेऽपि सायासः पक्वान्नानि कथं शिशुः ।
भुञ्जीतेति न देयानि तस्मै तानि धनुर्धर ॥ १७२ ॥
तथा कर्मापि यः कर्तुं सम्यग्वेद न मानवः ।
लीलयापि न नैष्कर्म्यं पुरस्तस्योपवर्ण्यताम् ॥ १७३ ॥
सत्क्रियायां प्रवर्त्योऽसौ प्रशस्या सैव केवलम् ।
निष्कामैरपि संदर्श्या स्वयं कृत्वा सती क्रिया ॥ १७४ ॥

---

देखें फळाचिया आशा । आचरे कामुकु जसा । कर्मी भरू होआवा तैसा । निराशाही ॥ १६९ ॥ जे पुढतपुढती पार्था । हे सकळ लोकसंस्था । रक्षणीय सर्वथा । म्हणऊनियां ॥ १७० ॥ मार्गाधारें वर्तावें । विश्व हें मोहरें लावावें । अलौकिक नोहावें । लोकांप्रति ॥ १७१ ॥ जें सायासें स्तन्य सेवी । तें पक्वान्नें केवीं जेवी । म्हणोनि बाळका जैसीं नेदावीं । धनुर्धरा ॥ १७२ ॥ तैसी कर्मी जया अयोग्यता । तयाप्रति नैष्कर्म्यता । न प्रगटावी खेळतां । आदिकरूनी ॥ १७३ ॥ तेथें सत्क्रियाचि लावावी । तेचि एकी प्रशंसावी । नैष्कर्मीही दावावी । आचरोनि ॥ १७४ ॥

लोककल्याणहेतोस्तान् युक्तकर्माणि कुर्वतः ।
कर्मबन्धो न बाधेत विद्यते नात्र संशयः ॥ १७५ ॥
राज्ञीत्वं चापि राजत्वं नाटयन्तो नटाः स्वयम् ।
स्त्रीपुंवत् किं न वर्तन्ते तद्भावरहिता अपि ।
तथा कर्म चरन्तोऽपि लिप्यन्ते ते न कर्मणा ॥ १७६ ॥

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥

ननु स्वशिरसा भारं परवाह्यं वहेम चेत् ।
ब्रूहि त्वं तेन भारेण नावसन्ना भवेम किम् ॥ १७७ ॥
शुभाशुभानि कर्माणि जायन्ते प्रकृतेर्गुणैः ।
तेषां कर्ताहमस्मीति मूर्खो ब्रूते मतिभ्रमात् ॥ १७८ ॥
अहंकाराधिरूढो य एवमेकान्तमूढधीः ।
तस्मै गूढोऽयमाख्येयः परमार्थो न कर्हिचित् ॥ १७९ ॥
आस्तां तावदिदं पार्थ हितं ते कथयेऽधुना ।
सावधानेन चित्तेन तदादौ श्रोतुमर्हसि ॥ १८० ॥

---

तया लोकसंग्रहालागीं । वर्ततां कर्मसंगीं । तो कर्मबंधु आंगीं । बाजेलना ॥ १७५ ॥ जैसी बहुरूपियांचीं रावोराणी । स्त्रीपुरुषभावो नाहीं मनीं । परी लोकसंपादणी । तैसीच करिती ॥ १७६ ॥ देखें पुढिलाचें वोझें । जरी आपुला माथां घेइजे । तरी सांगें कां न दाटिजे । धनुर्धरा ॥ १७७ ॥ तैसीं शुभाशुभें कर्मे । जियें निपजती प्रकृतिधर्मे । तियें मूर्ख मतिभ्रमें । मी कर्ता म्हणे ॥ १७८ ॥ ऐसा अहंकाराधिरूढ । एकदेशी मूढ । तया हा परमार्थ गूढ । प्रगटावा ना ॥ १७९ ॥ हें असो प्रस्तुत । सांगिजेल तुज हित । तें अर्जुना देऊनि चित्त । अवधारीं पां ॥ १८० ॥

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥

देहाहंकारतः सर्वं कर्मजातं प्रजायते ।
तत्त्ववित्सु विकारस्तु नांशतोऽपि स विद्यते ॥ १८१ ॥
त्यक्त्वा देहाभिमानं ते गुणकर्माण्यतीत्य च ।
साक्षिभूताः स्वदेहेषु वर्तन्त एव केवलम् ॥ १८२ ॥
अतो देहभृतोऽप्येते बध्यन्ते नैव कर्मभिः ।
आत्मभासितजीवानां चेष्टाभिर्भास्करो यथा ॥ १८३ ॥

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥

प्रकृतेर्वशवर्ती यो गुणसंभ्रान्तमानसः ।
स एव किल लोकेऽस्मिन् कर्मभिर्लिप्यते नरः ॥ १८४ ॥
इन्द्रियाणां गुणधारात् स्वस्वव्यापारवर्तिनाम् ।
प्रपद्यते बलात्कारात् कर्तृत्वं कर्मणो ह्यसौ ॥ १८५ ॥

मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥

---

जे तत्त्वज्ञानियांच्या ठायीं । तो प्रकृतिभावो नाहीं । जेथ कर्मजात पाहीं । निपजत असे ॥ १८१ ॥ ते देहाभिमानु सांडुनी । गुणकर्में वोलांडुनी । साक्षीभूत होउनी । वर्तती देहीं ॥ १८२ ॥ म्हणूनि शरीरी जरी होती । तरी कर्मबंधा नातळती । जैसा कां भूतचेष्टा गभस्ती । घेपवेना ॥ १८३ ॥ एथ कर्मी तोचि लिंपे । जो गुणसंभ्रमें घेपे । प्रकृतीचेनि आटोपें । वर्तत असे ॥ १८४ ॥ इंद्रियें गुणाधारें । राहाटती निजव्यापारें । तें परकर्म बलात्कारें । आपादी जो ॥ १८५ ॥

अतोऽनुष्ठाय कर्माणि विहितान्यखिलान्यपि ।
मय्यमर्प्य चित्तं तु स्वात्मरूपे निवेशय ॥ १८६ ॥
कर्मणोऽस्यास्म्यहं कर्ता फलं चेदमपेक्ष्यते ।
इत्ययं चाभिमानस्ते चित्ते मा कुरुतां पदम् ॥ १८७ ॥
मा शरीरपरो भूस्त्वं सर्वान्कामान्परित्यज ।
यथाकालं तदा भुङ्क्ष्व तांस्तान्भोगानुपस्थितान् ॥ १८८ ॥
करे कोदण्डमादाय रथारूढो भवाधुना ।
समाहितमनाश्चापि वीरवृत्तिमुरीकुरु ॥ १८९ ॥
कीर्तिं प्रतनु लोके स्वां धर्मगौरवमेधय ।
दुर्योधनादिदुष्टानां भारान्मोचय मेदिनीम् ॥ १९० ॥
भव निःशङ्क एव त्वं संग्रामे धेहि मानसम् ।
तदन्यविषयां कांचित्कथामपि च मा कुरु ॥ १९१ ॥

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥

---

तरी उचितें कर्मे आघवीं । तुवां आचरोनि मज अर्पावीं । परी चित्त-वृत्ति न्यासावी । आत्मरूपीं ॥१८६॥ आणि हें कर्म मी कर्ता । आचरेन या अर्था । ऐसा अभिमानु झणें चित्ता । रिघों देसी ॥ १८७ ॥ तुवां शरीरपरा नोहावें । कामनाजात सांडावें । मग अवसरोचित भोगावे । भोग सकळ ॥ १८८ ॥ आतां कोदंड घेऊनि हातीं । आरूढ पां इयें रथीं । देईं आलिंगन वीरवृत्ती । समाधानें ॥ १८९ ॥ जगीं कीर्ती रूढवीं । स्वधर्माचा मानु वाढवीं । इया भारापासोनि सोडवीं । मेदिनी हे ॥ १९० ॥ आतां पार्था निःशंकु होईं । या संग्रामा चित्त देईं । एथ हें वांचूनि कांहीं । बोलों नये ॥ १९१ ॥

मतं मेऽनुपरोधार्हं यैरिदं प्रतिपद्यते ।
सादरं श्रद्धया चापि समनुष्ठीयतेऽर्जुन ॥ १९२ ॥
तान् कर्मरहितान्विद्धि सर्वकर्मस्थितानपि ।
अतोऽवश्यमनुष्ठेयं कर्मजातमिहार्जुन ॥ १९३ ॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ ३२ ॥

भूत्वा तु प्रकृतेर्वश्या लालयन्तीन्द्रियाणि ये ।
धिक्कारपूर्वकं चेदं संत्यजन्ति मतं मम ॥ १९४ ॥
सामान्यत्वेन मत्वेदं सोपहासं ब्रुवन्ति च ।
अर्थवादोऽयमस्तीति ये वाचालतया नराः ॥ १९५ ॥
तान्मोहमदिरामत्तान् विषयाख्यविषावृतान् ।
अज्ञानपङ्कमग्नान्वा निःशङ्कं गणयार्जुन ॥ १९६ ॥
शवस्य करगं रत्नं जन्मान्धस्य दिनोदयः ।
चन्द्रोदयश्च काकस्य नोपयोगाय कल्पते ॥ १९७ ॥

---

हें अनुपरोध मत माझें । जिहीं परमादरें स्वीकारिजे । श्रद्धापूर्वक अनुष्ठिजे । धनुर्धरा ॥ १९२ ॥ तेही सकळ कर्मीं वर्तत । जाण पां कर्मरहितु । म्हणोनि हें निश्चितु । करणीय गा ॥ १९३ ॥ ना तरी प्रकृतिमंतु होउनी । इंद्रियां लळा देउनी । जे हें माझें मत अव्हेरुनी । वोसंडिती ॥ १९४ ॥ जे सामान्यत्वें लेखिती । अवज्ञा करूनि देखिती । कां हा अर्थवादु म्हणती । वाचाळपणें ॥ १९५ ॥ ते मोहमदिरा भुललें । विषयविखें घारले । अज्ञानपंकीं बुडाले । निभ्रान्त मानीं ॥१९६॥ देखें शवाच्या हातीं दिधलें । जैसें का रत्न वायां गेलें । नातरी जात्यन्धा पाहलें । प्रमाण नोहे ॥ १९७ ॥

तथैवायं विवेकोऽपि मूर्खाणां रुचये न हि ।
जायते चापि नैतेषां मनागपि गुणावहः १९८ ॥
विमुखा ये जनाः पार्थ परमार्थमिमं प्रति ।
संलापोऽपि न तैः सार्धं युज्यते नाम सर्वथा ॥ १९९ ॥
न शृण्वन्त्युपदेशं ते प्रवर्तन्ते च निन्दितुम् ।
प्रकाशं वद दीपस्य पतङ्गः सहते नु किम् ॥ २०० ॥
मरणाय पतङ्गस्य सद्यो दीपोपगूहनम् ।
तथैव विषयासङ्गो विनाशायात्मनो ध्रुवम् ॥ २०१ ॥

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥

अतो विजानता पुंसा लालनं कौतुकादपि ।
इन्द्रियाणां कदाप्येषां कर्तव्यं न कदाचन ॥ २०२ ॥
क्रीडा किमहिना शक्या स्वन्तः किं व्याघ्रसंगमः ।
ब्रूहि हालाहलं पीतं सुजरं किं कदाचन ॥ २०३ ॥

---

कां चंद्राचा उदयो जैसा । उपयोगा नवचे वायसा । मूर्खा विवेकु हा तैसा । रुचेल ना ॥१९८॥ तैसे जे पार्था । विमुख या परमार्था । तयांसी संभाषणही सर्वथा । करावें ना ॥१९९॥ म्हणोनि ते न मानिती । आणि निंदाही करूं लागती । सांगें पतंगु काय साहती । प्रकाशातें ॥ २०० ॥ पतंगा दीपीं आलिंगन । तेथ त्यासी अचुक मरण । तेविं विषयाचरण । आत्मघाता ॥ २०१ ॥ म्हणोनि इंद्रियें इयें एकें । जाणतेनि पुरुखें । लाळावीं ना कौतुकें । आदिकरुनी ॥२०२॥ हां गा सर्पेसीं खेळों येईल । कीं व्याघ्रसंसर्ग सिद्धि जाईल । सांगें हाळाहळ जिरेल । सेविलिया काई ॥ २०३ ॥

क्रीडयाप्यनलो दत्तः प्रज्वलन् किं शमं व्रजेत् ।
नेन्द्रियाणि प्रशाम्येयुर्लालितान्यपि कौतुकात् ॥ २०४ ॥
शरीरं प्रकृतेर्वश्यं यदीदं पार्थ विद्यते ।
संपाद्या विविधा भोगास्तदा तस्य कृते नु किम् ॥ २०५ ॥
शरीरं नु किमस्माभिः पालनीयमहर्निशम् ।
सर्वसमृद्धिजातेन यत्नानास्थाय भूयसः ॥ २०६ ॥
सर्वथेह परिश्रम्य तास्ताः संपाद्य संपदः ॥
किं स्वधर्मस्य लोपेन देहः पोषयितुं क्षमः ॥ २०७ ॥
पञ्चभूतात्मके देहे प्राप्ते पञ्चत्वमन्ततः ।
श्रमस्य फलमालभ्यं तदर्थस्य कुतो वद ॥ २०८ ॥
देहपोषणमात्रं यद्-आत्मघातः स केवलः ।
अतोऽत्र विषवे देयं नावधानं त्वयार्जुन ॥ २०९ ॥

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

---

देखे खेळतां अग्नि लाविला । मग तो न सांवरे जैसा उधवला । तैसा इंद्रियां लळा दिधला । भला नोहे ॥ २०४ ॥ येरवीं तरी अर्जुना । या शरीरा पराधीना । कां नाना भोगरचना । मेळवावी ॥ २०५ ॥ आपण सायासें करूनि बहुतें । सकळही समृद्धिजातें । उदोअस्तु या देहातें । प्रतिपाळावें कां ॥ २०६ ॥ सर्वस्वें शिणोनि एथें । अर्जवावीं संपत्तिजातें । तेणें स्वधर्मु सांडूनि देहातें । पोखावें काई ॥ २०७ ॥ मग हें तंव पांचमेळावा । शेखीं अनुसरलें पंचत्वा । ते वेळीं केला कें गिंवसावा । शीणु आपुला ॥ २०८ ॥ म्हणूनि केवळ देहभरण । ते जाणें उघडी नागवण । यालागीं एथ अंतःकरण । देयावें ना ॥ २०९ ॥

इन्द्रियैरार्थिता एव विषयाः सेविता यदि ।
कामं तदोपजायेत तोषश्चित्तस्य नेति न ॥ २१० ॥

स्निग्धचोरेण तुल्योऽयं तोष इत्यवधार्यताम् ।
ग्रामसीमात्ययापेक्षी क्षणं स्वास्थ्याय यो भवेत् ।
निर्जनं तु वनं प्राप्य घातायैव प्रवर्तते ॥ २११ ॥

विषयविषं वत मधुरं जनयतु चित्ते रुचिं परामादौ ।
प्राणहरं परिणामे विचारिते त्विदमिति प्रतीतिर्नः ॥२१२॥

आमिषं बडिशे सक्तं मीनं लोभयते यथा ।
इन्द्रियस्थस्तथा कामो जीवान् सुखदुराशया ॥ २१३ ॥

आमिषान्तर्हितं यत्तु बडिशं प्राणहारकम् ।
तत्स मीनो न जानाति समावृततयोपरि ॥ २१४ ॥

एवं सुखाभिलाषेण विषयाशां करोति यः ।
स क्रोधदहनाधीनो भविष्यति न संशयः ॥ २१५ ॥

---

एऱ्हवीं इंद्रियांचिया अर्थी–। सारिखा विषयो पोखितां । संतोषु कीर चित्ता । आपजेल ॥ २१० ॥ परी तो संवचोराचा सांगातु । जैसा नावेक स्वस्थु । जंव नगराचा प्रांतु । सांडिजेना ॥२११॥ बापा विषाची मधुरता । झणें आवडी उपजे चित्ता । परी तो परिणामु विचारितां । प्राणु हरी ॥ २१२ ॥ देखें इंद्रियीं कामु असे । तो लावी सुखदुराशे । जैसा गळीं मीनु आमिषें । भुलविजे गा ॥ २१३ ॥ परी तयामाजीं गळु आहे । जो प्राणातें घेऊनि जाये । तो जैसा ठाउवा नोहे । झांकलेपणें ॥ २१४ ॥ तैसें अभिलाषें येणें कीजेल । विषयांची आशा धरिजेल । तरी वरपडा होइजेल । क्रोधानळा ॥ २१५ ॥

मृगयुः परितो रुन्धन् मृगं हन्तुमनाः सुधीः ।
गृहीतावसरः सम्यग्यथा याति कृतार्थताम् ॥२१६॥
विषयाणां प्रकारोऽपि तादृशोऽत इमावुभौ ।
कामक्रोधौ त्वया हेयौ घातकाविति जानता ॥ २१७ ॥
विषया नावलम्ब्यास्ते स्मर्तव्या मनसापि न ।
आर्द्रतैका स्वधर्मस्य मा लयं यातु जात्वपि ॥ २१८ ॥

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥

अस्तु नाम स्वधर्मोऽयं कियानपि सुदुश्चरः ।
स एवानुष्ठितः श्रेयान् इति पार्थावधारय ॥ २१९ ॥
परधर्मस्त्वस्तु नाम नितान्तं रम्यदर्शनः ।
तथाप्याचरता धर्मं संसेव्यः स्वीय एव हि ॥ २२० ॥
दुर्बलेनापि विप्रेण संसेव्यानि कथं वद ।
यानि कानि वरान्नानि शूद्रगेहे कृतानि चेत् ॥ २२१ ॥

---

जैसा कवळोनिया पारधी । घातेचिये संधी । आणि मृगातें बुद्धी । साधावया ॥ २१६ ॥ एथ तैसीचि परी आहे । म्हणूनि संगु हा तुज नोहे । पार्था दोन्ही कामक्रोध हे । घातुक जाणें ॥२१७॥ म्हणऊनि हा आश्रोचि न करावा । मनेंही आठवो न धरावा । एकु निजवृत्तीचा बोलावा । नासों नेदीं ॥ २१८ ॥ अगा स्वधर्मु हा आपुला । जरी कां कठिणु जाहला । तरी हाचि अनुष्ठिला । भला देखें ॥ २१९ ॥ येरु आचारु जो परावा । तो देखतां कीर बरवा । परी आचरतेनि आचरावा । आपुलाचि ॥२२०॥ सांगें शूद्रघरीं आघवीं । पक्वान्नें आहाति बरवीं । तीं द्विजें केवीं सेवावीं । दुर्बळु जरी जाहला ॥ २२१ ॥

अकार्यं नु कथं कार्यं कथमग्राह्यमव नु ।
पषितव्यं कथं चेष्टमपि सेव्यं विचारय ॥ २२२ ॥
मनोहराणि सौधानि परकीयाणि पश्यता ।
भञ्जनीयानि तार्णानि कुटीराणि निजानि किम् ॥ २२३ ॥
इदमास्तामुदूढा या वनिता स्वयमात्मना ।
कुरूपापि सती भुक्ता श्रेयसे सैव नेतरा ॥ २२४ ॥
तथा स्वधर्म एव स्यात्परलोके सुखप्रदः ।
दुस्तरे व्यसनेऽप्यत्र चरितो दुश्चरोऽपि सन्॥२२५ ॥
शर्करा चापि दुग्धं च प्रथिते मधुरे इति ।
कृमिदोषे विरुद्धत्वात् सेवनीये कथं पुनः ॥ २२६ ॥
एवं गतेऽपि सेवेत य एते स दुराग्रहः ।
सेवनं न भवेत्पथ्यं परिणामे धनुर्धर ॥ २२७ ॥
अतो विहितमन्येषामात्मनोऽनुचितं तु यत् ।
तन्न जात्वपि कर्तव्यमात्मश्रेयोऽभिकाङ्क्षिणा ॥ २२८ ॥

---

हें अनुचित कैसेनि कीजे । अग्राह्य केवीं इच्छिजे । अथवा इच्छिलेंही पाविजे । विचारीं पां ॥ २२२ ॥ तरी लोकांचीं धवळारें । देखोनियां मनोहरें । असतीं आपुलीं तणारें । मोडावीं केवीं ॥ २२३ ॥ हें असो वनिता आपुली । कुरूप जरी जाहली । तरी भोगितां तेचि भली । जिया-परी ॥ २२४ ॥ तेवीं आवडे तैसा सांकडु । आचरितां जरी दुवाडु । तन्ही स्वधर्मुचि सरवाडु । परत्रींचा ॥ २२५ ॥ हां गा साकर आणि दूध । हें गौल्य कीर प्रसिद्ध । परी कृमिदोषीं विरुद्ध । घेपे केवीं ॥२२६॥ ऐसेनिही जरी सेविजेल । तरी ते आलुकीचि उरेल । जे तें परिणामीं पथ्य नव्हेल । धनुर्धरा ॥ २२७ ॥ म्हणोनि आणिकासी जें विहित । आणि आपणपेयां अनुचित । तें नाचरावें जरी हित । विचारिजे ॥ २२८ ॥

बहुना किं स्वधर्मस्यानुष्ठाने जीवितं यदि ।
त्यज्यतेऽसौ तथाप्यत्र परत्र च हितावहः ॥ २२९ ॥
उक्तवन्तमिमां वाचं सर्वदेवशिरोमणिम् ।
शार्ङ्गपाणिं तदा जिष्णुर्विनयादिदमब्रवीत् ॥ २३० ॥
यदिदं कथितं कृष्ण त्वया तत्सकलं मया ।
श्रुतं सम्यगिदानीं तु किंचित् पृच्छाम्यपेक्षितम् ॥ २३१ ॥

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ३६ ॥

एवं कथं नु देवेदं भिन्दन्तो यन्निजां स्थितिम् ।
ज्ञानिनोऽप्यत्र दृश्यन्ते केचिदुन्मार्गगामिनः ॥ २३२ ॥
सर्वज्ञा अपि ये भूत्वा सदुपायविदोऽपि च ।
स्वधर्मव्यभिचारेण वर्तन्ते केन हेतुना ॥ २३३ ॥
अन्धो बीजं बुसं चापि विवेक्तुं वेद नो यथा ।
चक्षुष्मानपि किं नाम जानीयान्न तथा क्षणम् ॥ २३४ ॥

---

या स्वधर्मातें अनुष्ठितां । वेचु होईल जीविता । तोहि निका वर उभयतां । दिसत असे ॥ २२९ ॥ ऐसें समस्तसुरशिरोमणी । बोलिले जेथ श्रीशार्ङ्गपाणी । तेथ अर्जुन म्हणे विनवणी । असे देवा ॥ २३० ॥ हें जें तुम्हीं सांगितलें । तें सकळ कीर म्यां परिसिलें । तरी आतां पुसेन कांहीं आपुलें । अपेक्षित ॥ २३१ ॥ तरी देवा ऐसें कैसें । जे ज्ञानियांचीही स्थिति भ्रंशे । मार्गु सांडुनी अनारिसें । चालत देखों ॥ २३२ ॥ सर्वज्ञुही जे होती । हे उपायही जाणती । तेही परधर्में व्यभिचरती । कवणें गुणें ॥२३३॥ बीजा आणि भुसा । अंधु निवाडु नेणे जैसा । नावेक देखणाही तैसा । बरळे कां पां ॥ २३४ ॥

सन्तं सङ्गं ये सकृत् संत्यजन्ति
भूयः सङ्गातृप्तिमन्तस्त एव ।
ये वासार्थं काननं संश्रयन्ते
ग्रामे वासं तन्वते तेऽपि भूयः ॥ २३५ ॥
पापैर्लिप्ता मा स्म भूमेति तेभ्यो
यत्नादादौ ये निलीना भवन्ति ।
हा हा पश्चात्ते बलादेव तेषु
नैवात्मानं रुन्धते पात्यमानम् ॥ २३६ ॥
जाता चित्ते नाम येभ्यो जुगुप्सा
हा हा भूयः सज्यते प्रेम तेषु ।
यत्नो येषां तन्यते वर्जनार्थ--
मायान्त्येते हन्त मार्गन्त एव ॥ २३७ ॥
ईदृशोऽयं बलात्कारो देहे यो दृश्यतेऽसकृत् ।
स किंकर्तृक इत्येतद् हृषीकेशाभिधेहि माम् ॥ २३८ ॥

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥

---

जे असता संगु सांडिती । तेचि संसर्गु करितां न घाती । वनवासीही सेविती । जनपदातें ॥२३५॥ आपण तरी लपती । सर्वस्वें पाप चुकविती। परी बळात्कारें सुइजती । तयाचि माजीं ॥ २३६ ॥ जयाचीं जीवें घेती विवसी । तेचि जडोनि ठाके जीवेंसीं । चुकवितां ते गिंवसी । तयातेंचि ॥ २३७ ॥ ऐसा बलात्कारु एकु दिसे । तो कवणाचा एथ आग्रहो असे। हें बोलावें हृषीकेशें । पार्थु म्हणे ॥ २३८ ॥

तदा हृत्कमलरामः कामो निष्कामयोगिनाम् ।
पुरुषोत्तम आह स्म श्रूयतां कथयामि ते ॥ २३९ ॥
काम एष क्रोध एष दयालेशविवर्जितः ।
कृतान्तो मूर्तिमान् गण्यः श्रेयःकामेन धीमता ॥ २४० ॥
सर्पौ ज्ञाननिधावेतौ व्याघ्रौ विषयकन्दरे ।
मातङ्गौ भक्तिमार्गे वा चरतां मारकौ नृणाम् ॥ २४१ ॥
देहदुर्गस्य दुर्भेद्यौ ग्रावाणौ स्फारगौरवौ ।
उत्तुङ्गाविन्द्रियग्रामप्राकारौ वा प्रकीर्तितौ ।
व्यामोहादिमहाक्षोभजननौ सर्वतो भुवि ॥ २४२ ॥
राजसान्मनसो जातौ मूलमासुरसंपदः ।
तमसः प्रीतिपात्रत्वान्नित्यतृप्तावविद्यया ॥ २४३ ॥
राजसावपि मेऽत्यन्तं प्रियावेताविती नु ।
मदमोहौ स्वसर्वस्वं तमसाभ्यामदर्पयत ॥ २४४ ॥

---

तंव हृदयकमळआरामु । जो योगियांचा निष्काम कामु । तो म्हणतसे पुरुषोत्तमु । सांगेन आइक ॥ २३९ ॥ तरी हे कामु क्रोधु पाहीं । ज्यांतें कृपेची सांठवण नाहीं । हे कृतांताच्या ठायीं । मानिजती ॥ २४० ॥ हे ज्ञाननिधीचे भुजंग । विषयदरीचे वाघ । भजनमार्गींचे मांग । मारक जे ॥ २४१ ॥ हे देहदुर्गींचे धोंड । इंद्रियग्रामींचे कोंड । यांचें व्यामोहादिक बंड । जगावरी ॥ २४२ ॥ हे रजोगुण मानसींचे । समूळ आसुरियेचे । धालेपण ययांचें । अविद्या केलें ॥ २४३ ॥ हे रजाचे कीर जाइले । परी तमासी पढियंते भले । तेणें निजपद यां दिधलें । प्रमादमोहो ॥ २४४ ॥

जीवितस्य रिपू एतौ महान्ताविति मान्यताम्
महतीं समुपायातौ यमराजनिकेतने ॥ २४५ ॥

ययोः क्षुधितयोर्विश्वं न याति ग्रासमात्रताम् ।
स्वयमाशा ययोः सर्वं व्यापारं पर्यवेक्षते ॥ २४६ ॥

लीलया गृह्णती मुष्ट्या भुवनानि चतुर्दश ।
भ्रान्तिस्तस्याः स्वसा प्रेष्ठा वयसास्ति यवीयसी ॥ २४७ ॥

खाद्यं त्रैलोक्यरूपं या खेलन्ती खलु खादति ।
कौतुकादेव दासीत्वं यस्यास्तृष्णोपगच्छति ॥ २४८ ॥

आस्तां तावदिदं मान्यौ मोहस्यैतावुभावपि ।
अहंकारो जगत्सर्वं नर्तयन् स्वप्रभावतः ॥ २४९ ॥

मृतवत्सोदरं भित्त्वा प्रपूर्य च तृणादिना ।
दोग्धा गामिव यो दम्भो जनान्वञ्चयतेऽखिलान् ।
स आभ्यामेव लोकेऽस्मिन्नुपनीतः परां प्रथाम् ॥ २५० ॥

---

हे मृत्यूच्या नगरीं । मानिजती निकियापरी । जे जीविताचे वैरी । म्हणऊनियां ॥ २४५ ॥ जनांसि भुकेलियां आमिषा । हें विश्व न पुरेचि घांसा । कुळवाडी यांचिया आशा । चाळीत असे ॥ २४६ ॥ कौतुकें कवाळितां मुठी । जिये चवदा भुवनें थेंकुटीं । तिये भ्रांतिही धाकुटी । वाल्हीदुल्ही ॥ २४७ ॥ जे लोकत्रयाचें मातुकें । खेळतांचि खाय कवतिकें । तिच्या दासीपणाचेनि बिकें । तृष्णा जिये ॥ २४८ ॥ हें असो मोहें मानिजे । यांतें अहंकारें घेपे दीजे । जेणें जग आपुलेनि भोजें । नाचवीत असे ॥ २४९ ॥ जेणें सत्याचा भोकसा काढिला । मग असत्य तृणकुटें भरिला । तो दंभु रूढविला । जगीं इहीं ॥ २५० ॥

कृता विवसना साध्वी शान्तिराभ्यां विभूषणा।
तद्वासोभूषणैर्मायामातङ्गी समलंकृता।
साधुवृन्दानि तत्सङ्गाद् भ्रंशभाञ्जि कृतानि च ॥ २५१ ॥
विवेकोऽत्राणतां नीतो वैराग्यं निस्त्वचीकृतम्।
भग्ना जीवत एवाभ्यां कन्धरोपशमस्य च ॥ २५२ ॥
संतोषविपिनं छिन्नं धैर्यदुर्गा निपातिताः।
उन्मूलितस्तथैवाभ्यां हन्तानन्दमहीरुहः ॥ २५३ ॥
ज्ञानद्रुमाङ्कुरा लूना सुखनामापि लोपितम्।
उत्पादितश्च जीवानां हृदि तापत्रयानलः ॥ २५४ ॥
सहजातौ शरीरेण सक्तौ जीवेऽपि सन्ततम्।
नेमौ ब्रह्मादिभिः प्राप्यौ यत्नेनापि गवेषितौ ॥ २५५ ॥
चैतन्यस्य प्रातिवेश्यौ पार्श्वे ज्ञानस्य संश्रितौ।
प्रवृत्तौ प्रलये केन शक्यौ वारयितुं वद ॥ २५६ ॥
मज्जयन्तौ विना वारि निर्दहन्तौ विनानलम्।
निगिलन्तौ विना वाचं प्राणिनः सकलानपि ॥ २५७ ॥

---

साध्वी शांति नागविली । मग माया भांगी शृंगारिली । तियेकरवीं विटाळविलीं । साधुवृंदें ॥ २५१ ॥ इहीं विवेकाची त्राय फोडिली । वैराग्याची साल काढिली । जितया मान मोडिली । उपशमाची ॥ २५२ ॥ इहीं संतोषवन खांडिलें । धैर्यदुर्ग पाडिले । आनंदरोप सांडिलें । उपडूनियां ॥ २५३ ॥ इहीं बोधाचीं रोपें लुंचिलीं । सुखाची लिपी पुसिली । जिव्हारीं आगी सूदली । तापत्रयाची ॥ २५४ ॥ हे आंगा तंव घडले । जीवींचि आथी जडले । परी नातुडती गिंवसिलें । ब्रह्मादिकां ॥ २५५ ॥ हे चैतन्याचे शेजारीं । वसती ज्ञानाच्या एका हारीं । म्हणोनि प्रवर्तले महामारी । सांवरती ना ॥ २५६ ॥ हे जळेंवीण बुडविती । आगीवीण जाळिती । न बोलतां कवळिती । प्राणियांतें ॥ २५७ ॥

विशसन्तौ विना शस्त्रं बध्नन्तौ बन्धनीं विना।
घ्नन्तौ प्रतिज्ञया तावज्ज्ञानिनो दर्पमोहितान् ॥ २५८ ॥
रोपयन्तौ विना पङ्कं गृह्णन्तौ जालकं विना।
अत्यन्तान्तर्गतत्वाच्च बलेनानुपमौ भुवि ॥ २५९ ॥

धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।

यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥

व्यालैरावेष्ट्यतेऽन्विष्य यथा चन्दनवल्लरी ।
उल्बेनाव्रियते वापि यथा गर्भो निरन्तरम् ॥ २६० ॥
प्रभां विना यथा भानुर्विना धूमं हुताशनः ।
दर्पणो मलहीनो वा यथा प्रायो न लभ्यते ॥ २६१ ॥
आभ्यां विना तथा ज्ञानं नास्माभिरवलोकितम् ।
तुषेणाच्छादितं धान्यं यथा समुपजायते ॥ २६२ ॥

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।

कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥

---

हे शस्त्रेंवीण साधिती । दोरेंवीण बांधिती । ज्ञानियासी तरी वधिती। पैज घेउनी ॥ २५८ ॥ हे चिखलेंवीण रोंविती । पाशिकेंवीण गोंविती। हे कवणाजोगे न होती । आंतौटेपणें ॥ २५९ ॥ जैसी चंदनाची मुळी। गिंवसोनि घेपे व्याळीं । ना तरी उल्बाची खोळी । गर्भस्थासी ॥ २६० ॥ कां प्रभावीण भानु । धूमेवीण हुताशनु । जैसा दर्पणु मळहीनु । कहीं नसे ॥ २६१ ॥ तैसें इहींवीण एकलें । आम्हीं ज्ञान नाहीं देखिलें । जैं कोंडेनि पां गुंतलें । बीज निपजे ॥ २६२ ॥

स्वयं शुद्धमपि ज्ञानं तथैवाभ्यां समावृतम् ।
अत एव दुरापत्वं ज्ञानस्य समजायत ॥ २६३ ॥
जेतव्यौ पूर्वमेवैतौ ज्ञानं लभ्यं ततः परम् ।
न पुनः संभवत्येव रागद्वेषपराभवः ॥ २६४ ॥
अहो एतद्विनाशाय बलं यावत्प्रदर्श्यते ।
इन्धनं पावकस्येव तावत्तदभिवृद्धये ॥ २६५ ॥

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥

एतयोरेव साहाय्यमुपायैः क्रियतेऽखिलैः ।
अलं जेतुममू एव हठयोगपरानतः ॥ २६६ ॥
प्रागुक्ते दुष्करेऽर्थेऽस्मिन्नुपायोऽस्त्येक उत्तमः ।
तमङ्गीकुरुषे चेत्त्वमिदानीं कथयामि ते ॥ २६७ ॥

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥

इन्द्रियाण्येव सर्वाणि मूलायतनमेतयोः ।
ततः प्रवर्तते कर्म तान्यादौ सर्वथा जहि ॥ २६८ ॥

---

तैसें ज्ञान तरी शुद्ध । परी इहीं असे प्ररुद्ध । म्हणोनि तें अगाध । होऊनि ठेलें ॥ २६३ ॥ आधीं यांतें जिणावें । मग तें ज्ञान पावावें । तंव पराभवो न संभवे । रागद्वेषां ॥ २६४ ॥ यांतें साधावयालागीं । जें बळ वाणिजे आंगीं । तें इंधन जैसें आगी । सावावो होय ॥ २६५ ॥ तैसे उपाय कीजती जे जे । ते यांसीचि होती विरजे । म्हणोनि हटियांतें जिणिजे । इहींचि जगीं ॥ २६६ ॥ ऐसियांहीं सांकडां बोला । एक उपायो आहे भला । तो करितां जरी आंगवला । तरी सांगेन तुज ॥ २६७ ॥ यांचा पहिला कुरुठा इंद्रियें । एथूनि प्रवृत्ति कर्मातें विये । आधीं निर्दळूनि घालीं तियें । सर्वथैव ॥ २६८ ॥

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४२ ॥

मन एव भवेत्कुण्ठं बुद्धिर्मुक्तिमवाप्नुयात् ।
इयता च निराधारौ संपत्स्येते उभावमू ॥२६९ ॥

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥

अन्तरान्निर्गतावेतो विद्धि निःसंशयं मृतौ ।
रश्मिष्वेव निवृत्तेषु कुतो मृगजलोदयः ॥ २७० ॥
रागद्वेषविहीनस्य स्वराज्यं ब्रह्मसंज्ञकम् ।
हस्तगं जायते भुङ्क्ते स आत्मसुखमात्मना ॥ २७१ ॥

गुह्यं संप्राप्तमेवेदं संवादाद्गुरुशिष्ययोः ।
जीवस्य ब्रह्मणश्चैक्यं तत्र त्वं स्थिरतां भज ।
स्थिरीभूतश्च तत्स्थानाज्जातु नोत्थातुमर्हसि ॥ २७२ ॥
राजा सकलसिद्धीनां देवदेवो रमापतिः ।
एवमाह स्म हे राजन् धृतराष्ट्र निशम्यताम् ॥ २७३ ॥

---

मग मनाची धांव पारुषेल । आणि बुद्धीची सोडवण होईल । इतुकेनि थारा मोडेल । या पापियांचा ॥ २६९ ॥ हे अंतरींहूनि जरी फिटले । तरी निभ्रांत जाण निवटले । जैसें रश्मीवीण उरलें । मृगजळ नाहीं ॥ २७० ॥ तैसे रागद्वेष जरी निमाले । तरी ब्रह्मींचें स्वराज्य आलें । मग तो भोगी सुख आपुलें । आपणचि ॥ २७१ ॥ ते गुरुशिष्याची गोठी । पदपिंडाची गांठी । तेथ स्थिर राहोनि नुठीं । कवणे काळीं ॥ २७२ ॥ ऐसें सकळ सिद्धांचा रावो । देवी लक्ष्मीयेचा नाहो । राया ऐकें देवदेवो । बोलता जाहला ॥ २७३ ॥

अतः परं पुनः कृष्णः प्राचीनां कथयिष्यति ।
कथामेकां तदा पार्थः पनः प्रश्नं करिष्यति ॥ २७४ ॥
गौरवं तस्य वादस्य रसवत्त्वं च तत्र यत् ।
तास्यां श्रोतृसुखं भूयः श्रोतॄणां संजनिष्यते ॥ २७५ ॥
दासो निवृत्तिनाथस्य ज्ञानदेवः प्रभाषते ।
सोन्मेषं शृणुतैतं भोः संवादं कृष्णपार्थयोः ॥ २७६ ॥

---

आतां पुनरपि तो अनंतु । आद्य एकी मातु । सांगेल तेथ पांडुसुतु । प्रश्नु करील ॥ २७४ ॥ तया बोलाचा हन पाडु । कीं रसवृत्तीचा निवाडु । येणें श्रोतयां होईल सुरवाडु । श्रवणसुखाचा ॥ २७५ ॥ ज्ञानदेवो म्हणे निवृत्तीचा । चांग उठावा करूनि उन्मेषाचा । मग संवादु श्रीहरिपार्थांचा । भोगावा बापा ॥ २७६ ॥

[ इति श्रीज्ञानेश्वर्याः संस्कृतानुवादे तृतीयोऽध्यायः ]

# संस्कृतज्ञानेश्वरी

## चतुर्थोऽध्यायः

अद्य श्रवणयोर्भाग्यं गीतानिधिरवापि यत् ।
स्वप्नदर्शनमेवेदं प्रत्यक्षानुभवोपमम् ॥ १॥
कथेयं सद्विवेकस्य जगज्ज्येष्ठः स्वयं हरिः ।
प्रतिपादयिता, श्रोता पार्थो भक्तशिरोमणिः ॥ २ ॥
पञ्चमेन सुगन्धस्य तेन वा सुरुचेर्यथा ।
वक्त्रा श्रोतुस्तथा योगो विनोदायात्र भूयसे ॥ ३ ॥
अहो महादिदं भाग्यं यद्गङ्गामृतवाहिनी ।
प्राप्ता, सफलतां यातुः श्रोतृपुण्यानि सर्वथा ॥ ४ ॥
इदानीमिन्द्रियैः सर्वैः कर्तव्यः श्रवणाश्रयः ।
ततो गीताख्यसंवादसुखं सेव्यमिदं मुदा ॥ ५ ॥
अलमेतावतेदानीं विस्तरेण कथां वद ।
यां पृथासूनुना सार्धं श्रीगोविन्दस्तदाकरोत् ॥ ६ ॥

---

आजि श्रवणेंद्रियें पिकलें । जे येणें गीतानिधान देखिलें । आतां स्वप्नचि हें तुकलें । साचासरिसें ॥ १ ॥ आधींचि विवेकाची गोठी । वरी प्रतिपादी श्रीकृष्ण जगजेठी । आणि भक्तराजु किरीटी । परिसत असे ॥ २ ॥ जैसा पंचमालापु सुगंधु । कीं परिमळु आणि सुस्वादु । तैसा भल' जाहला विनोदु । कथेचा इये ॥ ३ ॥ कैसी आगळिक दैवाची । जे गंगा जोडली अमृताची । हो कां जपतपें श्रोतयांचीं । फळा आलीं ॥ ४ ॥ आतां इंद्रियजात आघवें । तिहीं श्रवणाचें घर रिघावें । मग संवादसुख भोगावें । गीताख्य हें ॥ ५ ॥ हा अतिसो अतिप्रसंगें । सांडूनि कथाचि ते सांगें । जे कृष्णार्जुन दोघे । बोलत होते ॥ ६ ॥

राजानं संजयः प्राह पार्थो दैवगुणान्वितः ।
श्रीमन्नारायणेनातिप्रीत्या यदभिभाषितः ॥ ७ ॥
वसुदेवाय देवक्यै ख्यातं यन्न बलाय च ।
पित्रे मात्रे तथा भ्रात्रे तदस्मै कथितं त्वहो ॥ ८ ॥
अन्तिकस्थापि यल्लक्ष्मीर्लेभे प्रेमसुखं न हि ।
तदद्य सकलं लब्धमर्जुनेनैव केवलम् ॥ ९ ॥
पर्धिताः सनकादीनां सुखाशाः सुतरां किल ।
सफला इयतांशेन नाभूवन् किन्तु ता अपि ॥ १० ॥
सुकृतं किं नु पार्थेन सुमहत् कृतमीदृशम् ।
येनास्मिञ्जगदीशस्य प्रेमानुपममीक्ष्यते ॥ ११ ॥
अमूर्तो व्यक्ततां यात एष यस्य कृते स्वयम् ।
एकनिष्ठार्जुनस्याहो तस्य सम्यक् प्रतीयते ॥ १२ ॥
योगिनामप्यनासाद्यः सर्वथा भगवानयम् ।
अगम्योऽर्थस्य वेदानामदृश्यो ध्याननेत्रयोः ॥ १३ ॥

---

ते वेळीं संजयो रायातें म्हणे । अर्जुनु अधिष्ठिला दैवगुणें । जे अतिप्रीति श्रीनारायणें । बोलतु असे ॥ ७ ॥ जें न सांगेचि पितया वसुदेवासी । जें न सांगेचि माते देवकीसी । जें न सांगेचि बंधु बळिभद्रासी । तें गुह्य अर्जुनेंशीं बोलत ॥ ८ ॥ देवी लक्ष्मी येवढी जवळिक । परी तेही न देखे या प्रेमाचें सुख । आजि कृष्णस्नेहाचें बिक । यातेंचि आथी ॥ ९ ॥ सनकादिकांचिया आशा । वाढीनल्या होतिया कीर बहुवसा । परी त्याही येणें मानें यशा । येतीचिना ॥ १० ॥ या जगदीश्वराचें प्रेम । एथ दिसतसे निरुपम । कैसें पार्थे येणें सर्वोत्तम । पुण्य केलें ॥ ११ ॥ हो कां जयाचिया प्रीती । अमूर्त हा आला व्यक्ती । मज एकवंकी यांची स्थिती । आवडतु असे ॥ १२ ॥ एऱ्हवीं हा योगियां नाडळे । वेदार्थासी नाकळे । जेथ ध्यानाचेही डोळे । पावती ना ॥ १३ ॥

एवमात्मस्वरूपोऽयमनादिरचलोऽपि च ।
स केन हेतुना कृष्णः पार्थे सकृपतामगात् ॥ १४ ॥
निराकारः स्वयं योऽस्ति पुटीकृतजगत्पटः ।
प्रेमपाशैः स पार्थस्य कृष्णो निगडितः स्वयं ॥ १५ ॥

श्रीभगवानुवाच—

इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥

अयमेव मया प्रोक्तः कर्मयोगो विवस्वते ।
दिवसा बहवोऽतीता एनं प्रोक्तवतस्तु मे ॥ १६ ॥
विवस्वताथ सूर्येण संपूर्णोऽयं निरूपितः ।
वैवस्वताय मनवे विवृत्यैव सविस्तरम् ॥ १७ ॥
मनुनेक्ष्वाकवे ख्यातोऽनुष्ठाय स्वयमात्मना ।
ईदृश्यादित आरभ्य प्रवृत्तेयं परम्परा ॥ १८ ॥

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनेह महता योगो नष्टः परन्तप ॥ २ ॥

---

तो हा निजस्वरूप । अनादि निष्कंप । परी कवणें मानें सकृप । जाइला आहे ॥ १४ ॥ हा त्रैलोक्यपटाची घडी । आकाराची पैलथडी । कैसा याचिये आवडी । आवरला असे ॥ १५ ॥ मग देव म्हणे पांडुसुता । हाचि योगु आम्हीं विवस्वता । कथिला परी ते वार्ता । बहुतां दिवसांची ॥ १६ ॥ मग तेणें विवस्वतें रवि । हे योगस्थिति आघवी । निरूपिली बरवी । मनूप्रती ॥ १७ ॥ मनूनें आपण अनुष्ठिली । मग इक्ष्वाकुषि उपदेशिली । ऐसी परंपरा विस्तारिली । आद्य हे गा ॥ १८ ॥

ततो राजर्षयोऽन्येऽपि केचिदेतमजानत ।
इदानीं त्वस्य योगस्य कोऽपि नास्तीह कोविदः ॥ १९ ॥

प्राणिनां हि रुचिः कामे देह एवादरः किल ।
अत एवात्मबोधस्य कथापि विस्मृतिं गता ॥ २० ॥

आस्थाबुद्धेर्विमार्गत्वात्संजाता भावनेदृशी ।
सुखं विषयजं श्रेष्ठं प्रपञ्चः प्राणवत्प्रियः ॥ २१ ॥

नग्नक्षपणकग्रामे वसनैः किं प्रयोजनम् ।
जनुषान्धस्य वा ब्रूहि को गुणो रवितेजसा ॥ २२ ॥

बधिराणां सभास्थाने को गीतमभिमन्यते ।
क्रोष्टूनां चौर्यशीलानां चन्द्रिका रुचये नु किम् ॥ २३ ॥

येषां चन्द्रोदयात्पूर्वं नित्यं नेत्रे निमीलतः ।
प्रभवेयुरभिज्ञातुं काकास्ते शशिनं कथम् ॥ २४ ॥

वैराग्यसीमापि न दृश्यते यै-
र्विवेकभाषापि न बुध्यते च ।
कथं नु मूर्खाः पदमीश्वरस्य
ममाप्नुवीरन् बत ते कदापि ॥ २५ ॥

---

मग आणिकही या योगातें । राजर्षि जाहले जाणते । परि तेथोनि आतां सांप्रतें । नेणिजे कोणी ॥ १९ ॥ जे प्राणिया कामीं भरु । देहाचिवरी आदरु । म्हणोनि पडिला विसरु । आत्मबोधाचा ॥ २० ॥ अव्हांटलिया आस्थाबुद्धि । विषयसुखचि परमावधि । जीवु तैसा उपाधि । आवडे लोकां ॥ २१ ॥ एरवीं तरी खवणेयांच्या गांवीं । पाटाउवें काय करावीं । सांगें जात्यंधा रवि । काय आथी ॥ २२ ॥ कां बहिरयांच्या आस्थानीं । कवण गीतातें मानी । का कोल्हेया चंदनीं । आवडी उपजे ॥ २३ ॥ पैं चंद्रोदया आरौतें । जयांचे डोळे फुटती असते । ते काउळे केवीं चंद्रातें । वोळखती ॥ २४ ॥ तैसी वैराग्याची शिंव न देखती । जे विवेकाची भाषा नेणती । ते मूर्ख केवीं पावती । मज ईश्वरातें ॥ २५ ॥

कथं तु वृद्धिं गत एष मोहो
न शक्यते ज्ञातुमिदं रहस्यम् ।
कालोऽखिलस्तेन तु निष्फलोऽभू-
दस्तं गतोऽयं भुवि कर्मयोगः ॥ २६ ॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।

भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

स एवायं मया तुभ्यं पृथासूनो निवेदितः ।
तदत्र विषये शङ्कां न कांचित्कर्तुमर्हसि ॥ २७ ॥
रहस्यं काममेतन्मे साक्षात् प्राणसमं मतम् ।
त्वं तु प्रेयानिति त्वत्तः कथं शक्नोमि गूहितुम् ॥ २८ ॥
पार्थ स्नेहस्य मूर्तिस्त्वं भक्त्या जीवोऽसि केवलम् ।
चित्कलासि सखित्वस्य तत्त्वतस्त्वं धनुर्धर ॥ २९ ॥
विश्वासप्रतिपन्नस्त्वं योऽसि मे प्रणयास्पदम् ।
तं त्वां वञ्चयितुं पार्थ संप्रवर्तेऽधुना कथम् ॥ ३० ॥
रणोद्यतैरपि त्यक्त्वा संरम्भं क्षणमीदृशम्
अपनेतव्यमस्माभिरज्ञानं प्रथमं तव ॥ ३१ ॥

---

कैसा नेणों मोहो वाढीनला । तेणें बहुतेक काळु व्यर्थ गेला । म्हणोनि योगु हा लोपला । लोकीं इये ॥ २६ ॥ तोचि हा आजि आतां । तुजप्रती कुंतीसुता । सांगितला आम्हीं तत्त्वतां । भ्रांति न करीं ॥ २७ ॥ हें जीवींचें निज गुज । परी केवीं राखों तुज । जे पढियेसी तूं मज । म्हणऊनियां ॥२८॥ तूं प्रेमाचा पुतळा । भक्तीचा जिव्हाळा । मैत्रियेची चित्कळा । धनुर्धरा ॥ २९ ॥ तूं अनुसंगाचा ठावो । आतां तुज काय वंचूं जावों । जर्‍ही संग्रामारूढ आहों । जाहलों आम्हीं ॥ ३० ॥ तरी नावेक हें सहावें । गाजाबज्यही न धरावें । परी तुझें अज्ञानत्व हरावें । लागे आधीं ॥३१॥

अर्जुनउवाच—

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

तदार्जुनोऽब्रवीद्वाक्यं किमाश्चर्यं कृपानिधे ।
यदि माता निजेऽपत्ये वात्सल्यं तनुते महत् ॥ ३२ ॥
संसारतापतप्तानां छायासि त्वं जनार्दन ।
मातास्यनाथजीवानां जन्म नः कृपयैव ते ॥ ३३ ॥
शिशुं पङ्गुं प्रसूते या सोढव्यस्तत्कृते तया ।
जन्मनः प्रभृति क्लेश इति किं कथ्यमस्ति ते ॥ ३४ ॥
अवधेयं त्वया देव मया यत् पृच्छ्यसेऽधुना ।
न च मे पृच्छते भूयः कोपं त्वं कर्तुमर्हसि ॥ ३५ ॥
इदानीमेव या ख्याता त्वया पूर्वकथेति मे ।
सा क्षणं कुरुते चित्तं मदीयं शङ्कयान्वितम् ॥ ३६ ॥
विवस्वानिति योऽवर्णि त्वया तं गुरवोऽपि नः ।
नाविदुस्तत्कथं ब्रूहि सोऽनुशिष्टस्त्वयेति भोः ॥ ३७ ॥

---

तंव अर्जुन म्हणे श्रीहरी । माय आपुलेयाचा स्नेह करी । येथ विस्मयो काय अवधारीं । कृपानिधि ॥ ३२ ॥ तूं संसारश्रांतांची साउली । अनाथ जीवांची माउली । आमुतें कीर प्रसवली । तुझीच कृपा ॥ ३३ ॥ देवा पांगुळ एकादें विजे । तरी जन्मौनि जोजारु साहिजे । हें बोलों काय तुझें । तुजचि पुढां ॥ ३४ ॥ आतां पुसेन जें मी कांहीं । तेथ निकें चित्त देईं । तेवींचि देवें कोपावें ना कांहीं । बोल। एका ॥ ३५ ॥ तरी मागील जे वार्ता । तुवां सांगितली होती अनंता । ते नावेक मज चित्ता । मानेचि ना ॥ ३६ ॥ जे तो विवस्वतु म्हणजे कायी । ऐसें हें वडिलांही ठाउवें नाहीं । तरी तुवांचि केवीं । उपदेशिला ॥ ३७ ॥

सोऽतिप्राचीन आकर्णि कृष्णेदानींतनो भवान् ।
असंगतमिवाभाति तत्त्वया यदुदीरितम् ॥ ३८ ॥
न तु ते चरितं देव गूढं ज्ञातुं वयं क्षमाः ।
त्वदुक्तं सहसार्लीकमिति वाच्यं कथं पुनः ॥ ३९ ॥
कथं रविस्त्वया शिष्ट इति कथ्यं तथा त्वया ।
यथा शृण्वन् विजानीयां सम्यगेतन्महामते ॥ ४० ॥

श्रीभगवानुवाच—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥

आसीद्यदा विवस्वान् स तदाहं किल नाभवम् ।
इति भ्रान्त्या तवाकारि पदं चित्ते धनंजय ॥ ४१ ॥
इदं पुनर्न जानासि यज्जन्मानि बहूनि मे ।
तव चापि व्यतीतानि स्मरसि स्वानि नैव तु ॥ ४२ ॥
तदा तदा गृहीतानि मया जन्मानि यानि तु ।
तान्यहं सकलान्येव संस्मरामि धनुर्धर ॥ ४३ ॥

---

तो तरी आइकिजे बहुतां काळांचा । आणि तूं तंव श्रीकृष्ण सांपेचा । म्हणोनि गा इये मातूचा । विसंवादु ॥ ३८ ॥ तेवींचि देवा चरित्र तुझें । आपण कांहींचि नेणिजे । हें लटिकें केवीं म्हणिजे । एकिहेळां ॥ ३९ ॥ परी हेचि मातु आघवी । मी परियेसें ऐशी सांगावी । जे तुवांचि रवि केवीं । उपदेशु केला ॥ ४० ॥ तंव श्रीकृष्ण म्हणे पांडुसुता । तो विवस्वतु जैं होता । तैं आम्ही नसों ऐसी चित्ता । प्रतीति तुज ॥ ४१ ॥ तरी तूं गा हें नेणसी । पैं जन्में आम्हां तुम्हांसी । बहुतें गेलीं परी न स्मरसी । आपुलीं तूं ॥ ४२ ॥ मी जेणें जेणें अवसरें । जें जें होऊनि अवतरें । तें समस्तही स्मरें । धनुर्धरा ॥ ४३ ॥

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥

अतोऽतीतमिदं सर्वं स्मृत्युपस्थितमस्ति मे ।
अजोऽपि सन् स्वयं पार्थ संभवामि स्वमायया ॥ ४४ ॥
न नश्यत्यव्ययत्वं मे जन्ममृत्यू तु यौ मम ।
तावेतौ मयि भासेते मायायोगेन केवलम् ॥ ४५ ॥
अभग्नेऽपि स्वतन्त्रत्वे यत्कर्माधीनता मम ।
दृश्यते सा भ्रान्तिरेव वस्तुतस्तु न तत्तथा ॥ ४६ ॥
दर्पणाधारतो भाति वस्त्वेकमपि वा द्विधा ।
तत्त्वतस्तु द्विरूपत्वं न संभवति वस्तुनः ॥ ४७ ॥
एवं स्वयं निराकारोऽप्यहं मायां समाश्रितः ।
पार्थ कार्यविशेषार्थं नटः साकारतां भजे ॥ ४८ ॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ ७ ॥

धर्मजातं हि यत्सर्वं तन्मे रक्ष्यं युगे युगे ।
इत्यादितः प्रवृत्तोऽयं स्वभावात् क्रम ईदृशः ॥ ४९ ॥

---

म्हणोनि हें आघवें । मागील मज आठवे । मी अजुही परि संभवें । प्रकृतियोगें ॥ ४४ ॥ माझें अव्ययत्व तरी न नसे । परी होणेंजाणें एक दिसे । तें प्रतिबिंबे मायावशें । माझ्याचि ठायीं ॥ ४५ ॥ माझी स्वतंत्रता तरी न मोडे । परी कर्माधीनु ऐसा आवडें । तेंही भ्रांतिबुद्धि तरी घडे । एऱ्हवीं नाहीं ॥ ४६ ॥ जें एकचि दिसे दुसरें । तें दर्पणाचेनि आधारें । एऱ्हवीं काय वस्तुविचारें । दुजें आहे ॥ ४७ ॥ तैसा अमूर्तचि मी किरीटी । परी प्रकृति जैं अधिष्ठीं । तैं साकारपणें नटीं । कार्यालागीं ॥ ४८ ॥ जें धर्मजात आघवें । युगायुगीं म्यां रक्षावें । ऐसा ओघु हा स्वभावें । आद्यु असे ॥ ४९ ॥

अधर्मेण यदानेन धर्मोऽयमभिभूयते।
तदाजत्वं निरस्यामि नाव्यक्तत्वं स्मरामि च ॥ ५० ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥

अथ साकारतां बिभ्रद्भक्तानामनुकम्पया।
अवतीर्यापनेष्यामि भुव्यज्ञानमयं तमः ॥ ५१ ॥
अधर्मस्य गतिं रुन्धे दोषान्निष्कासयेऽखिलान्।
सज्जनान् यत्नतः कुर्वे समुच्छ्रितसुखध्वजान् ॥ ५२ ॥
कुर्वे दैत्यकुलध्वंसं साधून्मानेन योजये।
धर्मस्य चापि नीतेश्च संगमं घटयामि च ॥ ५३ ॥
अविर्मलं रूढतरं निरस्य
विवेकदीपं ज्वलयामि यत्नात्।
निरन्तरं तेन तदा तनोमि
योगस्थितानां नयनोत्सवं च ॥ ५४ ॥
विश्वं सर्वं व्याप्यते सत्सुखेन
सर्वत्रेहाचर्यते धर्म एव।
संजायन्ते सत्त्वसंपत्तियोगात्
सर्वे भक्तास्तुन्दिला भोस्तदानीम् ॥ ५५ ॥

---

म्हणोनि अजत्व परतें ठेवीं । मी अव्यक्तपणही नाठवीं । जे वेळीं धर्मातें अभिभवी । अधर्मु हा ॥ ५० ॥ ते वेळीं आपुल्याचेनि कैवारें । मी साकारु होऊनि अवतरें । मग अज्ञानाचें आंधारें । गिळूनि घालीं ॥ ५१ ॥ अधर्माची अवधि तोडीं । दोषांची लिहिलीं फेडीं । सज्जनांकरवीं गुढी । उभवीं मी ॥ ५२ ॥ दैत्यांचीं कुळें नाशीं । साधूंचा मानु गिंवशीं । धर्मासी नीतीशीं । शेस भरीं ॥ ५३ ॥ मी अविवेकाची काजळी । फेडूनि विवेकदीप उजळीं । तैं योगियां पाहे दिवाळी । निरंतर ॥ ५४ ॥ सत्सुखें विश्व कोंदे । धर्मचि जगीं नांदे । भक्तां निघती दोंदें । सात्त्विकाचीं ॥५५॥

यदा यदाहं प्रकटीभवामि
वपुर्धरः सन्निह पाण्डुपुत्र ।
पापस्य शैला गुरवः पतन्ति
पुण्यप्रकर्षः समुदेति भूयः ॥ ५६ ॥
कार्यस्य हेतोरहमीदृशस्य ।
युगे युगे पार्थ जनिं प्रपद्ये ।
तत्त्वं तु जानाति य एतदेव
लोके स गण्यः सुतरां विवेकी ॥ ५७ ॥

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

अजत्वं गृह्णतो जन्म कर्मकर्तुरकर्तृताम् ।
योऽविकारतया वेत्ति स मुक्तः परमो मतः ॥ ५८ ॥
व्यवहारान् करोत्येव तत्रानासक्त एव सः ।
वशवर्ती न देहस्य देहं बिभ्रदपि स्वयम् ।
ममैव लीयते रूपे किं च मृत्योरनन्तरम् ॥ ५९ ॥

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥

---

तैं पापांचा अचळु फिटे । पुण्याची पहांट फुटे । जैं मूर्ति माझी प्रगटे । पांडुकुमरा ॥ ५६ ॥ ऐसेया काजालागीं । अवतरें मी युगीं युगीं । परी हेंचि वोळखे जो जगीं । तो विवेकिया ॥ ५७ ॥ माझें अजत्वें जन्मणें । अक्रियताचि कर्म करणें । हें अविकार जो जाणे । तो परममुक्त ॥ ५८ ॥ तो चालिला संगें न चळे । देहींचा देहा नाकळे । मग पंचत्वीं तंव मिळे । माझ्याचि रूपीं ॥ ५९ ॥

परापरं न शोचन्ति सन्ति कामविवर्जिताः ।
न कदापि भवन्त्येव ये क्रोधस्य वशंवदाः ॥ ६० ॥

ये संपन्नाः सन्ति नित्यं मयैव
मत्सेवायै जीवितं धारयन्ति ।
तोषो येषामात्मबोधेन जातः
प्रीतिर्येषामिन्द्रियार्थेषु नष्टा ॥ ६१ ॥

ये तपस्तेजसां पुञ्जा ज्ञानस्यैकनिकेतनम् ।
ये पुनन्त्येव तीर्थानि बिभ्रतस्तीर्थरूपताम् ॥ ६२ ॥
मद्भावं सुखमायान्ति मद्रूपाश्च भवन्ति ते ।
तेषां हि मम चाप्येव कश्चिद्भेदो न विद्यते ॥ ६३ ॥
पित्तलस्य कलङ्कश्चेत् कालिमा चापगच्छतः ।
तदा हेम्ना किमन्येन संप्राप्तेन प्रयोजनम् ॥ ६४ ॥
यमनियमरूपनिकषे परीक्षिता ये च शुद्धतां नीताः ।
ज्ञानतपोऽग्नौ जाता मद्रूपास्तेऽत्र संशयः कः स्यात् ॥६५॥

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥

---

एऱ्हवीं परापर न शोचिती । जे कामनाशून्य होती । वाटा कें वेळीं न वचती । क्रोधाचिया ॥ ६० ॥ सदा मियांचि आथिले । माझिया सेवा जियाले । कीं आत्मबोधें तोषले । वीतराग जे ॥ ६१ ॥ जे तपोतेजाचिया राशी । कीं एकायतन ज्ञानाधी । जे पवित्रता तीर्थांसी । तीर्थरूप ॥ ६२॥ ते मद्भावा सहजें आले । मी तेचि ते होऊनि ठेले । जे मज तयां उरले । पदर नाहीं ॥ ६३ ॥ सांगें पितळेची गंधिकाळिक । जैं फिटली होय निःशेख । तैं सुवर्ण काई आणिक । जोड़ूं जाइजे ॥ ६४ ॥ तैसे यमनियमीं कडसले । जे तपोज्ञानें चोखाळले । मी तेचि ते जाहले । एथ संशयो कायसा ॥ ६५ ॥

किं च पश्य कथं वर्ते पार्थाहं सर्वजन्तुषु ।
मयि येषां यथा भावस्तेषु मेऽपि तथैव भोः ॥ ६६ ॥

ननु पश्य मनुष्याणां सर्वेषां हि स्वभावतः ।
ममैव भजने नित्यं प्रवृत्तिर्दृश्यतेतराम् ॥ ६७ ॥

ज्ञानाभावेन तेषां तु बुद्धिभेदः प्रजायते ।
तेनैव मय्यनेकत्वमेकस्मिन्कल्पयन्ति ते ॥ ६८ ॥

पश्यन्त्य भेदमयि भेदमेव
नामानि कुर्वन्ति ममाप्यनाम्नः ।
देवं च देवीं च तथा वदान्ति
मां वाङ्मनःकायपथातिगं ते ॥ ६९ ॥

हा भेदबुद्धेर्वशमागतास्ते
संभ्रान्तचित्ताः स्ववमेव भूत्वा ।
सदैव सर्वत्र च यः समोऽस्तिः
तास्मिन् विविञ्चन्त्यधमोत्तमत्वम् ॥ ७० ॥

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥

---

एऱ्हवीं तरी पाहीं । जे जैसे माझ्या ठायीं । भजती तयां मीहि । तैसाचि भजें ॥ ६६ ॥ देखें मनुष्यजात सकळ । हें स्वभावतां भजनशीळ । जाहलें असे केवळ । माझ्याचि ठायीं ॥ ६७ ॥ परी ज्ञानेंवीण नाशिलें । जे बुद्धिभेदासि आले । तेणेंचि त्या कल्पिलें । अनेकत्व ॥ ६८ ॥ म्हणऊनि अभेदीं भेदु देखती । यया अनाम्या नामें ठेविती । देवी देवो म्हणती । अचर्चातें ॥ ६९ ॥ जें सर्वत्र सदा सम । तेथ विभाग अधमोत्तम । मतिवशें संभ्रम । विवंचिती ॥ ७० ॥

इष्टकामप्रसिद्ध्यर्थमभीष्टाः समुपासते ।
मदन्या देवतास्तास्ता उपचारैर्यथोचितैः ॥ ७१ ॥
इह यद्यदपेक्षन्ते तत्तदश्नुवतेऽखिलम् ।
तत्तु कर्मफलं विद्धि केवलं नात्र संशयः ॥ ७२ ॥
कर्मणोऽन्यो न दातास्ति नादातापि च कश्चन ।
कर्मैव फलदं लोके वस्तुन्यत्र विचारिते ॥ ७३ ॥
क्षेत्रे यदुप्यते तस्मान्नान्यत्तत्र प्ररोहति ।
दर्श्यते दर्पणाग्रे यत् तदेव प्रतिदृश्यते ॥ ७४ ॥
शैलपादतले शब्दः कृत एव यथात्मनः ।
उत्तिष्ठति निमित्तेन स्वयं भूत्वा प्रतिध्वनिः ॥ ७५ ॥
भजनानां समस्तानामहमेव तथार्जुन ।
आधारोऽस्मि फलप्राप्तिर्भावनानुगुणैव तु ॥ ७६ ॥

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥

---

मग नानाहेतुप्रकारें । यथोचितें उपचारें । मानिलीं देवतांतरें । उपासिती ॥ ७१ ॥ तेथ जें जें अपेक्षित । तें तैसेंचि पावती समस्त । परी तें कर्मफळ निश्चित । वोळख तूं ॥ ७२ ॥ वांचूनि देतें घेतें आणिक । निभ्रांत नाहीं सम्यक । एथ कर्मचि फळसूचक । मनुष्यलोकीं ॥ ७३ ॥ जैसें क्षेत्रीं जें पेरिजे । तेंवांचूनि आन न निपजे । कां पाहिजे तेंचि देखिजे । दर्पणाधारें ॥ ७४ ॥ ना तरी कडेयातळवटीं । जैसा आपुलाचि बोलु किरीटी । पडिसादु होऊनि उठी । निमित्तयोगें ॥ ७५ ॥ तैसा समस्ता या भजना । मी साक्षिभूतु पैं अर्जुना । एथ प्रतिफळे भावना । आपुलाली ॥ ७६ ॥

एवमेव विजानीहि यद्वर्णांश्चतुरोऽप्यमून् ।
गुणकर्मविभागेन स्वयं निर्मितवानहम् ॥ ७७ ॥
मया प्रकृतिधर्माणां गुणानां चानुसारतः ।
चातुर्वर्ण्यस्य कर्माणि विविक्तानि पृथक् पृथक् ॥ ७८ ॥
एकत्वेऽपि मनुष्याणां चातुर्वर्ण्यव्यवस्थितिः ।
गुणकर्मविवेकेन स्वभावात्समपद्यत ॥ ७९ ॥
एवं निसर्गजन्याया आकर्णय धनंजय ।
वर्णभेदव्यवस्थाया नाहं कर्तास्मि सर्वथा ॥ ८० ॥

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ १४ ॥

मत्त एव व्यवस्थेयं जाता न तु मया कृता ।
इत्येतद्यो विजानाति स मुक्तः कर्मबन्धनात् ॥८१ ॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥

---

आतां याचिपरी जाण । हे चाऱ्ही वर्ण । सृजिले म्यां गुण–। कर्मविभागें ॥ ७७ ॥ जे प्रकृतीचेनि आधारें । गुणाचेनि व्यभिचारें । कर्में तदनुसारें । विभंचिलीं ॥ ७८ ॥ एथ एकचि हे मनुष्यपणी । परी जाहले गा चहूं वर्णीं । ऐसी गुणकर्मकडसणी । केली सहजें ॥ ७९ ॥ म्हणोनि आइकें पार्था । हे वर्णभेदसंस्था । मी कर्ता नव्हे सर्वथा । याचिलागीं ॥ ८० ॥ हें मजचिस्तव जाहलें । परी म्यां नाहीं केलें । ऐसें जेणें जाणितलें । तो सुटला गा ॥ ८१ ॥

मुमुक्षुभिः पुरा भूतैर्विज्ञायेदृशमेव माम् ।
अनुष्ठितानि कर्माणि समस्तानि धनुर्धर ॥ ८२ ॥
न तूप्तान्यपि रोहन्ति भृष्टबीजानि कर्हिचित् ।
कर्माण्यपि कृतान्येभिरगमन् मोक्षहेतुताम् ॥ ८३ ॥
अन्यच्च पश्य सज्ञानैरपि कर्तुं न युज्यते ।
कर्माकर्मविचारोऽयं बुद्ध्यैव निजयार्जुन ॥ ८४ ॥

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥

किमिदं कर्मसंज्ञं यल्लक्षणं किमकर्मणः ।
इति चिन्तयतां चित्तं संभ्रान्तं विदुषामपि ॥ ८५ ॥
यथा वा नाणकं कूटं सर्वथा सत्यसंनिभम् ।
कुरुते संशयारूढे तज्ज्ञानामपि लोचने ॥ ८६ ॥
मनसाप्यपरां सृष्टिं निर्मातुं ये तथा क्षमाः
कर्मपाशेन बध्यन्ते तेऽपि निष्कर्मताभ्रमात् ॥ ८७ ॥

---

मागील मुमुक्षु जे होते । तिहीं ऐसिया जाणोनि मातें । कर्मे केलीं समस्तें । धनुर्धरा ॥ ८२ ॥ परि तें बीजें जैसीं दग्धलीं । नुगवतीचि पेरिलीं । तैसीं कर्मेचि परि तयां जाहलीं । मोक्षहेतु ॥ ८३ ॥ एथ आणिकही एक अर्जुना । हे कर्माकर्मविवंचना । आपुलिये चाडे सज्ञाना । योगु नोहे ॥ ८४ ॥ कर्म म्हणिपे तें कवण । अथवा अकर्म काय लक्षण । ऐसें विचारितां विचक्षण । गुंफोनि ठेले ॥ ८५ ॥ जैसें कां कुडें नाणें । खऱ्याचेनि सारखेपणें । डोळ्याचेंहि देखणें । संशयीं घाली ॥ ८६ ॥ तैसें नैष्कर्म्यतेचेनि भ्रमें । गिंवसिजत आहाती कर्मे । जे दुजी सृष्टि मनोधर्मे । करूं सकती ॥ ८७ ॥

ज्ञानिनोऽप्यत्र मुह्यन्ति किमु मूढा धनंजय ।
कर्माकर्मविचारोऽतः कथ्यते तमिमं शृणु ॥ ८८ ॥

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥

सर्वं विश्वमिदं येन व्यक्तिमेति स्वभावतः ।
तत्कर्मेत्यवगन्तव्यं सम्यक् संचिन्त्यमादितः ॥ ८९ ॥
वर्णाश्रमोचितं कर्म विहितं यद्विशेषतः ।
ततस्तदप्यभिज्ञेयं सोपयोगं फलान्वितम् ॥ ९० ॥
यन्निषिद्धमिति प्रोक्तं बोध्यं तदपि तत्त्वतः ।
एवं हि बध्यते नैव कर्म कुर्वन्नपि स्वयम् ॥ ९१ ॥
गहना कर्मणो व्याप्तिस्तदधीनमिदं जगत् ।
अस्त्विदं श्रूयतां पार्थ कृतकृत्यस्य लक्षणम् ॥ ९२ ॥

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥

---

वांचूनि मूर्खांची गोठी कायसी । एथ मोहले गा क्रांतदर्शी । म्हणोनि आतां तेंचि परियेसीं । सांगेन तुज ॥ ८८ ॥ तरी कर्म म्हणिजे स्वभावें । जेणें विश्वाकारु संभवे । तें सम्यक् आधीं जाणावें । लागे एथ ॥ ८९ ॥ मग वर्णाश्रमासि उचित । जें विशेष कर्म विहित । तेंही वोळखावें निश्चित । उपयोगेंसीं ॥ ९० ॥ पाठीं जें निषिद्ध म्हणिपे । तेंही बुझावें स्वरूपें । येतुलेनि कांहीं न गुंफे । आपैसेंचि ॥ ९१ ॥ एऱ्हवीं जग हें कर्माधीन । ऐसी याची व्याप्ती गहन । परी तें असो आइकें चिन्ह । प्राप्तांचें गा ॥ ९२ ॥

यश्चरन् सर्वकर्माणि न चरामीति पश्यति ।
कर्मणां नापि सङ्गेन तत्फलाशां विभर्ति च ॥ ९३ ॥
इयतीं भूमिमारूढो यस्य निष्कर्मताग़ुणः ।
यत्कर्तव्यतया भाति तदन्यन्नास्य किंचन ॥ ९४ ॥
तथापि कर्मजातं यश्चरन् सम्यक् प्रदृश्यते ।
ज्ञानी स एव विज्ञेयो लक्षणैरेभिरर्जुन ॥ ९५ ॥
जलोपान्ते स्थितः कश्चित् पश्यन्नात्मानमम्भसि ।
ततो भिन्नोऽहमस्मीति यथा जानात्यसंशयम् ॥ ९६ ॥
नावा गच्छंस्तटस्थान्नु वृक्षान्पश्यति धावतः ।
स एव तत्त्वतः पश्यंस्तान् स्थिरानवगच्छति ॥ ९७ ॥
यः कर्माचरणं स्पष्टं मिथ्यैव मनुते चरन् ।
सर्वकर्मसु जानाति निष्कर्मत्वमथात्मनः ॥ ९८ ॥
उदेत्यस्तं च यातीति चलताऽचलतो रवेः ।
कुर्वतोऽपि तथा यस्याकर्तृत्वं कर्मणः स्थिरम् ॥ ९९ ॥

---

जो सकळकर्मी वर्ततां । देखे आपुली नैष्कर्म्यता । कर्मसंगे निराशता । फळाचिया ॥ ९३ ॥ आणि कर्तव्यतेलागीं । जया दुसरें नाहीं जगीं । ऐसिया नैष्कर्म्यता तरी चांगी । बोधला असे ॥ ९४ ॥ तरी क्रियाकलापु आघवा । आचरतु दिसे बरवा । जो तोचि तो ये चिन्हीं जाणावा । ज्ञानिया गा ॥ ९५ ॥ जैसा जो जळापाशीं उभा ठाके । तो जरी आपणपें जळामाजि देखे । तरी तो निभ्रांत वोळखे । म्हणे मी वेगळा आहें ॥ ९६ ॥ अथवा नावे एन जो रिगे । तो थडियेचे रुख जातां देखें वेगें । तेचि साचोकारें जों पाहों लागे । तंव रुख म्हणे अचळ ॥ ९७ ॥ तैसें सर्व कर्मी असणें । तें फुडें मानूनि वायाणें । मग आपणपां जो जाणे । नैष्कर्म्यु ऐसा ॥ ९८ ॥ आणि उदोअस्ताचेनि प्रमाणें । जैसें न चळतां सर्वाचें चालणें । तैसें नैष्कर्म्यत्व जाणे । कर्मीचि असतां ॥ ९९ ॥

स मनुष्य इवाभाति मनुष्यत्वं न तत्र तु ।
प्रतिबिम्बं जले भानोर्न पुनस्तत्र भानुता ॥ १०० ॥
सोऽपश्यन्नीक्षते विश्वमकुर्वन् कुरुतेऽखिलम् ।
भोग्यजातमभुञ्जानो भुङ्क्ते च ब्रह्मतां गतः ॥ १०१ ॥
एकस्थाने स्थितस्यास्य गतिः सर्वत्र विद्यते ।
अस्त्विदं स्वयमेवासौ विश्वभावं प्रपद्यते ॥ १०२ ॥

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥

यः पूरुषः कर्म चरन्न खिद्यते
न यस्य चित्ते कुरुते मनागपि ।
पदं फलेहा चरितेऽपि कर्मणि
ब्रह्मैव तं विद्धि परं नराकृति ॥ १०३ ॥
अहमेतत्करिष्यामि सिद्धिं नेष्याम्युरीकृतम् ।
इति संकल्पदोषोऽपि मनो यस्य न बाधते ॥ १०४ ॥
निर्दग्धानि ज्ञानवह्नेर्मुखेन
येनाशेषाण्येव कर्माणि पुंसा ।
अस्मिँल्लोके मानवत्वं प्रपन्नं
नूनं साक्षात्तं परब्रह्म विद्धि ॥ १०५ ॥

---

तो मनुष्याचारिखा तरी आवडे । परी मनुष्यत्व तया न घडे । जैसें जळाधारें न बुडे । भानुबिंब ॥ १०० ॥ तेणें न पाहतां विश्व देखिलें । न करितां सर्व केलें । न भोगितां भोगिलें । भोग्यजात ॥ १०१ ॥ एकेचि ठायीं बैसला । परि सर्वत्र तोचि गेला । हें असो विश्व जाहला । अंगेंचि तो ॥ १०२ ॥ जया पुरुषाच्या ठायीं । कर्माचा तरी खेदु नाहीं । परी फळापेक्षा कहीं । संचरेना ॥ १०३ ॥ आणि हें कर्म मी करीन । अथवा आदरिलें सिद्धी नेईन । येणें संकल्पेंही जयाचें मन । विटाळे ना ॥ १०४ ॥ ज्ञानाग्नीचेनि मुखें । जेणें जाळिलीं कर्में अशेखें । तो परमब्रह्मचि मनुष्यवेखें । वोळख तूं ॥ १०५ ॥

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २० ॥

शरीरे स उदासीनः फलभोगे स निःस्पृहः ।
नित्यमानन्दरूपः सन् रमते स तथा स्थितः ॥ १०६ ॥
संतोषरूपगर्भागारे भुञ्जान आत्मबोधाख्यम् ।
पक्वान्नं न कदापि प्रत्याचष्टे ब्रुवन्नलमलं सः ॥ १०७॥

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥
यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ २२ ॥

आशामहंतयोपेतां त्यक्त्वा भूतबलिं यथा ।
अधिकाधिकया प्रीत्या सेवते स महासुखम् ॥१०८॥
स लब्धावसरप्राप्तं याति तेनैव निर्वृतिम् ।
स्वीयोऽयं परकीयोऽयमिति भेदं न पश्यति ॥ १०९ ॥
स यत्पश्यति नेत्राभ्यां स्वयं संपद्यते हि तत् ।
यद्वा शृणोति कर्णाभ्यां तेन याति सरूपताम् ॥ ११० ॥

---

जो शरीरीं उदासु । फळभोगीं निरासु । नित्यता उल्हासु । होऊनि असे ॥ १० ६॥ जो संतोषाच्या गाभारां । आत्मबोधाचिया वोगरां । पुरे न म्हणेचि धनुर्धरा । आरोगितां ॥ १०७ ॥ कैसी अधिकाधिक आवडी । घेत महासुखाची गोडी । सांडोनियां अशा कुरोंडी । अहंभावेंसी ॥ १०८॥ म्हणोनि अवसरें जें जें पावे । तेणेंचि तो सुखावे । आपुलें आणि परावें । दोन्ही नाहीं ॥ १०९ ॥ तो दिठीं जें पाहे । तें आपणचि होऊनि जाये। आइके तें आहे । तोचि जाहला ॥ ११० ॥

चल्यते चरणाभ्यां यद् वदनेन यदुच्यते।
यद्यद्वा चेष्ट्यते तत्तत् स सर्वं जायते स्वयम् ॥ १११॥
अस्तित्वदं यस्य विश्वस्मिन् विद्यते नान्यदात्मनः।
स कथं कर्मणा केन कदाचिदपि बाध्यते ॥ ११२॥
जायते मत्सरो द्वैतात् तच्च व्यपगतं यतः।
स निर्मत्सर इत्येतन्निगाद्यं वचसा नु किम् ॥ ११३॥
अतः स सर्वथा मुक्तः सकर्मापि न कर्मकृत्।
सगुणोऽपि गुणातीत इत्यत्रार्थे न संशयः ॥ ११४॥

गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३॥

असौ देहधरः कामं भाति चैतन्यवत् पुनः।
ब्रह्मवच्छुभ्ररूपश्च दृश्यते सुपरीक्षितः ॥ ११५॥
यज्ञादीनि स कर्माणि कौतुकात्कुरुते यदि।
ईदृशोऽपि विलीयन्ते तस्मिन्नेवाखिलान्यपि ॥ ११६॥

---

चरणीं हन चाले। मुखें जें जें बोले। ऐसे चेष्टाजात तेतुलें। आपणाचि जो ॥ १११॥ हें असो विश्व पाहीं। जयासि आपणपेंवांचूनि नाहीं। आतां कवण तें कर्म कायी। बाधी तयातें ॥ ११२॥ हा मत्सरु जेथ उपजे। तेतुलें नुरेचि जया दुजें। तो निर्मत्सरु काई म्हणिजे। बोलवरी ॥ ११३॥ म्हणोनि सर्वोपरी मुक्तु। तो सकर्मुचि कर्मरहितु। सगुण परी गुणातीतु। एथ भ्रांति नाहीं ॥ ११४॥ तो देहसंगें तरी असे। परि चैतन्यासारिखा दिसे। पाहतां परब्रह्माचेनि कसें। चोखालु भला ॥ ११५॥ ऐसाही परी कौतुकें। जरी कर्में करी यज्ञादिकें। तरी तियें लया जाती निःशेखें। तयाच्याचि ठायीं ॥ ११६॥

अभ्राण्यकालेऽम्बर उन्नतानि
न तन्वतेऽल्पामपि वृष्टिमत्र ।
आत्मोदयेनैव तु तुल्यकालं
स्वयं नभस्येव लयं प्रयान्ति ॥ ११७ ॥

करोतु वेदैर्विहितानि नाम
कर्माणि सर्वाणि यथावदेव ।
सरूपतां बिभ्रति तानि तत्र
स्वयं सरूपाणि लयं प्रयान्ति ॥ ११८ ॥

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥

हवनाख्यमिदं कर्म कर्ताहं होतृसंज्ञकः ।
अत्राध्वरे च भोक्तायमितीयं नास्य भेदधीः ॥ ११९ ॥
हविर्मन्त्रादि यज्ञेषु यद्यादिष्टेषु विद्यते ।
सर्वं ब्रह्मस्वरूपं तद्-आत्मबुद्धिः स पश्यति ॥ १२० ॥
कर्म ब्रह्मैव मन्वानः समदृष्टिरतोऽर्जुन ।
कुर्वन् प्राप्तानि कर्माणि निष्कर्मैवेह गण्यते ॥ १२१ ॥

---

अकाळींचीं अभ्रें जैशीं । उर्मीवीण आकाशीं । हरपती आपैशीं । उदयलीं सातीं ॥ ११७ ॥ तैशीं विधिविधानें विहितें । जरी आचरे तो समस्तें । तरी तियें ऐक्यभावें ऐक्यातें । पावतीचि गा ॥ ११८ ॥ हें हवन मी होता । कां इये यज्ञीं हा भोक्ता । ऐसिया बुद्धीसि नाहीं भिन्नता । म्हणऊनियां ॥ ११९ ॥ जे इष्टयज्ञ यजावे । तें हविर्मंत्रादि आघवें । तो देखतसे अविनाशभावें । आत्मबुद्धि ॥ १२० ॥ म्हणऊनि ब्रह्म तेंचि कर्म । ऐसें बोधा आलें जया सम । तया कर्तव्य तें नैष्कर्म्य । धनुर्धरा ॥ १२१ ॥

अविवेककुमारत्वेऽतीते प्राप्ते विवेकतारुण्ये ।
परिणीय विरक्तिं यैर्योगहविर्भुज उपासनारब्धा ॥ १२२ ॥

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

गुरुवाक्यहुताशे यैरग्निहोत्रपरायणैः ।
अविद्या मनसा सार्धमात्मनः सकला हुता ॥ १२३ ॥
य आत्मसुखलाभाय जायते पाण्डुनन्दन ।
इज्यते यत्र योगाग्नौ दैवयज्ञं ब्रुवन्ति तम् ॥१२४॥
दैवाद्देहस्य रक्षेति मतिर्येषां सुनिश्चिता ।
न चास्य भरणे चिन्तां ते विभ्रति मनागपि ।
दैवयज्ञवशाद्विद्धि तान्महायोगितां गतान् ॥ १२५ ॥
इदानीं कथयाम्यन्यान् साग्निकांस्ते धनंजय ।
यज्ञमात्रेण ये यज्ञं ब्रह्माग्नावुपजुह्वति ॥ १२६ ॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥

---

आतां अविवेककुमारत्वा मुकले । जयां विरक्तीचें पाणिग्रहण जाहलें । मग उपासन जिहीं आणिलें । योगाग्नीचें ॥ १२२ ॥ जे यजनशील अहर्निशीं । जिहीं अविद्या हविली मनेंशीं । गुरुवाक्यहुताशीं । हवन केलें ॥ १२३ ॥ तिहीं योगाग्निकीं यजिजे । तो दैवयज्ञु म्हणिजे । जेणें आत्मसुख कामिजे । पांडुकुमरा ॥ १२४ ॥ दैवास्तव देहाचें पाळण । ऐसा निश्चयो परिपूर्ण । जो चिंतीना देहभरण । तो महायोगी जाण । दैवयोगें ॥ १२५ ॥ आतां अवधारीं सांगेन आणिक । जे ब्रह्माग्नी साग्निक । तयां तें यज्ञेंचि यज्ञु देख । उपासिजे ॥ १२६ ॥

इन्द्रियाख्यैर्हविर्द्रव्यैः पवित्रैरुपजुह्वति।
मूलबन्धादिकैर्मन्त्रैः संयमाग्निं त्रिभिः परे ॥ १२७ ॥
वैराग्यभानावुदयं प्रयाते
विवृण्वते संयमहोमकुण्डम्।
तस्मिंस्ततश्चेन्द्रियरूपमाग्निं
प्रयत्नतः प्रज्वलयन्ति केचित् ॥ १२८ ॥
ज्वाला विरक्तिरूपाथ तस्मादग्नेः प्रजायते।
चेतितानि भवन्त्येव षड्विकारेन्धनानि च।
पञ्चधीन्द्रियकुण्डेभ्य आशाधूमोऽपगच्छति ॥ १२९ ॥
ततो जुह्वति वेदोक्तविधिना विषयाहुतीः।
होमकुण्डे बहुप्राज्या ज्वलितेन्द्रियपावके॥ १३० ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

सर्वथा क्षालयन्त्येके स्वान्दोषानेवमर्जुन।
अरणिं हृदयं मन्थं विवेकं कुर्वतेऽपरे ॥ १३१ ॥
शान्तिरज्वा निबध्यैनं धैर्यभारनिपीडितम्।
गुरुवाक्यबलेनैते समाकर्षन्ति यत्नतः ॥ १३२ ॥

---

एक संयमाग्निहोत्री। ते युक्तित्रयाच्या मंत्रीं। यजन करिती पवित्रीं। इंद्रियद्रव्यीं ॥ १२७ ॥ एकां वैराग्यरवि विवळे। तंव संयति विहार केले। तेथ अपावृत्त जाहले। इंद्रियानळ ॥ १२८ ॥ तिहीं विरक्तीचि ज्वाळा घेतली। तंव विकारांचीं इंधनें पळिपलीं। तेथ आशाधूमें सांडिलीं। पांचही कुंडें ॥ १२९ ॥ मग वाक्यविधीचिया निरवडी। विषय—आहुती उदंडीं। हवन केलें कुंडीं। इंद्रियाग्नीच्या ॥ १३० ॥ एकीं ययापरी पार्था। दोषु क्षाळिले सर्वथा। आणिकीं हृदयारणी मंथा। विवेकु केला ॥ १३१ ॥ तो उपशमें निहटिला। धैर्यें वरी दाटिला। गुरुवाक्यें काढिला बळकटपणें ॥ १३२ ॥

एवं समरसत्वेन मथ्नतां सिद्धिरीदृशी ।
जायते सत्वरं पार्थ यज्ज्ञानाग्निः प्रदीप्यते ॥ १३३ ॥
ऋद्धिसिद्धिविमोहाख्यो धूमः पूर्वं विनश्यति ।
तत उत्पद्यते सूक्ष्मः स्फुलिङ्गो ज्ञानवह्निजः ॥ १३४ ॥
यमैश्च नियमैश्चापि शुष्कपूर्वं मनोऽमलम् ।
ज्वलिष्यतश्च तस्याग्नेरिन्धनत्वाय कल्पते ॥ १३५ ॥
ज्वालास्तेन समेधन्ते ततस्तत्रोपजुह्वति ।
वासनासामिधस्तास्ताः स्नेहाज्येन समन्विताः ॥ १३६ ॥
तस्मिञ्ज्ञानानले दीप्ते हूयन्ते तदनन्तरम् ।
सर्वाणीन्द्रियकर्माणि सोऽहंमन्त्रेण दीक्षितैः ॥ १३७ ॥

प्राणक्रियाख्यस्रुवयोपहृत्य
पूर्णाहुतिं तत्र तदा हुताशे ।
प्राप्तं विनायासमथाध्वरान्ते
ऐक्यावबोधावभृथं भजन्ते ॥ १३८ ॥

---

ऐसें समरसें मंथन केलें । तेथ झडकरी काजा आलें । जे उज्जीवन जहालें । ज्ञानाग्नीचें ॥ १३३ ॥ पहिला ऋद्धिसिद्धीचा संभ्रमु । तो निवर्तोनि गेला धूमु । मग प्रगटला सूक्ष्मु । विस्फुलिंगु ॥ १३४ ॥ तया मनाचें मोकळें । तेंचि पेटवण घातलें । जें यमनियमीं हळुवारलें । आइतें होतें ॥ १३५ ॥ तेणें सादुकपणें ज्वाला समृद्धा । मग वासनांतराचिया समिधा स्नेहेंसीं नानाविधा । जाळिलिया ॥ १३६ ॥ तेथ सोऽहंमंत्रें दीक्षितीं । इंद्रियकर्मांचिया आहुती । तिये ज्ञानानळीं प्रदीप्तीं । दिधलिया ॥ १३७ ॥ पाठीं प्राणक्रियेचिये स्रुवेनिशी । पूर्णाहुती पडलिया हुताशीं । तेथ अवभृथ समरसीं । सहजें जहालें ॥ १३८ ॥

आत्मबोधसुखं यच्च हुताशिष्टं वितिष्ठते ।
संयमाग्नेः पुरोडाशं तमेवावेत्य गृह्यते ॥ १३९ ॥
यजनैरीदृशैर्नैके त्रिलोक्यां मुक्तिमाप्नुवन् ।
यज्ञक्रियासु भिन्नासु यत्प्राप्यमेकमेव तत् ॥ १४० ॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥

केचिदेतेषु यज्ञेषु द्रव्ययज्ञाः प्रकीर्तिताः ।
कांश्चिदाहुस्तपोयज्ञान् योगयज्ञांश्च कांश्चन ॥ १४१ ॥
यस्मिन् शब्दैरिज्यते शब्द एव
तं वाग्यज्ञं पण्डिता व्याहरन्ति ।
ज्ञानेनैव ज्ञायते ब्रह्म यस्मिन्
ज्ञेयं मुख्यं ज्ञानयज्ञं तमाहुः ॥ १४२ ॥
कष्टप्रदा अमी यज्ञाः सर्व एव सुदुष्कराः ।
जितेन्द्रियैस्त्वनुष्ठेयाः केवलं योग्यतावशात् ॥ १४३ ॥
तत्रार्थे सुप्रवीणास्ते योगसंपत्तिशालिनः ।
जीवबुद्धिमतश्चात्मस्वरूप उपजुह्वति ॥ १४४ ॥

---

मग आत्मबोधींचें सुख । जें संयमाग्नीचें हुतशेख । तोचि पुरोडाश देख । घेतला तिहीं ॥ १३९ ॥ एक ऐशिया इहीं यजनीं । मुक्त जाले गा त्रिभुवनीं । या यज्ञक्रिया तरी आनानी । परि प्राप्य तें एक ॥ १४० ॥ एक द्रव्ययज्ञु म्हणिपती । एक तपसामग्रिया निपजविती । एक योगयागुही आहाती । जे सांगितले ॥ १४१ ॥ एकीं शब्दीं शब्दु यजिजे । तो वाग्यज्ञु म्हणिजे । ज्ञानें ज्ञेय गमिजे । तो ज्ञानयज्ञु ॥ १४२ ॥ हे अर्जुना सकळ कुवाडें । जें अनुष्ठितां अति सांकडें । परी जितेंद्रियासीचि घडे । योग्यतावशें ॥ १४३ ॥ ते प्रवीण तेथ भले । आणि योगसमृद्धि आथिले । म्हणोनि आपणयां तिहीं केलें । आत्महवन ॥ १४४ ॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥

अपानाग्नेर्मुखे द्रव्यं जुह्वति प्राणसंज्ञकम् ।
केचिदभ्यासयोगेन ननु पार्थावलोकय ॥ १४५ ॥
एकेऽपानं प्राणसंज्ञेऽर्पयन्ति
वायुं वायौ योगसामर्थ्यभाजः ।
वायू एतौ द्वौ निरुन्धन्त्यथैके
पार्थ प्राणायामिनस्तान्वदन्ति ॥ १४६ ॥

अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥

वज्रयोगक्रमेणैके सर्वाहारनियन्त्रिणः ।
संभ्रमाज्जुह्वति प्राणान् प्राणरूपे हुताशने ॥ १४७ ॥
यज्ञशीला अमी सर्वे सन्ति मोक्षाभिलाषुकाः ।
तांस्तान्यज्ञान्वितन्वानैः क्षाल्यते यैर्मनोमलः ॥ १४८ ॥
अज्ञाने सकले दग्धे शुद्धं ब्रह्मावशिष्यते ।
यत्र भेदो न वह्नेश्च होतुश्चापि मनागपि ॥ १४९ ॥

---

मग अपानाग्नीचे मुखीं । प्राणद्रव्यें देखीं । हवन केलें एकीं । अभ्यास योगें ॥ एक अपानु प्राणीं अर्पिती । एक दोहींतेंही निरुंधिती । ते प्राणायामी म्हणिपती । पंडुकुमरा ॥ १४६ ॥ एक वज्रयोगक्रमें । सर्वाहारसंयमें प्राणीं प्राणु संभ्रमें । हवन करिती ॥ १४७ ॥ ऐसे मोक्षकाम सकळ । समस्त हे यजनशीळ । जिहीं यज्ञद्वारा मनोमळ । क्षाळण केले ॥ १४८ ॥ जया अविद्याजात जाळितां । जें उरलें निजस्वभावता । जेथ अग्नि आणि होता । उरेचिना ॥ १४९ ॥

पूर्णकामतया यष्टुर्यत्र यज्ञः समाप्यते ।
ततोऽन्ते सर्वकर्माणि विरमान्ति स्वभावतः ॥ १५० ॥
विचारो विरतो यत्र यत्र तर्कस्य नो गतिः ।
द्वैतदोषस्य सङ्गेन यन्न जात्वपि लिप्यते ॥ १५१ ॥

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥

ज्ञानं शुद्धानादिसिद्धं यज्ञशेषं यदीदृशम् ।
अहं ब्रह्मेति मन्त्रेण ब्रह्मनिष्ठैर्निषेव्यते ॥ १५२ ॥
शेषामृतेन तृप्यन्ति गच्छत्यमरतां तथा ।
संपद्यन्ते विनायासमतो ब्रह्मैव ते स्वयम् ॥ १५३ ॥
ये न जन्म प्रपद्येह संयमाग्निमुपासते ।
योगयागं न कुर्वन्ति विरक्तिर्वृणुते न तान् ॥ १५४ ॥
येषां न विद्यते पार्थ शोभना गतिरैहिकी ।
तेषां परत्र का वार्ता न मां तत् प्रष्टुमर्हसि ।
अतः कथापि नो कार्या तद्गता काचन त्वया ॥ १५५ ॥

---

जेथ यजितयाचा कामु पुरे । यज्ञींचें विधान सरे । मागुतें जेथूनि वोसरे । क्रिया जात ॥ १५० ॥ विचार जेथ न रिगे । हेतु जेथ न निगे। जें द्वैतदोषसंगें । लिंपेचि ना ॥ १५१ ॥ ऐसें अनादिसिद्ध चोरवट । जें ज्ञान यज्ञावशिष्ट । तें सेविती ब्रह्मनिष्ठ । ब्रह्माहं मंत्रें ॥ १५२ ॥ ऐसे शेषामृतें धाले। कीं अमर्त्यभावा आले । म्हणोनि ब्रह्म ते जहाले । अनायासें ॥ १५३ ॥ येरां विरक्ति माळ न घालिचि । जयां संयमाग्नीची सेवा न घडेचि । जे जे योगुयोगु न करितीचि जन्मले ग्रांते ॥ १५४ ॥ जयां ऐहिक धड नाहीं । तयांचें परत्र पुससी काई । म्हणोनि असो हे गोठी पाहीं । पंडुकुमरा ॥ १५५ ॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥

एवं नैकविधा यागा ये तुभ्यं कथिता मया ।
समीचीनतया वेदे वर्णितास्ते सविस्तरम् ॥ १५६ ॥
विस्तरेण तु किं कार्यं कर्मसिद्धानवेह्यमून् ।
इयतापि लयं यायात्कर्मबन्धः स्वभावतः ॥ १५७ ॥

श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥

वेदो येषां मूलं यत्र समृद्धिः क्रियाविशेषाणाम् ।
येषां च फलमपूर्वं स्वर्गसुखप्राप्तिरेवोक्ता ॥ १५८ ॥
युक्ता द्रव्यादियागास्ते ज्ञानयज्ञकलामपि ।
नाप्नुवन्ति यथा तारा कलां भास्करतेजसः ॥ १५९
परमात्मसुखं नाम निधानं द्रष्टुमिच्छता ।
योगिसङ्घेन यन्नेत्राञ्जनत्वेनोपयुज्यते ॥ १६० ॥
स्थानं परिसमाप्तेर्यत् क्रियामाणस्य कर्मणः ।
खनिर्नैष्कर्म्यबोधस्य यच्च तृप्तिं प्रयच्छति ।
आत्मतृप्तेः साधनानां तद्भोगोत्सुकचेतसाम् ॥ १६१ ॥

---

ऐसें बहुतीं परी अनेग । जे सांगितला तुज कां याग । विस्तारूनि वेदें चांग । म्हणितले आहाती ॥ १५६ ॥ परी तेणें विस्तारें काय करावें । हेंचि कर्मसिद्ध जाणावें । येतुलेनि कर्मबंधु स्वभावें । पावेल ना ॥ १५७ ॥ अर्जुना वेद जयांचें मूळ । जे क्रियाविशेष स्थूळ । जया नव्हाळियेचें फळ । स्वर्गसुख ॥ १५८ ॥ ते द्रव्यादियागु कीर होती । परी ज्ञानयज्ञाची सरी न पवती । जैशी तारातेजसंपत्ती । दिनकरापाशीं ॥ १५९ ॥ देखें परमात्मसुखनिधान । साधावया योगी जन । जें न विसंबिती अंजन । उन्मेषनेत्रीं ॥ १६० ॥ जें धांवतया कर्माची लाणी । नैष्कर्म्यबोधाची खाणी । जें भुकेलिया धणी । साधनाची ॥ १६१ ॥

प्रवृत्तिः पङ्गुतां याति दृष्टिस्तर्कस्य नश्यति।
यद्वशाद्विषयासक्तिं विस्मरन्तीन्द्रियाणि च ॥ १६२ ॥
मनस्त्वं मनसो याति वाचो वाक्त्वं प्रशाम्यति।
अन्तः स्थितं परं ब्रह्म ज्ञेयं यत्रोपलभ्यते ॥ १६३ ॥
समृद्धं यत्र वैराग्यं विवेकः सुसमाहितः।
यत्र चात्मस्वरूपस्य विनायासेन दर्शनम् ॥ १६४ ॥

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥

तदीदृशं वरं ज्ञानमधिगन्तुं यदीहसे ।
सन्तोऽमी समुपास्यास्ते सर्वथैव तदार्जुन ॥ १६५ ॥
सज्जनज्ञानगेहस्य शुश्रूषा नाम देहली ।
आत्मसात्करणीया ते सेवाध्यासनपूर्वकम् ॥ १६६ ॥
तस्माद्वपुर्मनोजीवैर्वन्द्यौ ते चरणौ सताम् ।
दास्यं चैषां विधातव्यं गर्वहीनेन चेतसा ॥ १६७ ॥

---

जेथ प्रवृत्ति पांगुळ जाहली । तर्काची दिठी गेली । जेणें इंद्रियें विसरलीं । विषयसंगु ॥ १६२ ॥ मनाचें मनपण गेलें । जेथ बोलाचें बोलपण ठेलें । जयामाजीं सांपडलें । ज्ञेय दिसे ॥ १६३ ॥ जेथ वैराग्याचा पांगु फिटे । विवकाचाही सोसु तुटे । जेथ न पाहतां सहज भेटे । आपण पें ॥ १६४ ॥ तें ज्ञान पै बरवें । जरी मनीं आथि आणावें । तरी संतां यां भजावें । सर्वस्वेंशीं ॥ १६५ ॥ जे ज्ञानाचा कुरुटा । तेथ सेवा हा दारिवंठा । तो स्वाधीन करीं सुभटा । बोळगोनी ॥१६६॥ तरी तनुमनजीवें । चरणासीं लागावें । आणि अगर्वता करावें । दास्य सकळ ॥१६७॥

परिपृष्टास्ततः सन्तो ब्रुवन्ति यदपेक्षितम् ।
बोधितं हृदयं चैव नैति संकल्पवश्यताम् ॥ १६८ ॥

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्षस्यात्मन्यथो मयि ॥ ३५ ॥

सतां वाक्यप्रकाशेन चित्तं निर्भयतां व्रजेत् ।
निःशङ्कत्वात्तथा चैव प्राप्नुयाद्ब्रह्मणस्तुलाम् ॥ १६९ ॥
तदा भूतान्यशेषाणि सहितान्यात्मनार्जुन ।
मत्स्वरूपे विलीनानि द्रक्ष्यसि त्वं निरन्तरम् ॥ १७० ॥
एवं ज्ञानप्रकाशस्ते श्रीगुरोः कृपयोदितः ।
मोहरूपं तमश्चित्ते स्थितं दूरीकरिष्यति ॥ १७१ ॥

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥

यद्यभूरेनसो वासो भ्रान्तेर्वा यदि सागरः ।
व्यामोहस्य गिरिर्वापि तदा का क्षतिरर्जुन ॥ १७२ ॥
ईदृक् ज्ञानस्य सामर्थ्यं विद्यते ह्युत्तमोत्तमम् ।
यदस्य पुरतस्तुच्छमेतत्सकलमप्यहो ॥ १७३ ॥

---

मग अपेक्षित जें आपुलें । तेंही सांगती पुसिलें । जेणें अंतःकरण बोधलें । संकल्पा नये ॥ १६८ ॥ जयाचेनि वाक्यउजिवडें । जाहलें चित्त निघडें । ब्रह्माचेनि पाडें । निशंकु होय ॥ १६९ ॥ ते वेळीं आपणपेयां सहितें । इयें अशेषही भूतें । माझ्या स्वरूपीं अखंडितें । देखसी तूं ॥१७०॥ ऐसें ज्ञानप्रकाशें पाहेल । तैं मोहान्धकारु जाईल । जैं श्रीगुरुकृपा होईल । पार्था गा ॥ १७१ ॥ जरी कल्मषाचा आगरु । तूं भ्रांतीचा सागरु । व्यामोहाचा डोंगरु । होउनी असशी ॥ १७२ ॥ तऱ्ही ज्ञान शक्तीचेनि पाडें । हें आघवेंचि गा थोकडें । ऐसें सामर्थ्य असे चोखडें । ज्ञानीं इये ॥१७३॥

अमूर्तस्य प्रतिच्छाया या माया विश्वरूपिणी ।
तामपि स्वप्रकाशेन यत्साकल्यान्निरस्यति ॥ १७४ ॥
तस्य कोऽयं मनोदोषः पार्थ तत्कथयाप्यलम् ।
ज्ञानेन सदृशं किंचिद्गरीयो नैव विद्यते ॥ १७५ ॥

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥

त्रैलोक्यदाहजं धूमं सलीलं या निरस्यति ।
प्रलयोत्थितवात्यायास्तस्या अग्रे घनो नु कः ॥ १७६ ॥
प्रदीपितः समीरेण प्रज्वलत्युदकेऽपि यः ।
प्रलयाग्निः कथं वासौ तृणकाष्ठैः प्रशाम्यतु ॥ १७७ ॥

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥

अस्त्विदं घटते नैव विचारोऽप्यस्य नोचितः ।
ज्ञानतुल्यं पवित्रत्वे न किंचिदपि दृश्यते ॥ ॥ १७८ ॥
चैतन्यस्य तुला नास्ति ज्ञानस्यापि तथैव च ।
अनेन हि समं लोके विद्यतेऽन्यात्किमुत्तमम् ॥ १७९ ॥

---

देखें विश्वभ्रमा ऐसा । जो अमूर्ताचा कडवसा । तो जयाचिया प्रकाशा। पुरेचिना ॥ १७४ ॥ तया कायसे हे मनोमळू । हें बोलतां अति किडाळू। नाहीं येणें पाडें ढिसाळू । दुजें जागीं ॥ १७५ ॥ सांगें भुवनत्रयाची काजळी । जे गगनामाजि उधवली । तिये प्रळयींचे वाहटुळी । काय अभ्र पुरे ॥ १७६ ॥ कीं पवनाचेनि कोपें । पाणियेंचि जो पळिपे । तो प्रळयानळ दडपे । तृणकाष्ठें काई ॥ १७७ ॥ म्हणोनि असो हें न घडे । तें विचारितांचि असंगडे । पुढती ज्ञानाचेनि पाडें । पवित्र न दिसे ॥ १७८॥ एथ ज्ञान हें उत्तम होये । आणीकही एक तैसें कें आहे । जैसें चैतन्य कां नोहे । दुसरें गा ॥ १७९ ॥

यदि तेजोनिधेस्तेजः प्रतिबिम्बेऽपि दृश्यते ।
क्रोडीकर्तुं नभः कृत्स्नं यदि केनापि शक्यते ॥ १८० ॥

पृथुत्वे च गुरुत्वे च यदि पृथ्व्यास्तुला भवेत् ।
ज्ञानस्याप्युपमा पार्थ तदैवात्रोपलभ्यते ॥ १८१ ॥

अतो विचारितेऽर्थेऽस्मिन् भूयो भूयोऽप्यनेकधा ।
ज्ञानस्य ज्ञान एवास्ति पावित्र्यमिति निश्चितम् ॥ १८२ ॥

परिपृच्छति चेत्कश्चिदमृतं स्वादु कीदृशम् ।
तदामृतमिवेत्येव युज्यते गदितुं यथा ।
तथा ज्ञानं पवित्रत्वे ज्ञानेनैवोपमीयताम् ॥ १८३ ॥

किमतो भूयसोक्तेन कालक्षेपोऽस्तु मा वृथा ।
तदार्जुनोऽब्रवीत् कृष्ण यत्त्वमात्थ तथैव तत् ॥ १८४ ॥

तत्तु ज्ञानं कथं लभ्यमिति प्रश्नं चिकीर्षतः ।
श्रीकृष्णेनाथ पार्थस्य ज्ञातमेव मनोगतम् ॥ १८५ ॥

ज्ञाताशयोऽब्रवीत् कृष्णः किरीटिन् कथयेऽधुना ।
ज्ञानप्राप्तेरुपायं ते सावधानतया शृणु ॥ १८६ ॥

---

या महातेजाचेनि कसें । जरी चोखाळ प्रतिबिंब दिसे । कां गिंवसिलें गिंवसे । आकाश हें ॥ १८० ॥ नातरी पृथ्वीचेनि पाडें । कांटाळें जरी जोडे । तरीं उपमा ज्ञानीं घडे । पंडुकुमारा ॥ १८१ ॥ म्हणूनि बहुतीं परीं पाहतां । पुढतपुढती निर्धारितां । हे ज्ञानाची पवित्रता । ज्ञानींचि आथि ॥ १८२ ॥ जैसी अमृताची चवी निवडिजे । तरी अमृताचिसारिखी म्हाणिजे । तैसें ज्ञान हें उपमिजे । ज्ञानेंसींचि ॥ १८३ ॥ आतां यावरी जें बोलणें । तें वायांचि वेळु फेडणें । तंव साचचि हें पार्थु म्हणे । जें बोलत असा ॥ १८४ ॥ परी तेंचि ज्ञान केवीं जाणावें । ऐसें अर्जुनें जंव पुसावें । तंव तें मनोगत देवें । जाणितलें ॥ १८५ ॥ मग म्हणतसे किरीटी । आतां चित्त देईं इये गोठी । सांगेन ज्ञानाचिये भेटी । उपायो तुज ॥ १८६ ॥

श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥

संसेव्यात्मसुखास्वादं निर्विण्णो विषयेषु यः ।
यश्चेन्द्रियाणि वैरस्यान्न जातु बहु मन्यते ॥ १८७ ॥
यो हृते मनसःस्वेच्छां मनुते स्वकृतं न यः ।
प्रकृत्यानुष्ठितं कृत्यं श्रद्धायोगेन यः सुखी ॥ १८८ ॥
तमेव ज्ञानमायाति स्वयं तादृग्गवेषयत् ।
यत्र पूर्णतया शान्तिर्वासं गृह्णात्यचुम्बिता ॥ १८९ ॥
ज्ञाने हृदि स्थिरीभूते शान्तेरुद्भिद्यतेऽङ्कुरः ।
ततश्चात्मावबोधस्य बहुविस्तारशालिता ॥ १९० ॥
शान्तिरेव ततो नूनं दृश्यते सर्वतोदिशम् ।
द्रष्टुं पारोऽपरस्तस्या यत्नतोऽपि न पार्यते ॥ १९१ ॥
विस्तारो ज्ञानबीजस्य वर्ण्यमानोऽधिकाधिकम् ।
ईदृशोऽयमपारोऽस्ति तदलं कथयानया ॥ १९२ ॥

---

तरी आत्मसुखाचिया गोडिया । विटे जो कां सकळ विषयां । जयाच्या ठायीं इंद्रियां । मानु नाहीं ॥ १८७ ॥ जो मनासी चाड न सांगे । जो प्रकृतीचे केलें नेघे । जो श्रद्धेचेनि संभोगें । सुखिया जाहला ॥ १८८ ॥ तयातेंचि गिंवसित । ते ज्ञान पावे निश्चित । जयामाजि अचुंबित । शांति असे ॥ १८९ ॥ जें ज्ञान हृदयीं प्रतिष्ठे । आणि शांतीचा अंकुर फुटे । मग विस्तार बहु प्रकटे । आत्मबोधाचा ॥ १९० ॥ मग जेउती वास पाहिजे । तेउती शांतीचि देखिजे । तेथ अपारा पारु नेणिजे निर्धारितां ॥ १९१ ॥ ऐसा हा उत्तरोत्तरु । ज्ञानबीजाचा विस्तारु । सांगतां असे अपारु । परि असो आतां ॥ १९२ ॥

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥

ज्ञानेऽस्मिन्न रुचिर्यस्य कोऽर्थस्तेनात्र जीवता ।
जीवितान्मरणं श्रेयस्तस्येति प्रतिभाति मे ॥ १९३ ॥
जनहीनं यथा गेहं प्राणहीनं वपुर्यथा ।
जीवितं ज्ञानहीनं यत् तथा संमोहपूरितम् ॥ १९५ ॥
अनवाप्तवतो ज्ञानं तल्लिप्सा यदि केवलम् ।
तदापि तस्य तल्लाभे प्रत्याशा कापि विद्यते ॥ १९५ ॥
का वार्ता ज्ञानवत्त्वस्य ज्ञाने नास्थापि यस्य सः ।
पतितं संशयाग्नौ तं निश्चयेन विदांकुरु ॥ १९६ ॥
अमृतेऽप्यरुचिर्यस्य स्वभावाज्जायते तदा ।
उपस्थितस्तदा मृत्युर्नूनं तस्येति गण्यताम् ॥ १९७ ॥
सुखे वैषयिके यस्य रतिर्ज्ञाने त्वनादरः ।
स नूनं संशयग्रस्तो भ्रान्तिरत्र न काचन ॥ १९८ ॥

---

ऐकें जया प्राणियाच्या ठायीं । इया ज्ञानाची आवडी नाहीं । तयाचें जियालें म्हणों काई । वरी मरण चांग ॥ १९३ ॥ शून्य जैसें गृह । कां चैतन्येंवीण देह । तैसें जीवित तें संमोह । ज्ञानहीन ॥१९४॥ अथवा ज्ञान कीर आपु नोहे । परि ते चाड एकी जरी वाहे । तरी तेथ जिव्हाळा कांहीं आहे । प्राप्तीचा‍्प ॥ १९५ ॥ वांचूनि ज्ञानाची गोठी कायसी । परि ते आस्थाही न धरी मानसीं । तरी तो संशयरूप हुताशीं । पडिला जाण ॥ १९६ ॥ जे अमृतही परि नावडे । ऐसें सावियाचि आरोचकु जैं पडे । तैं मरण आलें असें फुडें । जाणोंये कीं ॥ १९७ ॥ तैसा विषयसुखें रंजे । जो ज्ञानेंसींचि माजे । तो संशयें अंगिकारिजे । एथ भ्रांति नाहीं ॥ १९८ ॥

संशये पतितश्चैवं यः स नाशमुपागतः ।
सुखं चास्तं गतं विद्धि तस्येह च परत्र च ॥ १९९ ॥
विषमज्वरदाहेन शरीरं यस्य दह्यते ।
नैव वेत्ति स शीतोष्णे, समे तस्याग्निचन्द्रिके ॥ २०० ॥
तद्वज्जानीते न हि संशयभूताभिपीडितस्वान्तः ।
अनुकूलं प्रतिकूलं सत्यमसत्यं हितं किमहितं किम् ॥२०१॥

निशा किमेषा दिवसः किमेष
नावैति जन्मान्ध इदं यथैव ।
तथैव शक्नोति न संशयात्मा
निर्णेतुमर्थं किमपीह लोके ॥ २०२ ॥

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ४१ ॥

नान्यद् घोरतरं पापं संशयाद्विद्यते ह्यतः ।
वागुरैषा विनाशाय प्राणिनां नु प्रसारिता ॥ २०३ ॥
अतस्ते संशयस्त्याज्यो जेय एकोऽयमादितः ।
ज्ञानाभावे वसत्येष नान्यत्र कुरुते पदम् ॥ २०४ ॥

---

मग संशयीं जरी पडिला । तरी निभ्रांत जाणें नासला । तो ऐहिक परत्रा मुकला सुखासि गा ॥ १९९ ॥ जया काळज्वरु आंगीं बाणे । तो शीतोष्णें जैशीं नेणें । आगी आणि चांदिणें । सरिसेंचि मानी ॥ २०० ॥ तैसें साच आणि लटिकें । विरुद्ध आणि निकें । संशयी तो नोळखे । हिताहित ॥ २०१ ॥ हा रात्रिदिवसु पाहीं । जैसा जात्यंधा ठाउवा नाहीं । तैसें संशयी असतां कांहीं । मना न ये ॥ २०२ ॥ म्हणऊनि संशयाहूनि थोर । आणिक नाहीं पाप घोर । हा विनाशाची वागुर । प्राणियासी ॥ १०३ ॥ येणें कारणें तुवां त्यजावा । आधीं हाचि एकु जिणावा । जो ज्ञानाचिया अभावा- । माजि असे ॥ २०४ ॥

अज्ञानतिमिराक्रान्ते चित्तेऽयं वर्धतेतराम् ।
सर्वथा रुध्यते मार्गः श्रद्धाया अत एव च ॥ २०५ ॥
न केवलमयं चित्तं व्याश्नुते धियमप्यहो ।
ततो लोकत्रयं भाति सकलं संशयात्मकम् ॥ २०६ ॥

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

एवं समेधमानोऽपि शक्यो वशयितुं खलु ।
संशयो ज्ञानखड्गेन वरेण करवर्तिना ॥ २०७ ॥
ज्ञानशस्त्रमिदं तीक्ष्णं समूलं विनिहन्ति तम् ।
विरोप्यते च तद्योगान्मनःक्षतमशेषतः ॥ २०८ ॥
एतस्मात्कारणात्पार्थ समस्तमपि संशयम् ।
हृदयस्थं निराकृत्योत्थातुं सत्वरमर्हसि ॥ २०९ ॥
एवं श्रीभगवान् कृष्णो ज्ञानदीपो दयानिधिः ।
सर्वज्ञानस्य जनकोऽब्रवीद्राजन्निशम्यताम् ॥ २१० ॥

---

जैं अज्ञानाचें गडद पडे । तैं हा बहुवस मनीं वाढे । म्हणोनि सर्वथा मागु मोडे । विश्वासाचा ॥२०५॥ हृदयीं हाचि न समाये । बुद्धीतें गिंवसूनि ठाये । तेथ संशयात्मक होये । लोकत्रय ॥ २०६ ॥ ऐसा जरी थोरावे । तरी उपायें एकें आंगवे । जरी हातीं होय बरवें । ज्ञानखड्ग ॥२०७ ॥ तरी तेणें ज्ञानशस्त्रें तिखटें । निखळु हा निवटे । मग निःशेष खता फिटे । मानसींचा ॥ २०८ ॥ याकारणें पार्था । उठीं वेगीं वरौता । नाशु करोनि हृदयस्था । संशयासी ॥ २०९ ॥ ऐसें सर्वज्ञानाचा बापु । जो श्रीकृष्णु ज्ञानदीपु । तो म्हणतसे सक्रुपु । ऐकें राया ॥ २१० ॥

पौर्वापर्यं विचार्यास्य वचसः कथमर्जुनः ।
करिष्यत्यग्रतः प्रश्नं सर्वथा समयोचितम् ॥ २११ ॥
सुसंगतिं कथायास्तामभिप्रायस्य संपदम् ।
रसानामुन्नतिं चापि वर्णयामि पुराग्रतः ॥ २१२ ॥
अष्टावपि रसास्तुच्छा यस्यौपम्येन भान्ति मे ।
सज्जनानां च सद्बुद्धेर्विश्रान्तिस्थानमेव यः ॥ २१३ ॥
स शान्तः प्रकटो यस्यां तां महाराष्ट्रभारतीम् ।
श्रुत्वा पाथोधिगम्भीरामर्थपूर्णां प्रतुष्यत ॥ २१४ ॥
सुष्टिमेयमिवाकारे भाति भास्करमण्डम् ।
प्रकाशेन तु लोकांस्त्रीनपि व्याप्यावविष्ठते ।
तदौपम्येन शब्दस्यानुभाव्या व्याप्तिरर्थतः ॥ २१५ ॥
कामान् सर्वान्सकामानां पूरयेत्कल्पपादपः ।
तथा कामप्रदेयं वाक्, भवतावाहिता अतः ॥ २१६ ॥
अतः किमधिकं कथ्यं सर्वज्ञा जानते स्वयम् ।
अभ्यर्थयेऽवधानं तु दीयमानं विशेषतः ॥ २१७ ॥

---

तंव या पूर्वापर बोलाचा । विचार करूनि कुमरु पंडूचा । कैसा प्रश्नु अवसरींचा । करिता होईल ॥ २११ ॥ ते कथेची संगति । भावाची संपत्ति । रसाची उन्नति । म्हाणिपेल पुढां ॥ २१२ ॥ जयाचिया बरवे-पणीं । कीजे आठां रसांची वोवाळणी । जो सज्जनाचिये आयणी । विसांवा जगीं ॥ २१३ ॥ तो शांतुचि अभिनवेल । ते परियसा मऱ्हाटे बोल । जे समुद्राहूनि खोल । अर्थभरित ॥ २१४ ॥ जैसें बिंब तरी बचकेंचि एवढें । परि प्रकाशासि त्रैलोक्य थोकडें । शब्दाची व्याप्ति तेणें पाडें । अनुभवावी ॥ २१५ ॥ नातरी कामितयाचिया इच्छा । फळे कल्पवृक्षु जैसा । बोलु व्यापकु तैसा । तरी अवधान द्यावें ॥ २१६ ॥ हें असो काय म्हणावें । सर्वज्ञु जाणती स्वभावें । तरी निकें चित्त द्यावें । हे विनंति माझी ॥ २१७ ॥

लावण्यादिगुणैर्युक्ता शोभते स्त्री पतिव्रता ।
ससाहित्या महाराष्ट्री तथा शान्तिरसान्विता ॥ २१८ ॥
औषधत्वेन चेल्लब्धा शर्करा मधुरा स्वयम् ।
परेण कुतुकेनैव किं न सेव्या मुहुर्मुहुः ॥ २१९ ॥

मन्दः सुगन्धो मलयानिलो यः
स चेत्सुधास्वादसमन्वितः स्यात् ।
तत्रापि चेत्पञ्चमनादसङ्गः
कदापि कुत्रापि च दैवयोगात् ॥ २२० ॥
स्पर्शेन सर्वाङ्गसुखं विदध्याद्
रसेन जिह्वां परितर्पयेत ।
घ्राणं सुगन्धेन तथा च कर्णौ
कुर्यात्प्रसन्नौ मधुरस्वरेण ॥ २२१ ॥
अस्याः कथायाः श्रवणं तथैव
द्विधा हितं श्रोतृजनस्य कुर्यात् ।
संतर्पणं स्याच्छ्रवसोः सलीलं
संसारदुःखं च लयं प्रयायात् ॥ २२२ ॥

---

जेथ साहित्य आणि शांति । हे रेखा दिसे बोलती । जैसी लावण्यगुणकुवळती । आणि पतिव्रता ॥ २१८ ॥ आधींचि साखर आवडे । आणि तेचि जरी ओखदीं जोडे । तरी सेवावी ना कां कोडें । नावानावा ॥ २१९ ॥ सहजें मलयानिळु मंदु सुगंधु । तया अमृताचा होय स्वादु । आणि तेथेंचि जोडे नादु । जरी दैवगत्या ॥ २२० ॥ तरी स्पर्शें सर्वांग निववी । स्वादें जिह्वेतें नाचवी । तेवींचि कानाकरवीं । म्हणवी बापु माझा ॥ २२१ ॥ तैसें कथेचें इये ऐकणें । एक श्रवणासी होय पारणें । आणि संसारदुःख मूळवणें । विकृतीविणें ॥ २२२ ॥

मन्त्रसाध्ये वधे शत्रोः किं वृथा खड्गधारणम् ।
शर्करादुग्धनेये को रोगे निम्बरसं पिबेत् ॥ २२३ ॥
विना मनोजयं लोके विनैवेन्द्रियपीडनम् ।
श्रवणेनैव शक्योऽस्ति लब्धुं मोक्षोऽत्र लीलया ॥ २२४ ॥
चेतसातः प्रसन्नेन सम्यक् शृणुत मानवाः ।
गीतार्थमिति दासोऽयं निवृत्तेरभिभाषते ॥ २२५ ॥

---

जरी मंत्रेंचि वैरी मरे । तरी वायां कां बांधावीं कटारें । रोग जाय दुधसाखरें । तरी निंब कां पियावा ॥ २२३ ॥ तैसा मनाचा मारु न करितां । आणि इंद्रियां दुःख न देतां । एथ मोक्षु असे आयता । श्रवणाचि माजि ॥ २२४ ॥ म्हणोनि आथिलिया आराणुका । गीतार्थ हा निका । ज्ञानदेवो म्हणे आइका । निवृत्तिदासु ॥ २२५ ॥

[ इति श्रीज्ञानेश्वर्याः संस्कृतानुवादे चतुर्थोऽध्यायः ]

# संस्कृतज्ञानेश्वरी

## पञ्चमोऽध्यायः

अर्जुन उवाच—

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥

अथ पार्थोऽब्रवीत् कृष्णं कथमीदृक्त्वयोच्यते ।
एकं चेन्निश्चितं ब्रूयाः शक्यं स्यात्तद्विमर्शनम् ॥ १ ॥
विविधं विवृतः पूर्वं संन्यासः सर्वकर्मणाम् ।
त्वयैव कथमेतर्हि रसः कर्मसु शस्यते ॥ २ ॥
एवं द्व्यर्थं वचो वक्षि येनास्माकमजानताम् ।
न बोधो जायते सम्यक् स्वयं विमृशतामपि ॥ ३ ॥
वाच्यं निश्चितमेवैकं तत्त्वं किंचिद्विवृण्वता ।
अन्यैः किमिदमाख्येयं तुभ्यं बुद्धिमतां वर ॥ ४ ॥
अत एव मयासीस्त्वं प्रार्थितः पुरुषोत्तम ।
तत्त्वज्ञानमिदं कथ्यं गिरा न ध्वनितार्थया ॥ ५ ॥

---

मग पार्थु श्रीकृष्णातें म्हणे । हां हो हें कैसें तुमचें बोलणें । एक होय तरी अंतःकरणें । विचारूं ये ॥ १ ॥ मागां सकळ कर्मांचा संन्यासु । तुम्हींचि निरोपिला होता बहुवसु । तरी कर्मयोगीं केवीं अतिरसु । पोखीतसां पुढती ॥ २ ॥ ऐसें द्व्यर्थ हें बोलतां । आम्हा नेणतयांच्या चित्ता । आपुलिये चाडे श्रीअनंता । उमजु नोहे ॥ ३ ॥ ऐकें एकसारातें बोधिजे । तरी एक निष्टचि बोलिजे । हें आणिकीं काय सांगिजे । तुम्हांप्रति ॥ ४ ॥ तरी याचिलागीं तुमतें । म्या राउळसी विनविलें होतें । जे हा परमार्थु ध्वनितें । न बोलावा ॥ ५ ॥

यद् वृत्तं तत्तथैवास्तां प्रस्तुतं व्याहर स्फुटम् ।
वरीयान्कतरो नाम मार्गयोरेतयोर्द्वयोः ॥ ६ ॥
फलं सुनिर्मलं यस्य मोक्षरूपं ध्रुवं भवेत् ।
नायासश्चानुभूयेत यं केनाप्यनुतिष्ठता ॥ ७ ॥
यस्तुल्यो वाहनेन स्यात्सुखं यत्रोपविश्यते ।
न निद्रासुखभङ्गोऽस्ति मार्गो भूयांश्च गम्यते ॥ ८ ॥
वचसानेन पार्थस्य प्रीतात्मा मधुसूदनः ।
निजगाद यदात्थ त्वं तत्तथैव भविष्यति ॥ ९ ॥
कामधेनूपमा माता यस्य भाग्यवतः खलु ।
क्रीडार्थं लभते चन्द्रं गगनस्थमपीह सः ॥ १० ॥
नूनमीशः प्रसन्नः सन् क्षीराब्धिमुपमन्यवे ।
दुग्धभक्तकृते प्रादात् काममस्य प्रपूरयन् ॥ ११ ॥
तथौदार्यनिधिः श्रीमान् कृष्णो यस्य वशंवदः ।
वासः सर्वसुखानां स स्वयं पार्थो भवेन्न किम् ॥ १२ ॥

---

परी मागील असो देवा । आतां प्रस्तुतीं उकलु देखावा । सांगें दोहीं-माजि बरवा । मार्गु कवण ॥ ६ ॥ जो परिणामींचा निर्वाळा । अचुंबितु ये फळा । आणि अनुष्ठितां प्रांजळा । सावियाचि ॥ ७ ॥ जैसें निद्रेचें सुख न मोडे । आणि मार्गु तरी बहुसाल सांडे । तैसें सोकासना सांगडें । सोहपें होय ॥ ८ ॥ येणें अर्जुनाचेनि बोलें । देवो मनीं रिझले । मग हाइल ऐकें म्हणितलें । संतोषोनियां ॥ ९ ॥ देखा कामधेनू ऐसी मायें । सदैवा जया होये । तो चंद्रुही परी लाहे । खेळावया ॥ १० ॥ पाहें पां श्रीशंभूची प्रसन्नता । तया उपमन्यूचिया आर्ता । काय क्षीराब्धि दूधभाता । देइजेचिना ॥ ११ ॥ तैसा औदार्याचा कुरुठा । श्रीकृष्ण आपु जाहलिया सुभटा । कां सर्व सुखांचा वसौटा । तोचि नोहावा ॥ १२ ॥

किं चित्रमिह यत्प्राप्य लक्ष्मीकान्ततमं प्रभुम् ।
प्रार्थयेत यथाकामं तं तमर्थं धनंजयः ॥ १३ ॥
अर्जुनप्रार्थितं प्रादात् कृष्णः प्रीतमना अतः ।
तदेव कथयिष्यामि कृष्णेन यदुदीरितम् ॥ १४ ॥

श्रीभगवानुवाच—

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥

संन्यासे कर्मयोगे च तत्त्वतः सुविचारिते ।
दृश्यते मोक्षदायित्वमेतयोरुभयोरपि ॥ १५ ॥
सुलभः कर्मयोगस्तु जानतामप्यजानताम् ।
बालानाबलानां च प्लवोऽम्बुतरणे यथा ॥ १६ ॥
सारासारविमर्शे योगः सुलभोऽयमेव मे भाति ।
संन्यासस्यापि फलं श्रयतैनं लभ्यते ह्यनायासम् ॥ १७ ॥
अत एव विवृण्वे ते चिह्नं संन्यासिनां किमस्तीति ।
येनानयोरभेदः सुखमुभयोर्योगयोः प्रतीतः स्यात् ॥१८॥

---

एथ चमत्कारु कायसा । गोसावी श्रीलक्ष्मीकांताऐसा । आतां आपुलिया सवेसा । मागावा कीं ॥ १३ ॥ म्हणोनि अर्जुनें म्हणितलें । तें हांसोनि येरें दिधलें । तेंचि सांगेन बोलिलें । काय कृष्णें ॥ १४ ॥ तो म्हणे गा कुंतीसुता । हे संन्यासयोगु विचारितां । मोक्षकरु तत्त्वता । दोनीही होती ॥ १५ ॥ तरी जाणांनेणां सकळां । हा कर्मयोगु कीर प्रांजळा । जैसी नाव स्त्रियां बाळां । तोयतरणीं ॥ १६ ॥ तैसें सारासार पाहिजे । तरी सोहपा हाचि देखिजे । येणें संन्यासफळ लाहिजे । अनायासें ॥१७॥ आतां याचिलागीं सांगेन । तुज संन्यासियाचें चिन्ह । मग सहजें हें अभिन्न । जाणसी तूं ॥ १८ ॥

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३ ॥

अस्मरन् यो गतार्थस्य निरिच्छोऽनाप्तवस्तुनि ।
अन्तरङ्गस्य गाम्भीर्याद्यश्च मेरुरिवाचलः ॥ १९ ॥
अहं च मम चेत्येषा स्मृतिर्यस्य लयं गता ।
तमेवार्जुन जानीहि संन्यासिनमनारतम् ॥ २० ॥
ईदृग्वृत्ति मनो यस्य सङ्गैर्मुक्तः स एव हि ।
अखण्डितं सुखं तेन विनायासमवाप्यते ॥ २१ ॥
नेदृशेन परित्याज्यं कृत्स्नं गेहादिकं च यत् ।
यतो निःसङ्गमेवात्र स्वभावादस्य मानसम् ॥ २२ ॥
पश्य भस्मावशेषत्वान्निर्वाणः पावको यथा ।
कार्पासेनापि दाह्येन शक्यो वेष्टयितुं सुखम् ॥ २३ ॥
तथा संकल्पशून्यैव बुद्धिर्यस्य स पूरुषः ।
उपाधौ विद्यमानेऽपि कर्मभिर्नैव बध्यते ॥ २४ ॥
संकल्पाभाव एवातः संन्यासाय प्रकल्पते ।
समानौ योगसंन्यासावेतस्मादेव कारणात् ॥ २५ ॥

---

तरी गेलियाची से न करी । न पवतां चाड न घरी । जो सुनिश्चलु अंतरीं मेरु जैसा ॥ १९ ॥ आणि मी माझें ऐसी आठवण । विसरलें जयाचें अंतःकरण । पार्था तो संन्यासी जाण । निरंतर ॥ २० ॥ जो मनें ऐसा जाहला । संगीं तोचि सांडिला । म्हणोनि सुखें सुख पावला । अखंडित ॥ २१ ॥ आतां गृहादिक आघवें । तें कांहीं नलगे त्यजावें । जे घेतें जाहलें स्वभावें । निःसंगु म्हणऊनि ॥ २२ ॥ देखें अग्नि विझोनि जाये । मग जे राखोंडी केवळु होये । तैं ते कापुसें गिंवसूं ये । जियापरी ॥ २३ ॥ तैसा असतेनि उपाधी । नाकाळिजे तो कर्मबंधीं । जयाचिये बुद्धी । संकल्पु नाहीं ॥ २४ ॥ म्हणोनि कल्पना जैं सांडे । तैंचि गा संन्यासु घडे । इयें कारणें दोनी सांगडे । संन्यासयोगु ॥ २५ ॥

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥

अथाप्यर्जुन ये मूर्खाः सर्वथैव भवन्ति ते ।
कथं नु ज्ञातुमर्हन्ति व्यवस्थां सांख्ययोगयोः ॥ २६ ॥
एते स्वाभाविकाज्ञत्वान्मन्वते भेदमेतयोः ।
दीपे दीपे नु किं दीप्तिर्विद्यते भिन्नभिन्नता ॥ २७ ॥
तत्त्वं तु सकलं दृष्टमेकमेवानुभूय यैः ।
जानते सम्यगैक्यं ते योगयोरुभयोरपि ॥ २८ ॥

यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥

सांख्यैः स्थानं प्राप्यते यत्तदेव
योगैर्लब्धुं शक्यते निश्चयेन ।
तस्मादेतौ भिन्नवद्भासमानौ
नूनं मार्गावेकभावं भजन्ते ॥ २९ ॥
आकाशश्चावकाशश्च भिद्येते न परस्परम् ।
योगसंन्यासयोस्तद्वन्मिथो भेदो न विद्यते ॥ ३० ॥

---

एऱ्हवीं तरी पार्था । जे मूर्ख होती सर्वथा । ते सांख्ययोगसंस्था । जाणती केवीं ॥ २६ ॥ सहजें ते अज्ञान । म्हणोनि म्हणती ते भिन्न । एऱ्हवीं दीपाप्रति काइं आनान । प्रकाशु आहाती ॥ २७ ॥ पैं सम्यक् एणें अनुभवें । जिहीं देखिलें तत्त्व आघवें । ते दोहींतेंही ऐक्यभावें । मानिती गा ॥ २८ ॥ आणि सांख्यीं जें पाविजे । तेंचि योगीं गमिजे । म्हणोनि ऐक्य दोहींतें सहजें । इयापरी ॥ २९ ॥ देखें आकाश आणि अवकाश । भेदु नाहीं जैसा । तैसें ऐक्य योगसंन्यासा । वोळखे जो ॥ ३० ॥

तस्यैव चित्त उदितः किल बोधभानु—
स्तेनैव दृष्टमिह वस्तुत आत्मरूपम् ।
यस्य प्रतीतिरजनि स्वत ईदृशी यत्
सांख्यं च कर्म च मिथो भजतो न भेदम् ॥ ३१ ॥

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगमुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥

आरोहन्कर्ममार्गेण मोक्षपर्वतमर्जुन ।
शिखरं हेलयाप्नोति परमानन्दसंज्ञकम् ॥ ३२ ॥
योऽनाचरन्कर्मयोगं संन्यासफलमीप्सति ।
न हि तत्प्राप्यते तेन श्रमं व्यर्थं वितन्वता ॥ ३३ ॥

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

निवर्तितं भ्रमाद्येन गुरुवाक्येन शोधितम् ।
आत्मस्वरूपाचिन्तायां गमितं च लयं मनः ॥ ३४ ॥
यावत्पताति न सिन्धौ भिन्नं चाल्पं च दृश्यते लवणम् ।
मिलितं तु सिंधुना तत्सिन्धोर्गुरुतां बिभर्त्येव ॥ ३५ ॥

---

तयासींचि जगीं पाहलें । आपणपें तेणेंचि देखिलें । जया सांख्ययोग जाणवले । भेदेंविण ॥ ३१ ॥ जो युक्तिपंथें पार्था । चढे मोक्षपर्वता । तो महासुखाचा निमथा । वहिला पावे ॥ ३२ ॥ येरा योगस्थिति जया खांडे । तो वांयाचि गा हव्यासीं पडे । परि प्राप्ति कहीं न घडे । संन्यासाची ॥ ३३ ॥ जेणें भ्रांतीपासूनि हिरतलें । गुरुवाक्यें मन धुतलें । मग आत्मस्वरूपीं घातलें । रोवूनियां ॥ ३४ ॥ जैसें समुद्रीं लवण न पडे । तंव वेगळें अल्प आवडे । मग होय सिंधूचिएवढें । मिळे तेव्हां ॥ ३५ ॥

एवं निवृत्तसंकल्पं मनोऽभूद्यस्य चिन्मयम् ।
तेनैकदेशगेनापि व्याप्तं सर्वं जगत्त्रयम् ॥ ३६ ॥
कर्ताहं कर्मेदं कार्यमिदमिति त्रयं प्रकृत्यैव ।
तस्मिन् विरमति, कुर्वन् कर्माखिलमपि स लिप्यते नैव ॥

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ॥ ८ ॥
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥

देहेऽहमिति नो यस्य स्मृतिरेव धनंजय ।
कुतस्तत्र नु कर्तृत्वं, किं तत्स्थातुं क्षमं वद ॥ ३८ ॥
तनुत्यागं विनैवैवममूर्तस्याखिला गुणाः ।
योगयुक्ते प्रतीयन्ते तस्मिन्पूर्णतयार्जुन ॥ ३९ ॥
अन्यथेतरवत्सोऽपि देहधर्मान्समाश्रयन् ।
अहो नु दृश्यते कुर्वन् व्यापारानखिलानपि ॥ ४० ॥
सोऽपि पश्यति नेत्राभ्यां श्रवणाभ्यां शृणोति च ।
अनासक्तः सर्वथैव न त्वाश्चर्यमिदं परम् ॥ ४१ ॥

---

तैसें संकल्पोनि काढिलें । जयाचें मनाचि चैतन्य जाहलें । तेणें एकदेशियें परी व्यापिलें । लोकत्रय ॥ ३६ ॥ आतां कर्ता कर्म करावें । हें खुंटलें तया स्वभावें । आणि करी जऱ्ही आघवें । तऱ्ही अकर्ता तो॥३७॥ जे पार्था तया देहीं । मी ऐसा आठऊ नाहीं । तरी कर्तृत्व कैंचें काई । उरे सांगें ॥ ३८ ॥ ऐसें तनुत्यागेंवीण । अमूर्ताचे गुण । दिसती संपूर्ण । योगयुक्ता ॥ ३९ ॥ एऱ्हवीं आणिकांचिये परी । तोही एक शरीरी । अशेषाही व्यापारीं । वर्तुत दिसे ॥ ४० ॥ तोही नेत्रीं पाहे । श्रवणीं ऐकतु आहे । परि तेथींचा सर्वथा नोहे । नवल देखें ॥४१॥

स्पर्शं त्वनुभवत्येव गन्धं चाप्युपजिघ्रति ।
भाषणं प्राप्तकालं च कर्तुं जानाति सोऽन्यवत् ॥ ४२ ॥
आहारं सेवते युक्तं त्यजति त्याज्यमेव यत् ।
निद्रोपगमकाले च सुखं स्वपिति सोऽन्यवत् ॥ ४३ ॥
आत्मेच्छावशतः सोऽपि संचरन् दृश्यतेऽर्जुन ।
एवं सर्वाणि कर्माणि यथावदनुतिष्ठति ॥ ४४ ॥
एकैकं किमिदं कथ्यं श्वासोच्छ्वासादिकास्तथा ।
निमिषोन्मेषणाद्याश्च निखिला जीवनक्रियाः ॥ ४५ ॥
कामं तस्य प्रवर्तन्ते नैकापि परिहीयते ।
आत्मानुभवसामर्थ्यात्कर्ता त्वासां तु नैव सः ॥ ४६ ॥
भ्रान्तिशय्याश्रितस्यास्य लुब्धं स्वप्नसुखे मनः ।
ज्ञानोदये प्रबुद्धस्तु नाहं कर्तेति पश्यति ॥ ४७ ॥

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥

---

स्पर्शासि तरी जाणे । परिमळु सेवी घ्राणें । अवसरोचित बोलणें । तयाहि आथी ॥ ४२ ॥ आहारातें स्वीकारी । त्यजावें तें परिहारी । निद्रेचिया अवसरीं । निदिजे सुखें ॥ ४३ ॥ आपुलेनि इच्छावशें । तोही गा चालतु दिसे । पैं सकळ कर्म ऐसें । राहाटे कीर ॥४४॥ हें सांगों काई एकैक । देखें श्वासोच्छ्वासादिक । आणि निमिषोन्निमिष । आदिकरूनि ॥ ४५ ॥ पार्था तयाचे ठायीं । हें आघवेंचि आथी पाहीं । परी तो कर्ता नव्हे कांहीं प्रतीतिबळें ॥ ४६ ॥ जैं भ्रांतिसेजे सुतला । तैं स्वप्नसुखें भुतला । मग तो ज्ञानोदयीं चेइला । म्हणोनियां ॥ ४७ ॥

आत्माधिष्ठानसङ्गेन सर्वा इन्द्रियवृत्तयः।
स्वस्वेषु विषयेष्वेव वर्तन्ते किल देहिनाम् ॥ ४८ ॥
गहे दीपप्रकाशेन व्यापारा अखिला यथा।
देहे सर्वाणि कर्माणि योगयुक्तस्य वै तथा ॥ ४९ ॥

कर्माणि कुर्वन्नपि तानि तानि
न वध्यतेऽसौ किल कर्मबन्धैः।
स्थितं यथाम्भस्यपि पद्मपत्रं
कदाचिदार्द्रीक्रियते न तेन ॥ ५० ॥

कायेन मनसा बुद्धया केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति संगं त्यक्त्वात्मशुद्धये ॥ ११ ॥

धीचिह्नं नेक्ष्यते यत्र नोदेति मनसोऽङ्कुरः।
स एव किल शारीरो व्यापारः परिकीर्तितः ॥ ५१ ॥
श्रोतुकामोऽसि चेत् स्पष्टमिदमेव तदा शृणु।
बालकानां यथा चेष्टा मनोधीसङ्गवर्जिताः।
तथा क्रियाः प्रवर्तन्ते तनुमात्रेण योगिनाम् ॥ ५२ ॥
निर्मिते पञ्चभिर्भूतैः शरीरे निद्रिते सति।
एकमेव मनः स्वप्ने व्यापारान्कुरुते यथा ॥ ५३ ॥

---

आतां अधिष्ठानसंगती । अशेषाही इंद्रियवृत्ति । आपुलालिया अर्थी । वर्तत आइाती ॥ ४८ ॥ दीपाचेनि प्रकाशें । गृहींचे व्यापार जैसे । देहीं कर्मजात तैसें । योगयुक्ता ॥ ४९ ॥ तो कर्में करी सकळें । परी कर्मबंधा नाकळे । जैसें न सिंपे जळीं जळें । पद्मपत्र ॥ ५० ॥ देखें बुद्धीची भाषा नेणिजे । मनाचा अंकुर नुदेजे । ऐसा व्यापारु तो बोलिजे। शारीरु गा ॥ ५१॥ हेंचि मराठें परियेसीं । तरी बाळकाची चेष्टा जैशी । योगिये कर्में करिती तैशीं । केवळा तनु ॥ ५२॥ मग पांचभौतिक संचलें । जेव्हां शरीर असे निदेलें । तेथें मनाचि राहाटे एकलें । स्वप्नीं जेवीं ॥ ५३ ॥

शृण्वाश्चर्यमिदं पार्थ वासनायाः कियद्बलम् ।
सुखदुःखे विना बोधं यया देहोऽनुभाव्यते ॥ ५४ ॥

यो मनागप्यविज्ञात इन्द्रियैरुपजायते ।
तमेव केवलं पार्थ व्यापारं मानसं विदुः ॥ ५५ ॥

अहो तमपि कुर्वाणा योगिनो नैव कर्मभिः ।
बध्यन्ते यदहंभावसङ्ग एभिर्विवर्जितः ॥ ५६ ॥

बाधितस्य पिशाचेन चित्ते भ्रमहते सति ।
दृश्यते विकलं सर्वं नूनमिन्द्रियचेष्टितम् ॥ ५७ ॥

कामं पश्यत्यसौ रूपं शृणोत्याकारितो वचः ।
ब्रान्त्रं वक्ति च वक्त्रेण न त्वस्य कृतवेदिता ॥ ५८ ॥

कार्यं किंचिदनुद्दिश्य यद्यत्स कुरुतेऽर्जुन ।
सर्वं कर्मेन्द्रियाणां तत् केवलं विद्धि तत्त्वतः ॥ ५९ ॥

---

नवल ऐकें धनुर्धरा । कैसा वासनेचा संसारा । देहा होऊं नेदी उजगरा । परी सुखःदुखें भोगी ॥ ५४ ॥ इंद्रियांच्या गांवीं नेणिजे । ऐसा व्यापारु जो निपजे । तो केवळु गा म्हणजे । मानसाचा ॥ ५५ ॥ योगिये तोही करिती । परी कर्में ते न बंधिजती । जे सांडिली आहे संगती । अहंभावाची ॥ ५६ ॥ आतां जाहालिया भ्रमहत । जैसें पिशाचाचें चित्त । मग इंद्रियांचें चेष्टित । विकळु दिसे ॥ ५७ ॥ स्वरूप तरी देखे । आळविलें आइके । शब्द बोले मुखें । परी ज्ञान नाहीं ॥ ५८ ॥ हें असो काजेंविण । जें जें कांहीं कारण । तें केवळ कर्म जाण । इंद्रियांचें ॥ ५९ ॥

ज्ञानपूर्वं प्रवृत्तिस्तु घटते यत्र कर्मणि ।
तन्नूनं बुद्धिजं विद्धि भगवान्पार्थमुक्तवान् ॥ ६० ॥

प्रामुख्येन धियः कामं योगिनो दत्तचेतसः ।
आचरन्तोऽपि कर्माणि भान्त्यलिप्ता इवार्जुन ॥ ६१ ॥

तेषामाबुद्धिदेहं न स्मृतिरेवाप्यहंकृतेः ।
अतः कर्म चरन्तोऽपि ते शुद्धा नात्र संशयः ॥ ६२ ॥

कर्तृत्वमतिहीनं यत्कृतं नैष्कर्म्यमेव तत् ।
गुरुगम्यमिदं तत्त्वं ते जानन्ति सुशोभनम् ॥ ६३ ॥

पूरः शान्तरसस्यायं हन्त सोद्रिक्ततां गतः ।
यतो यद्वाक्पथातीतं वक्तुं तदपि पारितम् ॥ ६४ ॥

सम्यग्विलयमायाता येषामिन्द्रियवश्यता ।
त एव श्रोतुमर्हन्ति गिरोऽमू मदुदीरिताः ॥ ६५ ॥

अनेनातिप्रसङ्गेन किं कथाक्षेपकारिणा ।
युज्यते नाधुना कर्तुं भङ्गोऽत्र श्लोकसंगतेः ॥ ६६ ॥

---

मग सर्वत्र जें जाणतें । तें बुद्धीचें कर्म निरुतें । वोळख अर्जुनातें । म्हणे हरि ॥ ६० ॥ ते बुद्धि धुरे करुनी । कर्म करिती चित्त देउनी । परी ते नैष्कर्म्यापासुनी । मुक्त दिसती ॥ ६१ ॥ जे बुद्धीचिये ठावूनि देहीं । तयां अहंकाराची सेचि नाहीं । म्हणोनि कर्म करितां पाहीं । चोखाळले ॥ ६२ ॥ अगा करितेनवीण कर्म । तेंचि तें नैष्कर्म्य । हें जाणती सुवर्म । गुरुगम्य जें ॥ ६३ ॥ आतां शांतरसाचें भरितें । सांडीत आहे पात्रातें । जें बोलणें बोलापरौतें । बोलवलें ॥ ६४ ॥ एथ इंद्रियांचा पांगु । जया फिटला आहे चांगु । तयासीचि आथि लागु । परिसावया ॥ ६५ ॥ हा असो अति-प्रसंगु । न संडीं पां कथालागु । होईल श्लोकसंगतिभंगु । म्हणऊ-नियां ॥ ६६ ॥

मनसा यत्सुदुर्ज्ञेयं बुद्धेरपि दुरासदम् ।
दैवानुकूल्यतोऽस्मभ्यं तदाख्यातुमभूः क्षमः ॥ ६७ ॥
शब्दातीतं स्वभावेन वाचावर्णि यतस्त्वया ।
उपायेन किमन्येन ख्याहि नः प्रस्तुतां कथाम् ॥ ६८ ॥
श्रोतॄणामुत्कटामिच्छां ज्ञात्वेमामब्रवीद्वचः ।
दासो निवृत्तिनाथस्य सुप्रसन्नमना इदम् ।
श्रुत्वाप्युभयसंवादं भूयः शृणुत सादरम् ॥ ६९ ॥
ततः कृष्णोऽभ्यधात्पार्थं सांप्रतं कथयामि ते ।
सकलं कृतकृत्यस्य चिह्नं तदवधीयताम् ॥ ७० ॥

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥

आत्मयोगेन संपन्नो यः कर्मफलनिःस्पृहः ।
उपसृत्य वधूः शान्तिर्वृणीते तं स्वयं मुदा ॥ ७१ ॥
तदन्यः कर्मसक्तत्वादभिलाषनियन्त्रितः ।
कीलितः फलभोगाख्ये नागदन्तेऽवतिष्ठते ॥ ७२ ॥

---

जँ मना आकळितां कुवाडें । घाघुसितां बुद्धी नातुडे । तें दैवाचेनि सुरवाडें । सांगवलें तुज ॥ ॥ ६७ ॥ जँ शब्दातीत स्वभावें । तें बोलींचि जरी फावे । तरीं आणिकें काय करावें । कथा सांगें ॥ ६८ ॥ हा आर्तिविशेषु श्रोतयांचा । जाणोनि दास निवृत्तीचा । म्हणे संवादु दोघांचा । परिसोनि परिसा ॥ ६९ ॥ मग श्रीकृष्ण म्हणे पार्थातें । आतां प्राप्तांचें चिन्ह पुरतें । सांगेन तुज निरुतें । चित्त देईं ॥ ७० ॥ तरी आत्मयोगें आथिला । जो कर्मफळाशीं विटला । तो घर रिघोनि वरिला । शांती जगीं ॥ ७१ ॥ येरु कर्मबंधें किरीटी । अभिलाषाचिया गांठी । कळासला खुंटी । फळभोगाच्या ॥ ७२ ॥

सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ १३ ॥

फलाशयेव कर्माणि सर्वाण्यपि करोति यः ।
नैषामस्म्यथ कर्तेति फलेच्छां समुपेक्षते ॥ ७३ ॥
सर्वा सुखमयी सृष्टिर्जायते तस्य पश्यतः ।
तेनादिष्टो महाबोधः सर्वत्र कुरुते पदम् ॥ ७४ ॥
देहे सोऽत्र नवद्वारे स्थितः सन्नप्यसन्निव ।
कुर्वन्नपि फलत्यागी भात्यकुर्वन्निव क्रियाः ॥ ७५ ॥

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥

ईश्वरस्तत्त्वतो दृष्टो निर्व्यापारः स्वयं किल ।
वितन्वन् भाति विस्तारं त्रैलोक्यस्य स एव तु ॥ ७६ ॥
अथ कर्तेति गद्येत कर्मणा लिप्यते न सः ।
नास्योदासीनवृत्तेर्हि हस्तपादादि दूष्यते ॥ ७७ ॥
योगनिद्राप्यभग्नाऽऽस्ते बाध्यते नाप्यकर्तृता ।
महाभूतप्रपञ्चं तु सम्यग्विरचयत्यसौ ॥ ७८ ॥

---

जैसा फळाचिये हांवे । तैसें कर्म करी आघवें । मग न कीजेचि येणें भावें । उपेक्षी जो ॥ ७३ ॥ तो जयाकडे वासु पाहे । तेउती सुखाची सृष्टि होये । तो म्हणे तेथ राहे । महाबोधु ॥ ७४ ॥ नवद्वारें देहीं । तो असतुचि परि नाहीं । कारितुचि न करी कांहीं । फलत्यागी ॥ ७५ ॥ जैसा कां सर्वेश्वरु । पाहिजे तंव निर्व्यापारु । परि तोचि रची विस्तारु । त्रिभुवनाचा ॥ ७६ ॥ आणि कर्ता ऐसें म्हणिपे । तरी कवणें कर्मी न शिंपे । जे हातुपावो न लिंपे । उदासवृत्तीचा ॥ ७७ ॥ योगनिद्रा तरी न मोडे । अकर्तेपणा सळु ना पडे । परि महाभूतांचें दळवाडें । उभारी भलें ॥७८॥

जगज्जीवजाते समस्ते स्थितः सन्
न कस्याप्यसौ नाम वश्यः कदापि ।
जगज्जायते लीयते वा कदेति
न वार्तामपीमामसौ नाम वेद ॥ ७९ ॥

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥

पापपुण्यान्यशेषाणि पार्श्वे वेद न सन्त्यपि ।
न तिष्ठत्यपि साक्षित्वे का वा वार्तान्यकर्मसु ॥ ८० ॥
मूर्त्या सङ्गमुपेतोऽसौ मूर्तो भूत्वैव खेलति ।
अमूर्तत्वं पुनर्नास्य प्रभोर्मालिन्यमृच्छति ॥ ८१ ॥

सृजति रक्षति संहरतीश्वर
इति वचो निगदन्ति जना भुवि ।
तदखिलं त्ववधारय पाण्डव
सरभसं निजयाज्ञतयोदितम् ॥ ८२ ॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥

---

जगाच्या जीवीं आहे । परी कवणाचा कांहीं नोहे । जगचि हें होय-जाये । तो शुद्धीहि नेणे ॥ ७९ ॥ पापपुण्यें अशेखें । पासींचि असतु न देखे । आणि साक्षीही होऊं न ठके येरी गोठी कायसी ॥ ८० ॥ पैं मूर्तीचेनि मेळें । तो मूर्तचि होऊनि खेळे । परि अमूर्तपण न मैळे । दादुलयाचें ॥ ८१ ॥ तो सृजी पाळी संहारी । ऐसें बोलती जें चराचरीं । तें अज्ञान गा अवधारीं । पांडुकुमरा ॥ ८२ ॥

उन्मूलिते तदज्ञाने याति भ्रान्तिमसी लयम् ।
अकर्तृत्वं ततोऽभ्येति प्रभोः प्रकटतां ध्रुवम् ॥ ८३ ॥
ईश्वरस्यैवमेकस्य प्रतीता चेदकर्तृता ।
ममापीश्वरभूतत्वात् सिध्यतीयं स्वभावतः ॥ ८४ ॥
यस्योदेति विवेकोऽयं त्रिलोक्यां तस्य का भिदा ।
पश्यत्यात्मप्रतीत्यासौ मुक्तमेवाखिलं जगत् ॥ ८५ ॥
पूर्वाशाया मन्दिरं भानुभासा ।
प्रातःकाले भास्यते यावदेव ।
तावत्तूर्णं तद्दिशोऽपीतरासां
काष्ठानां किं कालिमा नापयाति ॥ ८६ ॥

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥

आत्मज्ञानमवाप्यैव साधको बुद्धिनिश्चयात् ।
भावयत्यात्मनात्मानं ब्रह्मरूपं तथैव च ।
भूत्वा ब्रह्मपरो ब्रह्मस्थितिं रक्षत्यहर्निशम् ॥ ८७ ॥

---

तें अज्ञान जैं समूळ तुटे । तैं भ्रांतीचें मषेरें फिटे । मग अकर्तृत्व प्रगटे । मज ईश्वराचें ॥ ८३ ॥ एथ ईश्वरु एक अकर्ता । ऐसें मानलें जरी चित्ता । तरी तोचि मी स्वभावतां । आदीचि आहे ॥ ८४ ॥ ऐसेनि विवेकें उदो चित्तीं । तयासि भेदु कैंचा त्रिजगतीं । देखें आपुलिया प्रतीति । जगाचि मुक्त ॥ ८५ ॥ जैशी पूर्वदिशेच्या राउळीं । उदया येतांचि सूर्य दिवाळी । कीं येरींही दिशां तियेचि काळीं । काळिमा नाहीं ॥ ८६ ॥ बुद्धिनिश्चयें आत्मज्ञान । ब्रह्मरूप भावी आपणा आपण । ब्रह्मनिष्ठा राखे पूर्ण । तत्परायण अहर्निशीं ॥ ८७ ॥

ईदृशं व्यापकं ज्ञानं सम्यग्येषां हृदि स्थितम् ।
अहो नु समता दृष्टिस्तेषां वाचोऽतिगोचरी ॥ ८८ ॥
ब्रह्मरूपममी विश्वमात्मानमिव मन्वते ।
इत्यत्र वदतो वाङ्मे मन्तव्येयं किमद्भुता ॥ ८९ ॥
भाग्यं किं कौतुकेनापि दैन्यं पश्यति जातुचित् ।
किं भ्रान्तिमभिजानाति विवेको वा कदाचन ॥ ९० ॥
स्तोकमप्यन्धकारं किं सूर्यः स्वप्नेऽपि पश्यति ।
कर्णाभ्याममृतं जातु मृत्युवार्तां शृणोति किम् ॥ ९१ ॥
शीतरश्मिः किमुष्माणं चेतसानुस्मरत्यहो ।
पश्यन्ति ज्ञानिनो भेदं किं भूतेषु कदाचन ॥ ९२ ॥

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥

मशकोऽयमयं हस्ती श्वपचोऽयमयं द्विजः ।
इतरोऽसावयं पुत्र इति तेषु कुतो भिदा ॥ ९३ ॥

---

ऐसें व्यापक ज्ञान भलें । जयांचिया हृदया गिंवसित आलें । तयांची समतादृष्टि बोलें । विशेषूं काई ॥ ८८ ॥ एक आपणपांचि जैसें । ते देखती विश्व तैसें । हें बोलणें कायसें । नवल एथ ॥ ८९ ॥ परि दैव जैसें कवतिकें । कांहींचि दैन्य न देखे । कां विवेकु हा नोळखे । भ्रांतीतें जेवीं ॥ ९० ॥ ना तरी अंधकाराची वानी । जैसा सूर्यो न देखे स्वप्नीं अमृत नायके कानीं । मृत्युकथा ॥ ९१ ॥ हें असो । संतापु कैसा । चंद्र न स्मरे जैसा । भूतीं भेदु नेणती तैसा । ज्ञानिये ते ॥ ९२ ॥ मग हा मशकु हा गजु । कीं श्वपचु हा द्विजु । पैल इतरु हा आत्मजु । हें उरलें कें ॥ ९३ ॥

इयं धेनुरयं श्वेति गौरवं लाघवं च न।
अस्त्विदं जाग्रता स्वप्नः कुतः समनुभूयते ॥ ९४ ॥
भेदस्तत्रैव दृश्येत यत्राहंता स्थिता भवेत्।
आदावेव तु तल्लोपे वैषम्यं स्यात्किमाश्रयम् ॥ ९५ ॥

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः।
निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः १९ ॥

वयमेवाद्वयं ब्रह्म समं सर्वत्र यत्सदा।
चिह्नं समदृशामेतत्पूर्णत्वेन विदांकुरु ॥ ९६ ॥
अहित्वा विषयासङ्गमक्लिशित्वेन्द्रियाण्यपि।
वासनात्यागतो येन भुक्ता निःसङ्गता खलु ॥ ९७ ॥
लोकवृत्तं समाश्रित्य लौकिकेष्वेव कर्मसु।
रतेन त्यक्तमज्ञानं येनेदं लौकिकं पुनः ॥ ९८ ॥
खेचरो जनमध्येऽपि सज्जनानामगोचरः।
ज्ञायते धृतदेहोऽपि न स संसारिभिस्तथा ॥ ९९ ॥

---

ना तरी हे धेनु हें श्वान। एक गुरु एक हीन। हें असो कैंचें स्वप्न। जागतया ॥ ९४ ॥ एथ भेदु तरी कीं देखावा। जरी अहंभाव उरला होआवा। तो आधींचि नाहीं आघवा। आतां विषमु काई ॥ ९५ ॥ म्हणोनि सर्वदा सदा सम। तें आपणचि अद्वय ब्रह्म। हें संपूर्ण जाणें वर्म। समदृष्टींचें ॥ ९६ ॥ जिहीं विषयसंगु न सांडितां। इंद्रियांतें न दंडितां। परि भोगिली निःसंगता। कामेंविण ॥९७॥ जिहीं लोकांचेनि आधारें। लौकिकेंचि व्यापारें। परि सांडिलें निदसुरें। लौकिक हें ॥ ९८॥ जैसा जनामाजीं खेचरु। असतुचि जना नोहे गोचरु ॥ तैसा शरीरीं परि संसारु। नोळखे तयातें ॥ ९९ ॥

अस्त्विदं वातसंपर्काज्जल एव जलं लुलत् ।
जलान्यत्वेन कल्लोल इति नाम्नाभिधीयते ॥ १०० ॥
नामरूपे तथा तस्य नूनं ब्रह्मैव सोऽन्यथा ।
मनो यस्येह सर्वत्र समतामेव पश्यति ॥ १०१ ॥
यस्येदृक् समदृष्टित्वं स किंलक्षण इत्यपि ।
संक्षेपेण वदिष्यामि तवाग्रे पाण्डुनन्दन ॥ १०२ ॥

न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥ २० ॥

मृगजलपूरेण यथा स्वस्थानान्नाचलो मनाक् चलति ।
विक्रियते न तथा यः शुभमशुभं वापि संप्राप्य ॥ १०३ ॥
पुरुषं तमेव नान्यं समदृष्टिं तत्त्वतो बुधा आहुः ।
ब्रह्म स एव च साक्षात् पाण्डुसुतं व्याजहार हरिः ॥ १०४ ॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥ २१ ॥

नैति हित्वात्मरूपं यः कदापीन्द्रियवश्यताम् ।
विषया नैव सेव्यन्ते तेनेत्यत्राद्भुतं नु किम् ॥ १०५ ॥

---

हें असो पवनाचेनि मेळें । जैसें जळींचि जळ लोळे । तें आणिकें म्हणती वेगळें । कल्लोळ हें ॥ १०० ॥ तैसें नामरूप तयाचें । एऱ्हवीं ब्रह्मचि तो साचें । मन साम्या आलें जयाचें । सर्वत्र गा ॥ १ ॥ ऐसेनि समदृष्टि जो होये । तया पुरुषा लक्षणही आहे । अर्जुना संक्षेपें सांगेन पाहें । अच्युत म्हणे ॥ २ ॥ तरी मृगजळाचेनि पूरें । जैसें न लोटिजे कां गिरिवरें । तैसा शुभाशुभीं न विकरे । पातलिया जो ॥ ३ ॥ तोचि तो निरुता। समदृष्टि तत्त्वतां । हरि म्हणे पांडुसुता । तोचि ब्रह्म ॥ ४ ॥ जो आपणपें सांडूनि कांहीं । इंद्रियग्रामावरी येणेंचि नाहीं । तो विषय न सेवी हें काइ । विचित्र येथ ॥ ५ ॥

अपारं सहजं प्राप्य स्वसुखं स हृदन्तरे ।
संतुष्टः सन्नेन्द्रियार्थसेवने संप्रवर्तते ॥ १०६ ॥

सुविमलहिमकरकिरणा येनासेव्यन्त कुमुददलपात्रे ।
स कथं नाम चकोरश्चुम्बेत् सिकताकणान्पुलिने ॥ १०७ ॥

आत्मन्येवाधिगतं स्वात्मसुखं स्वयमुपास्थितं येन ।
विषयान्स संविहातुं सललिमशकत् किमत्र कथनीयम् ॥१०८॥

इदं कौतूहलादेव पार्थ सम्यग्विचारय ।
सुखैर्विषयसंभूतैः के भवन्ति विडम्बिताः ॥ १०९ ॥

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥

आत्मस्वरूपं न हि वीक्षितं यै-
रेष्विन्द्रियार्थेषु रतास्त एव ।
क्षुधातुरा ये हि भवन्ति रङ्काः
के वा ततोऽन्ये तुषभोजिनः स्युः ॥ ११० ॥

तृष्णातुरा मृगा भ्रान्त्या जलं विस्मृत्य वास्तवम् ।
तोयबुद्ध्यानुधावन्ति मूढा मरुमरीचिकाम् ॥ १११ ॥

---

सहजें स्वसुखाचेनि अपारें । सुरवाडलेंनि अंतरें । रचिला म्हणऊनि बाहिरें । पाउल न घली ॥ १०६ ॥ सांगें कमळाचेनि ताटें । जो जेविला चिंद्राकिरणें चोखटें । तो चकोरु काई वाळवंटें । चुंबितु असे ॥ १०७ ॥ तैसें अत्मसुख उपाइलें । जयांसि आपणपेंचि फावलें । तया विषयो सहज सांडवले । म्हणों काई ॥१०८ ॥ येऱ्हवीं तरी कौतुकें । विचारूनि पाहें पां निकें । या विषयांचेनि सुखें । झकविजति कवण ॥ १०९ ॥ जिहीं आपणपें नाहीं देखिलें । तेचि इहीं इंद्रियार्थी रंजले । जैसें रंकु कां आळुकैलें । तुषातें सेवी ॥ ११० ॥ ना तरी मृगें तृषापीडितें । संभ्रमें विसरोनि जळातें । मग तोयबुद्धी बरडीतें । ठाकूनि येती ॥ १११ ॥

आत्मरूपं न यैर्दृष्टं निर्विष्टं स्वसुखं न वा ।
तेषामेव विभान्तीमे विषया हृदयंगमाः ॥ ११२ ॥

अयुक्तं वक्तुमप्येवं विषया सुखदा इति ।
किं विद्युत्स्फुरणेनैव प्रकाशो जातु जायते ॥ ११३ ॥

यद्वातवर्षातपवारणाय
छायैव कल्पेत पयोधराणाम् ।
सौधैस्त्रिभूमैर्नु विनिर्मितैः किं
प्रयोजनं ब्रूहि तदा नराणाम् ॥ ११४ ॥

सुखदत्वं विषयाणां यदुच्यते विद्धि मोहमूलं तत् ।
मधुरः केन हि सुधिया विषकन्दो वत्सनाभ उच्येत॥११५॥

भौमो यथा मङ्गलनामधारी
जलाभिधाना मृगतृष्णिका वा ।
तथा सुखाख्या विषयानुभूतिः
पुष्णाति लोके विपरीतमर्थम् ॥ ११६ ॥

अस्तु तावदिदं ब्रूहि मूषकस्य सुखावहा ।
भुजङ्गमफणाच्छाया कीदृशीव भविष्यति ॥ ११७ ॥

---

तैसें आपणापें नाहीं दिठे । जयातें स्वसुखाचे सदा खरांटे । तयासीचि विषय हे गोमटे । आवडती ॥ १८२ ॥ एऱ्हवीं विषयीं सुख आहे । हें बोलणेंचिसारिखें नोहे । तरी विद्युत्स्फुरणें कां न पाहे । जगामाजीं ॥११३॥ सांगें वात वर्ष आतपु घरे । ऐसे अभ्रच्छायाचि जरी सरे । तरी त्रिमाळिकें धवळारें । करावीं कां ॥ ११४ ॥ म्हणोनि विषयसुख जें बोलिजे । तें नेणतां गा वायां जल्पिजे । जैसें महुर कां म्हणिजे । विषकंदातें ॥११५॥ ना तरी भौमा नाम मंगळु । रोहिणीतें म्हणती जळु । तैसा सुखप्रवादु वरळु । विषयिकु हा ॥ ११६ ॥ हे असो आघवी बोली । सांग पां सर्पफणीची साउली । ते शीतल होईल केतुली । मूषकासी ॥ ११७ ॥

चडिशस्थामिषं यावन्नैव मीनेन भक्षितम् ।
तावदेवानपायोऽसौ तथैव विषयैषिणः ॥ ११८ ॥
पाण्डुरोगे यथा पुष्टिस्तथैव विषया अमी ।
उद्वेगाय भवन्त्येव विरक्तानां दृशोक्षिताः ॥ ११९ ॥
अतो विषयभोगे यत्सुखं दुःखमवेहि तत् ।
साद्यन्तमेव मूर्खाणां गतिस्त्वन्या न विद्यते ॥ ११० ॥
अतद्विदो वराकास्ते विषयान्समुपासते ।
का जुगुप्सा कृमीणां स्यात्पूयपङ्कजुषां वद ॥ १२१ ॥
भेकास्ते हि कथं नाम जह्युर्विषयकर्दमम् ।
मीनैर्भोगजलत्यागः कर्तव्यस्तैः कथं वद ।
अहो दुःखजुषां तेषां दुःखमेव हि जीवनम् ॥ १२२ ॥
विषयेषु विरक्तिं चेज्जीवाः सर्वेऽपि जातु विभ्रीयुः ।
किं न भवेयुर्व्यर्था यावत्यो दुःखयोनयो जगति ॥ १२३ ॥

गर्भवासजनिमृत्युदुःखदो
मार्ग एष भुवि यः प्रवार्तितः ।
केन नाम वद वाह्यतामसौ
संततं कमपि विश्रमं विना ॥ १२४ ॥

---

जैसा आमिषकवळु पांडवा । मीनु न सेवी तंवचि बरवा । तैसा विषयसंगु आघवा । निभ्रांत जाणें ॥ ११८ ॥ हे विरक्तांचिये दिठी । जें न्याहाळिजे किरीटी । तैं पांडुरोगाचिये पुष्टी-- । सारिखें दिसे ॥ ११९ ॥ म्हणोनि विषयभोगीं जें सुख । तें साद्यंताचि जाण दुःख । परि काय कीजे मूर्ख । न सेवितां न सरे ॥ १२० ॥ ते अंतर नेणती बापुडे । म्हणोनि अगत्य सेवणें घडे । सांगें पूयपंकींचे किडे । काय चिळसी घेती ॥ १२१॥ तयां दुःखियां दुःखचि जिव्हार । ते विषयकर्दमींचे दर्दुर । ते भोगजळींचे जलचर । सांडिती केवीं ॥ १२२ ॥ आणि दुःखयोनि जिया आहाती । तिया निरर्थका तरी नव्हती । जरी विषयांवरी विरक्ति । धरिती जीव॥ १२३॥ ना तरी गर्भवासादि संकट । कां जन्ममरणींचे कष्ट । हे विसांवेवीण वाट । वाहवी कवणें ॥ १२४ ॥

त्यक्तेषु विषयासक्तैर्विषयेष्वखिलेष्वपि ।
महादोषैः क वस्तव्यं संसारे सार्थता च का ॥ १२५ ॥
अतो विषयदुःखं यैः सुखबुद्धयैव सेवितम् ।
मिथ्याभूतमविद्यादि सत्यं तैरेव दर्शितम् ॥ १२६ ॥

तस्मान्महावीर विचार्यमाणा
विभान्ति मेऽमी विषया विनिन्द्याः ।
कदापि मोहाद्विस्मृतोपदेशो
मा मार्गमेषामुररीकुरुष्व ॥ १२७ ॥

विषवद्विषयानेतान् विरक्ता वर्जयन्ति वै ।
दुःखरूपं निरीहेभ्यः सुखं तेभ्यो न रोचते ॥ १२८ ॥

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥

विषयाणां न वार्तापि नूनं ज्ञानिषु विद्यते ।
कामादयो विकारा हि देहस्थास्तैर्वशीकृताः ॥ ११९ ॥
एकं ब्रह्मसुखं येषामन्तरङ्गे कृतस्थिपि ।
बाह्यानां विषयाणां ते न कथामपि जानते ॥ १३० ॥

---

जरी विषयी विषयो सांडिजेल । तरी महादोषीं कें वसिजेल । आणि संसारु हा शब्दु नव्हेल । लटिका जगीं ॥ १२५ ॥ म्हणोनि अविद्याजात नाथिलें । तें तिहींचि साच दाविलें । जिहीं सुखबुद्धी घेतलें । विषयदुःख ॥ १२६ ॥ या कारणें गा सुभटा । हा विचारितां विषय वोखटा । तूं झणें कहीं या वाटा । विसरोनि जाशी ॥ १२७ ॥ पैं यातें विरक्त पुरुष । त्यजिती कां जैसें विष । निराशा तयां दुःख । दाविलें नावडे ॥ १२८ ॥ ज्ञानियांच्या हन ठायीं । याची मातुही कीर नाहीं । देहीं हेहभावो जिहीं । स्ववश केले ॥ १२९ ॥ जयांतें बाह्याची भाख । नेणिजेचि निःशेख । अंतरीं सुख । एक आथी ॥ १३० ॥

फलचुम्बिनो विहंगाः परिपाटीमाश्रयन्ति यां भोगे ।
ब्रह्मसुखं भुञ्जानास्ततस्तु भिन्नामुपाददते ॥
भोगं भोग्यं चैव हि भोक्तृत्वं चापि विस्मरन्त्येते ।
फलभोगे तु त्रिपुटी स्पष्टा स्याद् भोक्तृभोग्यभोगाख्या ॥१३१॥

भोगेऽस्मिन्न्या जायते कापि वृत्तिः
साहंकारं नाम दूरीकरोति ।

तस्मिन्नन्तर्धान उत्सारिते च
स्वैरं भुङ्क्ते सौख्यगाढोपगूढम् ॥ १३२ ॥

तदालिङ्गनसंयोगे स्वयमेवैकरूपता ।
घटते जलयोर्नाम मिथः संगतयोरिव ॥ १३३ ॥
नभोलीनेऽथवा वायौ न नभोऽनिलभिन्नता ।
सुखमेव च भोगेऽस्मिन् स्वरूपेणावशिष्यते ॥ १३४ ॥

एवं द्वैतकथायामस्तमितायां भवत्यैक्यम् ।
इति चेत्कोऽत्र नु साक्षी तज्जानञ् शिष्यते ब्रूहि ॥ १३५ ॥

---

परि तें वेगळेपणें भोगिजे । जैसें पक्षियें फळ चुंबिजे । तैसें नव्हे तेथ विसरिजे । भोगितेपणही ॥१३१॥ भोगीं अवस्था एक उठी । ते अहंकाराचा अंचेलु लोटी । मग सुखेंसि वे आंटी । गाढेपणें ॥१३२॥ तिये आलिंगनमेळीं । होय आपेंआप कवळी । तेथ जळ जैसें जळीं । वेगळें न दिसे ॥१३३॥ कां आकाशीं वायु हारपे । तेथ दोन्ही हे भाष लोपे । तैसें सुखाचि उरे स्वरूपें । सुरतीं तिये ॥१३४॥ ऐशी द्वैताची भाष जाये । मग म्हणों जरी एकचि होये । तरी तेथ साक्षी कवणु आहे । जाणतें जें ॥१३५॥

योन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥
लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥

आस्तामत इदं सर्वमनिर्वाच्यं किमुच्यताम् ।
आत्मारामा हि मर्मेदं वेदिष्यन्ति स्वभावतः ॥ १३६ ॥
य ईदक्सुखसंपन्नाः स्वस्वरूपे स्वयं रताः ।
सामरस्यमयान् साक्षात्पुत्तलान् वेद्मि तानहम् ॥ १३७ ॥
आनन्दस्यानुकाराः किं ते सुखस्य किमङ्कुराः ।
विहाराः किमु वा स्वार्थे महाबोधेन निर्मिताः ॥ १३८ ॥
किं नु ग्रामा विवेकस्य स्व-भावा नु परस्य किम् ।
ब्रह्मणो, ब्रह्मविद्याया भूषितावयवा नु किम् ॥ १३९ ॥
सात्त्विकाः शुद्धसत्त्वाः किं चैतन्यावयवा नु किम् ।
एतास्मिन् गुरुराह स्म कृतं वर्णनयानया ॥ १४० ॥

रमसे हि सतां स्तुतौ यदा
प्रकृतस्य स्मृतिमप्यपोहसि ।
वदतापि च नागरीं गिरं
विषयोऽन्यः प्रतिपाद्यते त्वया ॥ १४१ ॥

---

म्हणोनि असो हें आघवें । एथ न बोलणें काय बोलावें । तें खुणाचि पावेल स्वभावें । आत्माराम ॥१३६॥ जे ऐसेनि सुखें मातले । आपणपांचि आपण गुंतले । ते मी जाणें निखिळ वोतले । सामरस्याचे ॥१३७॥ ते आनंदाचे अनुकार । सुखाचे अंकुर । कीं महाबोधें विहार । केले जैसे ॥१३८॥ ते विवेकाचे गांव । कीं परब्रह्मींचे स्वभाव । ना तरी अळंकारले अवयव । ब्रह्मविद्येचे ॥१३९॥ ते सत्त्वाचे सात्त्विक । कीं चैतन्याचे अंगिक । हें बहु असो एकैक । वानिसी काई ॥ १४० ॥ तूं संतस्तवनीं रतसी । तरी कथेची से न करिसी । कीं निराळीं बोल देखसी । सनागर ॥१४१॥

स्तवौघमेनं तु नियम्य सांप्रतं
ग्रन्थार्थदीपोज्ज्वलनं विधीयताम् ।
हृन्मन्दिरं तेन सतां प्रकाशितं
ज्ञानोदयेन क्रियतां महामते ॥ १४२ ॥

एवं श्रीगुरुणा दासो निवृत्तेरभिभाषितः ।
अवोचच्छृणुतेदानीं श्रीकृष्णो यत्तदाभ्यधात् ॥ १४३ ॥

अनन्तसौख्यह्रद एव गाढे
निषेवितं यैस्तलमेव शश्वत् ।
तत्र स्वयं ते स्थिरतां व्रजन्त—
स्तदात्मतामर्जुन यान्ति नूनम् ॥ १४४ ॥

योऽमलात्मप्रकाशेन विश्वमात्मनि पश्यति ।
ब्रह्मीभूतः स मन्तव्यो देहोपाधिसमन्वितः ॥ १४५ ॥

ग्रामो ब्रह्मसुखाख्यो नूनं परमोऽक्षरोऽप्यमर्यादः ।
तत्राधिकारिणस्ते ये निष्कामाः स्वयं सन्ति ॥ १४६ ॥

रक्षितो यो महर्षिभ्यो विरक्ताः संविभागिनः ।
फलभाजः सदा यत्र नरा विगतसंशयाः ॥ १४७ ॥

---

परि तो रसातिशयो मुकुळीं । मग ग्रंथार्थदीपु उजळीं । करीं साधु-हृदयराउळीं । मंगळ उखा ॥१४२॥ ऐसा श्रीगुरूचा उवायिला । निवृत्ति-दासाशी पातला । मग तो म्हणे श्रीकृष्ण बोलिला । तेंचि आइका ॥१४३॥ अर्जुना अनंत सुखाच्या डोहीं । एकसरां तळुचि घेतला जिहीं । मग स्थिराऊनि तेहीं । तेंचि जाहले ॥१४४॥ अथवा आत्मप्रकाशें चोखें । जो आपणपेंचि विश्व देखे । तो देहेंचि परब्रह्म सुखें । मानूं येईल ॥१४५॥ जें साचोकारें परम । ना तें अक्षर निःसीम । जिये गांवींचे निष्काम । अधिकारिये ॥१४६॥ जें महर्षी वाढलें । विरक्तां भागा फिटलें । जें निःसंशया पिकलें । निरंतर ॥१४७॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥

आच्छिद्य विषयेभ्यो यैर्मन आत्मवशीकृतम् ।
लीना ब्रह्मस्वरूपे ते पुनश्चेतन्ति नैव तान् ॥ १४८ ॥

कैवल्यं यत्परब्रह्म यत्साध्यं चात्मवेदिनाम् ।
तांस्तदेव विजानीहि पुरुषान् पाण्डुनन्दन ॥ १४९ ॥

एवं ब्रह्मत्वमापन्नाः कथं देहभृतोऽपि ते ।
इति पृच्छसि चेत् सम्यक्कथयामि समासतः ॥ १५० ॥

स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥

अथ वैराग्यमालम्ब्य विषया यैर्बहिष्कृताः ।
मनः संहृत्य भोगेभ्यः शरीरे च स्थिरीकृतम् ॥ १५१ ॥

नाडीनां तिसृणां योगे भ्रूपल्लवसमागमे ।
स्थिरीकृत्य दृशं पश्चाद्वर्तयन्ति तथैव च ॥ १५२ ॥

---

जिहीं विषयापाशोनि हिरतलें । चित्त आपुलें आपण जितिलें । ते निश्चित जेथ सुतले । चेतीचि ना ॥ १४८ ॥ तें परब्रह्मनिर्वाण । जें आत्मविदांचें कारण । तेंचि ते पुरुष जाण । पांडुकुमरा ॥ १४९ ॥ ते ऐसे कैसेनि जहाले । जे देहींचि ब्रह्मत्वा आले । हें पुससी तरी भलें । संक्षेपें सांगों ॥ १५० ॥ तरी वैराग्याचेनि आधारें । जिहीं विषय दवडूनि बाहेरें । शरीरीं एकंदरें । केलें मन ॥ १५१ ॥ सहजें तिहीं संधीमेटी । जेथ भ्रूलतां पडे गांठी । तेथ पाठिमोरी दिठी । पालटोनियां ॥ १५२ ॥

नासापुटद्वयाद्वायुं गच्छन्तं संनिरुध्य वै।
प्राणापानौ समीकृत्य व्योमगं कुर्वते मनः ॥ १५३ ॥
पयोधिमुपयातायामुपगृह्याखिलान्यपि।
रथ्योदकानि गङ्गायां तद्विवेकः सुदुष्करः ॥ १५४ ॥
तथा मनोलये जाते वायुरोधाच्चिदम्बरे।
वासनानां विचारोऽपि स्वयमेव विलुप्यते ॥ १५५ ॥
अस्य संसारचित्रस्य प्रतिमा यत्र विस्फुटा।
पट एव मनोरूपः पाट्यते स्वयमेव सः।
कुतः सरोवरे शुष्के प्रतिबिम्बस्य दर्शनम् ॥ १५६ ॥
मनस्त्वे मनसो लीने काहंभावादिकं भवेत्।
ब्रह्मानुभवयुक्तोऽतो यो ब्रह्मैव स देहभृत् ॥ १५७ ॥

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९ ॥

प्राप्ता देहभृतोऽप्येव ब्रह्मत्वमिति वर्णिताः।
मया पूर्वं त एवापि पन्थानमिममाश्रिताः ॥ १५८ ॥

---

सांडूनि दक्षिण वाम। प्राणापान, सम। चित्तेंसीं व्योम-। गामिये करिती ॥ १५३ ॥ तेथ जैसीं रथ्योदकें सकळें। घेऊनि गंगा समुद्रीं मिळे। मग एकेक वेगळें। निवडूं नये " १५४ ॥ तैसी वासनांतराची विवंचना। मग आपैसी पारुखे अर्जुना। जे बेळीं गगनीं लयो मना। पवनें कीजे॥ १५५॥ जेथ हें संसारचित्र उमटे। तो मनोरूप पटु फाटे। जैसें सरोवर आटे। मग प्रतिमा नाहीं ॥ १५६ ॥ तैसें मन एथ मुद्दल जाये। मग अहंभावादिक कें आहे। म्हणोनि शरीरेंचि ब्रह्म होये। अनुभवी तो ॥ १५७ ॥ आम्हीं मागां हन सांगितलें। जे देहींचि ब्रह्मत्व पावले। ते येणें मार्गें आले। म्हणऊनियां ॥ १५८ ॥

यमनियमरूपशैलानभ्यासाब्धींश्च योगमार्गस्य ।
उल्लङ्घ्यैव प्राप्ता अत एवामी परं पारम् ॥ १५९ ॥

कृत्वा निर्लेपमात्मानं प्रपञ्चं परमार्थतः ।
निरूप्य च सतो रूपं तेऽभूवन् ब्रह्मणः स्वयम् ॥ १६० ॥

योगयुक्तेरभिप्रायमेवं कृष्णेन वर्णितम् ।
मर्मज्ञो विजयः श्रुत्वा परं विस्मयमागमत् ॥ १६१ ॥

भावं विज्ञाय पप्रच्छ सस्मितं शौरिरर्जुनम् ।
वाचा मम्मानया चित्तं किमेवं ते प्रसीदति ॥ १६२ ॥

ततोऽर्जुनोऽब्रवीद्देव परचित्तविदामसि ।
अग्रगण्यः सुविज्ञातो भावो मे मानसस्त्वया ॥ १६३ ॥

सुविचार्य मया देव यत्प्रष्टव्यं तदेव हि ।
ज्ञातपूर्वं त्वया भूयः प्रागुक्तं विशदीकुरु ॥ १६४ ॥

त्वया यो दर्शितः पन्थाः सुलभः सोऽन्यतः किल ।
दोर्भ्यां संतरणात् पद्भ्यां गमनं सलिले यथा ॥ १६५ ॥

---

आणि यमनियमांचे डोंगर । अभ्यासाचे सागर । क्रमोनि हे पार । पातले ते ॥ १५९ ॥ तिहीं आपणपें करूनि निर्लेप । प्रपंचाचें घेतलें माप । मग साच साचाचेंचि रूप । होऊनि ठेले ॥ १६० ॥ ऐसा योगयुक्तीचा उद्देशु । जेथ बोलिला हृषीकेशु । तेथ अर्जुनु सुदंशु । म्हणोनि चमत्कारला ॥ १६१ ॥ तें देखिलिया कृष्णें जाणितलें । मग हांसोनि पार्थातें म्हणितलें । काई पां चित्त उवाइलें । इये बोलीं तुझें ॥ १६२ ॥ तंव अर्जुन म्हणे देवो । परचित्तलक्षणांचा रावो । भला जाणितला जी भावो । मानसु माझा ॥ १६३ ॥ म्यां जें कांहीं विवरूनि पुसावें । तें आधींचि जाणितलें देवें । तरी बोलिलें तेंचि सांगावें । विवळ करूनि ॥ १६४ ॥ एऱ्हवीं तरी अवधारा । जो दाविला तुम्हीं अनुसारा । तो पव्हण्याहूनि पायउतारा । सोहपा जैसा ॥ १६५ ॥

सांख्यप्रोक्ताज्ज्ञानयोगात्सुसाध्यो
योगोऽष्टाङ्गो मादृशां दुर्बलानाम् ।
यद्यप्यस्मिन्दीर्घकालेन सिद्धि-
र्नूनं सोढुं शक्यतेऽयं विलम्बः ॥ १६६ ॥

उक्तपूर्वस्त्वया देव योगः स पुनरुच्यताम् ।
भूयान् भवतु विस्तारः कथ्यः साद्यन्त एव सः ॥ १६७ ॥

अभाणीत् कृष्ण एवं चेन्मार्गोऽयं भाति ते शुभः ।
का हानिर्ब्रुवतो मे स्याद् व्याचक्षेऽहं सुखं शृणु ॥ १६८ ॥

शृणोषि यदि पार्थ त्वं श्रुत्वा चाप्यनुतिष्ठसि ।
को हेतुर्वारयेदस्मान् ब्रुवतस्तेऽभिकाङ्क्षितम् ॥ १६९ ॥

प्रकृत्या हृदयं मातुः प्रेयांस्तत्र सुतो भिषम् ।
अद्भुतत्वं तदा वेद वात्सल्यस्य जनो नु कः ॥ १७० ॥

इयं तु कारुण्यरसस्य वृष्टिः
स्नेहस्य गण्या नु नवस्य सृष्टिः ।
आस्तामिदं दृष्टिरियं मुरारे-
र्न पार्यते वर्णयितुं यथावत् ॥ १७१ ॥

---

तैसा सांख्याहूनि प्रांजळा । आम्हांसारिखिया आभोळां । एथ आथी परि कांहीं काळा । तो साहों ये वरु ॥१६६॥ म्हणोनि एक वेळ देवा । तोचि पडताळा घेयावा । विस्तरेल तरी सांगावा । साद्यंतुचि ॥१६७॥ तंव श्रीकृष्ण म्हणती हो कां । तुज हा मार्गु गमला निका । तरी काय जाहलें आइकीजो कां । सुखें बोलों ॥१६८॥ अर्जुना तूं परिससी । परिसोनि अनुष्ठिसी । तरी आम्हांसीचि वानी कायसी । सांगावयाची ॥६९॥ आधींच चित्त मायेचें । वरी भिष जाहलें पढियंताचें । आतां तें अद्भुतपण स्नेहाचें । कवण जाणे ॥१७०॥ ते म्हणों कारुण्यरसाची वृष्टि । कीं नवया स्नेहाची सृष्टि । हें असो नेणिजे दृष्टी । हरीची वानूं ॥१७१॥

सुधया निर्मितेवेयं मत्ता वा प्रेमपानतः।
स्नेहमोहेऽर्जुनस्यातः सक्ता निर्गन्तुमक्षमा ॥ १७२ ॥
यथा यथाधिकं ब्रूयां कथोच्छेदस्तथा तथा।
अधिकः स्यान्न च स्नेहो वाचो विषयतां व्रजेत् ॥ १७३ ॥
विस्मयश्चात्र को वा स्याद्यो मानं वेद नात्मनः।
केनाकलयितुं नाम शक्यः स परमेश्वरः ॥ १७४ ॥
मन्येऽभिप्रायतो देवमर्जुनप्रेममोहितम्।
हठादिव यतो ब्रूते शृणु पार्थ सखे शृणु ॥ १७५ ॥
येन येन प्रकारेण बोधश्चित्ते तवोद्भवेत्।
कौतुकात्तेन तेनैव मार्गो दिश्येत तेऽर्जुन ॥ १७६ ॥
काभिधा तस्य योगस्य स वा स्यात्किंप्रयोजनः।
तस्येहाचरणे को वा पुरुषोऽधिकृतो भवेत् ॥ १७७ ॥
यद्यदत्रोचितं वक्तुं योगमुद्दिश्य किंचन।
तत्सर्वं कथयिष्यामि पश्येदानीं तवाग्रतः ॥ १७८ ॥

---

जे अमृताची वोतली। कीं प्रेमचि पिऊन मातली। म्हणोनि अर्जुनमोहें गुंतली। निघों नेणे ॥१७२॥ हें बहु जें जें जल्पिजेल। तेथें कथेसि फांकु होईल। परि तें स्नेहरूपा न येल। बोलवरी ॥ १७३ ॥ म्हणोनि विसुरा काय येणें। तो ईश्वरु कवळावा कवणें। जो आपुलें मान नेणे। आपणचि ॥ १७४ ॥ तरी मागिला ध्वनी आंतु। मज गमला सावियाची मोहितु। जे बलात्कारें असे म्हणतु। परिस बापा ॥ १७५ ॥ अर्जुना जेणें जेणें भेदें। तुझें कां चित्त बोधे। तैसें तैसें विनोदें। निरूपिजेल ॥१७६॥ तो काईसया नांव योगु। तयाचा कवण उपेगु। अथवा अधिकारप्रसंगु। कवणा येथ ॥१७७॥ ऐसें जें जें कांहीं। उक्त असे इये ठाईं। तें आघवेंचि पाहीं। सांगेन आतां ॥१७८॥

सावधानेन चित्तेन श्रोतव्यं तत्त्वयार्जुन।
इत्युक्त्वा हरिणाख्यातं यत्तदग्रे वदिष्यते ॥ १७९ ॥
वक्ष्यत्यसङ्गवर्जं योगं यं फाल्गुनं कृष्णः।
विवरिष्यते स विशदं मयेति निगदति निवृत्तिदासोऽयम् ॥१८०॥

[ इति श्रीज्ञानेश्वर्याः संस्कृतानुवादे पञ्चमोऽध्यायः ]

---

तूं चित्त देऊनि अवधारीं । ऐसें म्हणोनि श्रीहरि। बोलिजेल ते पुढारीं। कथा आहे ॥ ७९ ॥ श्रीकृष्ण अर्जुनासी संगु । न सांडोनि सांगेल योगु। तो व्यक्त करूं प्रसंगु । म्हणे निवृत्तिदासु ॥ १८० ॥

# संस्कृतज्ञानेश्वरी

## षष्ठोऽध्यायः

साभिप्रायं वदेत् कृष्णो यं योगं स निशम्यताम् ।
धृतराष्ट्रमुवाचेति वचनं संजयस्तदा ॥ १ ॥
नारायणेन पार्थस्य या ब्रह्मरसपारणा ।
विहिता तत्र दैवेनातिथित्वेन गता वयम् ॥ २ ॥
अहो सुदैवमस्माकं तृषितानां पिपासताम् ।
जलमेवामृतत्वेन यतः परिणतं किल ॥ ३ ॥
आवाभ्यां ननु संप्राप्तं ब्रह्मज्ञानं सुदुर्लभम् ।
आयासेन विनैवेदमिति राजन्मतिर्मम ।
धृतराष्ट्रस्तदाब्रूत नेदं संजय पृच्छ्यसे ॥ ४ ॥
निशम्येदं वचो राज्ञः संजयो ज्ञातवान् हृदा ।
पुत्रस्नेहाकुलं चित्तमभूदस्याधुना यथा ॥ ५ ॥
हसन् स्वगतमब्रूत भृशं मोहवशं गतः ।
प्रवया धृतराष्ट्रोऽयं संवादश्चैष सुन्दरः ॥ ६ ॥

---

मग रायातें म्हणे संजयो । तोचि अभिप्रावो अवधारिजो । कृष्ण सांगती आतां जो । योगरूप ॥ १ ॥ सहजें ब्रह्मरसाचें पारणें । केलें अर्जुनालागीं नारायणें । कीं तेचि अवसरीं पाहुणे । पातलों आम्हीं ॥२॥ कैसी दैवाची थोरी नेणिजे । जैसें तान्हेलिया तोय सेविजे । कीं तेंचि चवी करूनि पाहिजे । तंव अमृत आहे ॥ ३ ॥ तैसें आम्हांतुम्हां जाहलें । जे आडमुठीं तत्त्व फावलें । तंव धृतराष्ट्रें म्हणितलें । हें न पुसों तूतें ॥ ४ ॥ तया संजया येणें बोलें । रायाचें हृदय चोजवलें । जे अवसरीं आहे घेतलें । कुमरांचिया ॥ ५ ॥ हें जाणोनि मनीं हांसिला । म्हणे म्हतारा मोहें नाथिला । एऱ्हवीं बोलु तरी भला जाहला । अवसरीं इये ॥ ६ ॥

रोचेतायं कथं त्वस्मै प्रभा प्राभातिकी कुतः।
जात्यन्धस्याविमेच्चापि रोषं कुर्यादिति ब्रुवन् ॥ ७ ॥
तुतोष तु भृशं चित्ते स्वयमेवाथ संजयः।
श्रीकृष्णार्जुनसंवादं श्रुतपूर्वमनुस्मरन् ॥ ८ ॥
परानन्दजुषा चापि चेतसा सादरं वदेत्।
पुरतो धृतराष्ट्रस्य साभिप्रायं हरेर्वचः ॥ ९ ॥
सोऽयं प्रसङ्गो गीतायाः षष्ठाध्यायस्य पेशलः।
अवबोध्दुमिमं सम्यक् सुसूक्ष्मा धीरपेक्ष्यते ॥ १० ॥
विवेकाब्धेरयं पारो विवृतद्वार एव वा।
भाण्डागारः सुविस्तारो रुचिरो योगसम्पदः ॥ ११ ॥
विश्रामो मूलमायाया वेदवाग्यत्र कुण्ठिता।
गीतावल्लीप्ररोहाणामभिवृद्धिर्यतोऽभवत् ॥ १२ ॥
वर्ण्यते सोऽयमध्यायः षष्ठो गीतार्थसारभृत्।
सर्वसाहित्यसंपन्नः सावधानं निशम्यताम् ॥ १३ ॥

---

परि तें तैसें कैसेनि होईल। जात्यंधा कैंचें पाहेल। तेवींचि येरु से- येईल। म्हणोनि बिहे ॥ ७ ॥ परि आपण चित्तीं आपुला। निकियापरी संतोषला। जे तो संवादु फावला। कृष्णार्जुनाचा ॥८॥ तेणें आनंदाचेनि थालेपणें। साभिप्राय अंतःकरणें। आतां आदरेंसीं बोलणें। घडेल तया ॥ ९ ॥ तो गीतेमाजी षष्ठींचा। प्रसंगु असे आयणीचा। जैसा क्षीरार्णवीं अमृताचा। निवाडु जाहला ॥ १० ॥ तैसें गीतार्थाचें सार। जें विवेक-सिंधूचें पार। नानायोगविभवभांडार। उघडलें कां ॥ ११ ॥ जें आदि-प्रकृतीचें विसवणें। जें शब्दब्रह्मासि न बोलणें। जेथूनि गीतावल्लीचें ठाणें। प्ररोहो पावे ॥ १२ ॥ तो अध्याय सहावा। वरि साहित्याचिया बरवा। सांगिजेल म्हणोनि परिसावा। चित्त देउनी ॥ १३ ॥

कामं मे प्राकृता वाणी हृद्यां तु वचनावलीम् ।
एवंविधां विधास्यामि यत्सुधाप्यधरीभवेत् ॥ १४ ॥
मद्वचोमार्दवौपम्ये तुच्छं सप्तस्वरात्मकम् ।
गानं भवेन्मनोवेधे सुवासः स्यात्सुदुर्बलः ॥ १५ ॥
उत्पद्येरन्नहो जिह्वा रसलोभेन कर्णयोः ।
अन्योन्यं कलहायेरन्निन्द्रियाणि गिरानया ॥ १६ ॥

श्रोत्रस्य शब्दो विषयः स्वभावा-
ज्जिह्वा तु तं स्वं रसमाब्रुवीत ।
घ्राणेन गन्धो यदि लिप्सितोऽस्मात्
तदा भवेदेव सुवासदायी ॥ १७ ॥

सरार्णि वचसश्चित्रामिमां वीक्ष्यैव तप्स्यतः ।
मंस्येते विवृतां रूपखनिमेनां च चक्षुषी ॥ १८ ॥
पूर्णं वाक्यं विनिर्यातं मे मुखादुपगूहितुम् ।
हृदयं बहिरागच्छेत् कृत्वा बाहू प्रसारितौ ॥ १९ ॥
स्वस्वभावैः समं शब्दे सङ्क्षन्त्येवेन्द्रियाणि मे ।
सोऽप्यमूनि समत्वेन सर्वाणि सुखयिष्यति ॥ २० ॥

---

माझा मराठाचि बोलु कौतुकें । परि अमृतातेंही पैजां जिंके । ऐसीं अक्षरें रसिकें । मेळवीन ॥ १४ ॥ जिये कोंवळिकेचेनि पाडें । दिसती नादींचे रंग थोडे । वेधें परिमळाचें बीक मोडे । जयाचेनि ॥ १५ ॥ ऐका रसाळपणाचिया लोभा । कीं श्रवणींचि होती जिभा । बोलें इंद्रियां लागे कळंभा । एकमेकां ॥ १६ ॥ सहजें शब्दु तरी विषो श्रवणाचा । परि रसना म्हणे रसु हा आमुचा । घ्राणासि भावो जाय परिमळाचा । हा तोचि होईल ॥ १७ ॥ नवल बोलतीये रेखेची वाहणी । देखतां डोळयांही पुरों लागे धणी । ते म्हणती उघडली खाणी । रूपाची हे ॥ १८ ॥ जेथ संपूर्ण पद उभारे । तेथ मनाचि धांवे बाहिरें । बोलु भुजांहीं आविष्करे । आलिंगावया ॥ १९ ॥ ऐसीं इंद्रियें आपुलालिया भावीं । झोंबती परि तो सरिसेपणेंचि बुझावी । जैसा एकला जग चेववी । सहस्रकरु ॥ २० ॥

सहस्रकर एकोऽपि बोधयत्यखिलं जगत् ।
शब्दस्यापि तथा व्याप्तिरसामान्यावधार्यताम् ।
द्रक्ष्यन्ते चात्र भावज्ञैर्नूनं चिन्तामणेर्गुणाः ॥ २१ ॥
शब्दपात्रेषु कैवल्यरसमाधाय भोजनम् ।
शुभेषु विततेष्वेतन्निष्कामेभ्यो मयार्पितम् ॥ २२ ॥
आत्मप्रभां नवां नित्यं विधाय स्थानदीपिकाम् ।
इन्द्रियाणां परोक्षं यस्तत्प्रकाशेऽपि चोरवत् ।
भोक्तुं वेत्ति स एवात्र कैवल्यरसमश्नुते ॥ २३ ॥
भोक्तुकामैरिदं नाम श्रोतृभिः शब्दभोजनम् ।
न श्रोत्रापेक्षिभिर्भाव्यं भोक्तव्यं मनसैव तु ॥ २४ ॥
शब्दरूपां त्वचां सूक्ष्मामपास्य ज्ञानकामुकैः ।
अर्थरूपं तदन्तःस्थं ब्रह्मैवासेव्यमञ्जसा ।
तल्लीनैश्च तदा भोग्यं सुखेनैव सुखं परम् ॥ २५ ॥
धियः सूक्ष्मत्वमीदृक् चेद् ब्रुवन्स्यां सफलश्रमः ।
नो चेन्मूकस्य मे वाणी युष्माभिर्बधिरैः श्रुता ॥ २६ ॥

---

तैसें शब्दाचें व्यापकपण । देखिजे असाधारण । पाहातयां भावज्ञां फावती गुण । चिंतामणीचे ॥ २१ ॥ हें असो तया बोलांचीं ताटें भलीं । वरी कैवल्यरसें वोगरिलीं । ही प्रतिपत्ति मियां केली । निष्कामासी ॥२२॥ आतां आत्मप्रभा नित्य नवी । तेचि करूनि ठाणदिवी । जो इंद्रियांतें चोरूनि जेवी । तयासीचि फावे ॥ २३ ॥ येथ श्रवणाचेनि पांगें- । वीण श्रोतयां व्हावें लागे । हे मनाचेनि निजांगें । भोगिजे गा ॥ २४ ॥ आहाच बोलाची वालीफ फेडिजे । आणि ब्रह्माचियाचि आंगा घाडिजे । मग सुखेंसीं सुरवाडिजे । सुखाचिमाजी ॥ २५ ॥ ऐसें हळुवारपण जरी येईल । तरीच हे उपेगा जाईल । एऱ्हवीं आघवी गोष्टी होईल । मुकया-बहिरयाची ॥ २६ ॥

अस्तु तावदिदं सर्वं का श्रोतृषु कदर्थना ।
ये स्वभावाद्धि निष्कामास्त एवात्राधिकारिणः ॥ २७ ॥
आत्मबोधाभिरुच्या यैरैहिकं पारलौकिकम् ।
सुखं त्यक्तं त एवात्र रसं जानन्ति नेतरे ॥ २८ ॥
न चन्द्रं जानते काकाश्चकोरा भुञ्जते पुनः ।
न विदुः प्राकृता गीतां ज्ञानिनो रसयन्ति तु ॥ २९ ॥
रमन्ते ज्ञानिनो यत्र तत्रान्ये विरतोत्सवाः ।
अतोऽत्र विषये कोऽपि भूयसोक्तेन नो गुणः ॥ ३० ॥
यत्प्रसङ्गवशादुक्तं सद्भिः क्षन्तव्यमेव तत् ।
यदुक्तं यदुनाथेन तत्संप्रत्यभिधीयते ॥ ३१ ॥
धियोऽपि विषयातीतं वाचा दुर्वर्ण्यमेव तत् ।
निवृत्तेस्तु कृपादीपः क्षमो ह्यर्थप्रकाशने ॥ ३२ ॥

अतीन्द्रियज्ञानबलं यदाहु-
र्लभ्येत तच्चेन्मनुजेन साक्षात् ।
दृशोऽपि यद्गोचर एव नास्ति
दृश्येत तन्नाम दृशा विनैव ॥ ३३ ॥

---

परि तें असो आतां आघवें । न लगे श्रोतयांतें कडसावें । जे अधिकारिये एथ स्वभावें । निष्कामकामु ॥ २७ ॥ जिहीं आत्मबोधाचिया आवडी । केली स्वर्गसंसाराची कुरोंडी । तेवांचूनि एथींची गोडी । नेणती आणिक ॥ २८ ॥ जैसा वायसीं चंद्र नोळाखिजे । तैसा प्राकृतीं ग्रंथु हा नेणिजे । आणि तो हिमांशुचि जेविं खाजें । चकोराचें ॥ २९ ॥ तैसा सज्ञानासी तरी हा ठावो । आणि अज्ञानासी आन गांवो । म्हणोनि बोलावया विषय पहा हो । विशेषु नाहीं ॥ ३० ॥ परि अनुवादलों मी प्रसंगें । तें सज्जनीं सपहासावें लागे । आतां सांगेन काय श्रीरंगें । निरोपिलें जें ॥ ३१ ॥ तें बुद्धीही आकळितां सांकडें । म्हणऊनि बोलीं बिपायें सांपडे । परि श्रीनिवृत्तिकृपादीप उजियेडें । देखेन मी ॥ ३२ ॥ जें दिठीही न पविजे । तें दिठीविण देखिजे । जरी अतींद्रिय लाहिजे । ज्ञानबळ ॥ ३३ ॥

शक्यते नैव यल्लब्धुं स्वर्णं सिद्धिवशादपि।
अवाप्यं लोह एवापि तत् स्पर्शोपलपाणिना ॥ ३४ ॥
सद्गुरोः कृपया तद्वद् यत्नसाध्यं न किं भुवि।
सा त्वपारैव मय्यस्तीत्येवं मे निश्चिता मतिः ॥ ३५ ॥
तयैव कृपया व्याख्यां करिष्याम्यहमीदृशीम्।
दर्शयिष्याम्यरूपस्य रूपं वाचैव केवलम्।
इन्द्रियैर्ग्राहयिष्यामि वस्त्वतीन्द्रियमप्यहो ॥ ३६ ॥
ऐश्वर्यौदार्यवैराग्ययशःश्रीज्ञानसंज्ञकाः।
षड्गुणाः सकला यस्मिन् वसन्तीति य उच्यते ॥ ३७ ॥
भगवान् यः सहायोऽस्ति निःसङ्गानां च सोऽब्रवीत्।
मद्वचःश्रवणे पार्थ दत्तचित्तो भवाधुना ॥ ३८ ॥

श्रीभगवानुवाच—

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।
स संन्यासी च योगी च न निरग्निर्नचाक्रियः ॥ १ ॥

न कोऽपि भेदो भुवि योगिनां च
संन्यासिनां चेत्यवगच्छ पार्थ।
यत्तत्त्वतोऽर्थेऽत्र विचार्यमाणे
त एकरूपा उभयेऽपि सन्ति ॥ ३९ ॥

---

ना तरी जें धातुवादियांही न जोडे । तें लोहींचि पंधरें सांपडे । जरी दैवयोगें चढे । परिसु हाता ॥ ३४ ॥ तैसी गुरुकृपा होये । तरी करितां काय आपु नोहे । म्हणऊनि अपार मातें आहे । ज्ञानदेवो म्हणे ॥ ३५ ॥ तेणें कारणें मी बोलेन । बोलीं अरूपाचें रूप दावीन । अतींद्रिय परि भोगवीन । इंद्रियांकरवीं ॥ ३६ ॥ आइका यश श्री औदार्य । ज्ञान वैराग्य ऐश्वर्य । हे साही गुणवर्य । वसती जेथ ॥ ३७ ॥ म्हणोनि तो भगवंतु । जो निःसंगाचा सांगातु । तो म्हणे पार्था दत्तचित्तु । होईं आतां ॥ ३८ ॥ आइकें योगी आणि संन्यासी जनीं । हे एकचि सिनाने झणें मानीं । एऱ्हवीं विचारिजतीं जंव दोन्ही । तंव एकचि ते ॥ ३९ ॥

नामभेदेन भिन्नत्वे भासमाने निराकृते ।
योगसंन्यासयोरैक्यं तत्त्वतो ब्रह्मरूपिणोः ॥ ४० ॥

वैविध्येन यथा कश्चिन्नाम्नः संबोध्यते पुमान् ।
द्वौ मार्गावुपतिष्ठेते एकमेव स्थलं यथा ॥ ४१ ॥

वारिणा वा यथैकेन भ्रियेते द्वौ घटौ पृथक् ।
तादृश्येवावबोद्धव्या योगसंन्यासयोर्भिदा ॥ ४२ ॥

पश्यात्र लोकेऽर्जुन सर्वसंमतः
स एव योगी परमार्थतः पुमान् ।
कृत्वापि कर्माणि फलाभिलाषुको
यः खिद्यते नैव कदाचिदेव ॥ ४३ ॥

जनयन्ती प्रकृत्यैव वृक्षादीन्निरहंकृतिः ।
तदुद्भवं फलं जातु मही नापेक्षते यथा ॥ ४४ ॥

तथान्वयानुसारेण प्राप्तकालं यदेव यत् ।
अनुरूपं च यज्जातेः कुरुते तद्यथाविधि ॥ ४५ ॥

देहे कर्तृत्वबुद्धिं तु न बिभर्ति कदाचन ।
तनुते फललाभे च वासनां न मनागपि ॥ ४६ ॥

---

सांडिजे दुजया नामाचा आभासु । तरी योगु तोचि संन्यासु । पाहतां ब्रह्मीं नाहीं अवकाशु । दोहींमाजीं ॥ ४० ॥ जैसें नामाचेनि अनारिसेंपणें । एका पुरुषातें बोलावणें । कां दोहीं मार्गीं जाणें । एकाचि ठाया ॥ ४१ ॥ ना तरी एकाचि उदक सहजें । परि सिनाना घटीं भरिजे । तैसें भिन्नत्व जाणिजे । योगसंन्यासांचें ॥ ४२ ॥ आइकें सकळ संमतें जगीं । अर्जुना गा तोचि योगी । जो कर्म करूनि रागी । नोहेचि फळीं ॥ ४३ ॥ जैसी मही हे उद्भिजें । जनी अहंबुद्धीवीण सहजें । आणि तेथींचीं तियें बीजें । अपेक्षीना ॥ ४४ ॥ तैसा अन्वयाचेनि आधारें । जातीचेनि अनुकारें । जें जेणें अवसरें । करणें पावे ॥ ४५ ॥ तें तैसेंचि उचित करी । परी साटोपु नोहे शरीरीं । आणि बुद्धिही करोनि फळवेरीं । जायेचिना ॥ ४६ ॥

स एव किल संन्यासी शृणु पार्थ य ईदृशः ।
तमेव च विजानीहि योगिराजमसंशयम् ॥ ४७ ॥
बन्धनाय भवन्तीति नित्यनैमित्तिकाः क्रियाः ।
यस्त्यजन् रभते काश्चिदितराः सद्य एव हि ॥ ४८ ॥
लेपमेकं स आक्षाल्य प्रयुङ्क्तेऽनुपदं परम् ।
वृथा च सहते क्लेशं दुराग्रहवशंवदः ॥ ४९ ॥
सहजं साध्वनिस्तीर्य गार्हस्थ्यं स शिरःस्थितम् ।
ऊरीकरोति संन्यासं सह तेनैव दुर्धरम् ॥ ५० ॥
अग्निसेवामतोऽत्यक्त्वा मर्यादामनतीत्य च ।
कर्मणोऽवस्थितो योगसुखं स्वयमुपाश्नुते ॥ ५१ ॥

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥

यः संन्यासी स एवेह योगीत्यत्रैकवाक्यता- ।
ध्वजः समुच्छ्रितः शास्त्रैरनेकैरवलोक्यताम् ॥ ५२ ॥

---

ऐसा तोचि संन्यासी । पार्था गा परियेसीं । तोचि भरंवसेनिसीं । योगीश्वरु ॥ ४७ ॥ वांचूनि उचित कर्म प्रासंगिक । तयातें म्हणे हें सांडावें बद्धक । तरी टांकोटांकीं आणिक एक । मांडीचि तो ॥ ४८ ॥ जैसा क्षाळूनियां लेपु एकु । सवेंचि लाविजे आणिकु । तैसेनि आग्रहाचा पाइकु । विचंबे वायां ॥ ४९ ॥ गृहस्थाश्रमाचें वोझें । कपाळीं आधींचि आहे सहजें । कीं तेंचि संन्यासासवा ठेविजे । सरिसें पुढती ॥ ५० ॥ म्हणूनि अग्निसेवा न सांडितां । कर्माची रेखा नोलांडितां । आहे योगसुख स्वभावता । आपणपांचि ॥ ५१ ॥ ऐकें संन्यासी तोचि योगी । ऐसी एकवाक्यतेची जगीं । गुढी उभविली अनेगीं । शास्त्रांतरीं ॥ ५२ ॥

संकल्पो यत्र संन्यस्तः सर्वथैव विनश्यति ।
आप्यते योगसर्वस्वं तत्रैवेत्यनुभूयते ॥ ५३ ॥

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

शिखरं योगशैलस्य यः पुमानारुरुक्षति ।
न कर्मपथसोपानं विहातुं तेन युज्यते ॥ ५४ ॥

यमैश्च नियमैश्चापि येन्द्रियाणां नियन्त्रणा ।
गिरेरुपत्यका सास्य पथानेनोपलभ्यते ॥

तत आसनरूपा या पद्या तां प्रतिपद्य च ।
प्राणायामेन कटकेनारुह्यारुह्य गम्यते ॥ ५५ ॥

ततोऽर्धत्रुटितो मार्गः प्रत्याहारः सुदुर्गमः ।
धीरस्थिरपदा यत्र भग्नाश्च हठयोगिनः ॥ ५६ ॥

प्रत्याहारं निरालम्बमन्तरालं शनैः शनैः ।
वैराग्यं क्षममारोढुमभ्यासबलसंश्रयात् ॥ ५७ ॥

---

जेथ संन्यासिला संकल्पु तुटे । तेथाचि योगाचें सार भेटे । ऐसें हें अनुभवाचेनि घटें । साचें जया ॥ ५३ ॥ आतां योगाचळाचा निमथा । जरी ठाकावा आथी पार्था । तरी सोपाना या कर्मपथा । चुकां झणीं ॥ ५४ ॥ येणें यमनियमाचेनि तळवटें । रिगे आसनाचिये पाउलवाटे । येई प्राणायामाचेनि आडकंठें । वरौता गा ॥ ५५ ॥ मग प्रत्याहाराचा अधाडा । जो बुद्धीचियाहि पायां निसरडा । जेथ हटिये सांडिती होडा । कडेलग ॥ ५६ ॥ तरी अभ्यासाचेनि बळें । प्रत्याहारीं निराळें । नखी लागेल ढाळेंढाळें । वैराग्याची ॥ ५७ ॥

एवं पवनमारूढ आक्रामन्धारणापथम् ।
स आस्ते यावदत्येति शिखरं ध्यानरूपकम् ॥ ५८ ॥

तस्यात्र मार्गक्रमणे प्रशान्ते
विराममायाति मनःप्रवृत्तिः ।
ब्रह्मैकभावे च विराजमाने
विलीयते साधनसाध्यभेदः ॥ ५९ ॥

पदं निधेयं न पुरोऽस्ति यत्र
विलुप्यते च स्मृतिराहितस्य ।
एवंविधायां समभूमिकायां
स्थितिं समाधिः सततं बिभर्ति ॥ ६० ॥

एतैरुपायैः परिपूर्णतां यो
योगप्रवीणो नितरामुपैति ।
तस्याधुनाहं किल लक्षणानि
सनिर्णयं ते कथयामि पार्थ ॥ ६१ ॥

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

विषया यातायातं वितन्वते यस्य नेन्द्रियागारे ।
यश्चात्मबोधवेश्मनि सुखसुप्तो भवति विश्रमापेक्षी ॥ ६२ ॥

---

ऐसा पवनाचेनि पाठारें । येतां धारणेचेनि पैसारें । क्रमी ध्यानाचें चवरें । सांपडे तंव ॥ ५८ ॥ मग तया मार्गाची धांव । पुरेल प्रवृत्तीची हांव । जेथ साध्या साधना खेंव । समरसें होय ॥ ५९ ॥ जेथ पुढील पैस पारुखे । मागील स्मरावें तें ठाके । ऐसिये सरिसीये भूमिके । समाधि राहे ॥ ६० ॥ येणें उपायें योगरूढु । जो निरवधि झाला प्रौढु । तयाचिया चिन्हांचा निवाडु । सांगेन आइकें ॥ ६१ ॥ तरी जयाचिया इंद्रियांचिया घरा । नाहीं विषयांचिया येरझारा । जो आत्मबोधाच्या वोवरां । पहुडला असे ॥ ६२ ॥

यस्य मनः सुखदुःखैः स्वयमुपहतमपि न बुध्यते जातु।
विषयेष्वासन्नेष्वपि किमिदमिति स्मृतिरुदेति नो यस्य ६३

सकलेपीन्द्रियवर्गे कर्मानुष्ठानतत्परे सततम्।
हृदये यस्य फलेहा पदं न कुरुते कदाप्येव ॥ ६४ ॥

देहधरः सन्नपि यश्चेतयमानोऽपि निद्रितो भाति।
सम्यग्योगारूढं तमेव जानीहि तत्त्वतः पार्थ ॥ ६५ ॥

अथार्जुनोऽभाषत भो अनन्त
वचस्तवेदं मम विस्मयाय।
आख्याहि मे योगिनि को नु तस्मि-
न्नेताहशं गौरवमादधाति ॥ ६६ ॥

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥

तदा सस्मितं कृष्ण एवं बभाषे
तवेदं वचो मे न किं विस्मयाय।
इहाद्वैतभूते समस्तेऽपि लोके
प्रदेयं नु किं केन कस्मै कदापि ॥ ६७ ॥

---

जयाचें सुखदुःखाचेनि आंगें। झगटलें मानस चेवो नेघे। विषय पासींही आलिया से न रिघे। हें काय म्हणऊनि ॥ ६३ ॥ इंद्रियें कर्माच्या ठायीं। वाढीनलीं परि कहीं। फळहेतूची चाड नाहीं। अंतःकरणीं ॥ ६४ ॥ असतेनि देहें एतुला। जो चेतुचि दिसे निदेला। तोचि योगारूढु भला। वोळखें तूं ॥ ६५ ॥ तेथ अर्जुन म्हणे अनंता। हें मज विस्मो बहु आइकतां। सांगें तया ऐसी योग्यता। कवणें दीजे ॥ ६६ ॥ तंव हांसोनि श्रीकृष्ण म्हणे। तुझें नवल ना हें बोलणें। कवणासि काय दिजेल कवणें। अद्वैतीं इये ॥ ६७ ॥

भ्रान्तिशय्याश्रितो जीवो निद्रितः सन्नविद्यया ।
भुङ्क्ते प्रबलया जन्ममृत्युदुःस्वप्नसंततिम् ॥ ६८ ॥
ततोऽकस्मात् प्रबुद्धस्य स्वप्नवैयर्थ्यवेदिनः ।
सद्भावो जायते योऽसौ स्वतः स्वस्मिन्प्रवर्तते ॥ ६९ ॥
वृथा देहाभिमानेन तस्मादेव धनंजय ।
संप्रवर्तामहे घाते स्वयमेवात्मनो वयम् ॥ ७० ॥

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

अहंकारमिमं त्यक्त्वा सुविचार्य धनंजय ।
सत्स्वरूपं परिज्ञाय ब्रह्मीभावं व्रजेम चेत् ।
तदास्माकं स्वास्तिमत्त्वं स्वतः सिद्धं भवेन्न किम् ॥ ७१ ॥
आत्मबुद्धिं शरीरे यस्तनुते चारुदर्शने ।
स स्वयं जायते वैरी कोशकीट इवात्मनः ॥ ७२ ॥
लाभकालेऽपि दुर्भाग्यःकिलान्धत्वमभीप्सति ।
यदसावात्मनो नेत्रे पिदधाति सती अपि ॥ ७३ ॥

---

पैं व्यामोहाचिये शेजे । बळिया अविद्या निद्रितु होइजे । ते वेळीं दुःस्वप्न हा भोगिजे । जन्ममृत्यूंचा ॥ ६८ ॥ पाठीं अवसांत ये चेवो । तैं तें अवघेंचि होय वावो । ऐसा उपजे नित्य सद्भावो । तोहि आपणपांचि ॥ ६९ ॥ म्हणऊनि आपणचि आपणया । घातु कीजतु असे धनंजया । चित्त देऊनि नायिलिया । देहाभिमाना ॥ ७० ॥ हा विचारूनि अहंकार सांडिजे । मग असदींच वस्तु होइजे । तरी आपुली स्वस्ति सहजें । आपण केली ॥ ७१ ॥ एऱ्हवीं कोशकीटकाचियापरी । तो आपणयां आपण वैरी जो आत्मबुद्धिशरीरीं । चारुस्थळीं ॥ ७२ ॥ कैसे प्राप्तीचिये वेळे । निदैवा आंधळेपणाचे डोहळे । कीं असते आपुले डोळे । आपण झांकी ॥ ७३ ॥

अहो नाहमहं केनाप्यन्येनैवास्मि चोरितः ।
इत्युन्मत्तो ब्रुवन् कश्चिन्न जहाति स्वमाग्रहम् ॥ ७४ ॥
वस्तुतस्त्वधुना सोऽस्ति तथा पूर्वमभूद्यथा ।
का गतिस्तु तथाभावस्तस्य नोदेति यद् हृदि ।
खड्गेन प्रहतः स्वप्ने सत्यमेव म्रियेत कः ॥ ७५ ॥
भ्रमन्तीं देहभारेण नलिकामत्यजञ् शुकः ।
पतेयामिति भीत्यैव विवृतं कुरुते मुखम् ॥ ७६ ॥
वृथैव वलयन् ग्रीवामुरसाकुञ्चितेन सः ।
नलिकां दृढमालिङ्ग्य सक्ताङ्घ्रिस्तत्र तिष्ठति ॥ ७७ ॥
सत्यमेवास्मि बद्धोऽहमिति भावनयाधिकम् ।
सञ्जयत्यात्मनो मुक्तमङ्घ्रिमन्यमपि स्वयम् ॥ ७८ ॥
वृथैवं वद रुद्धोऽसौ केन प्रापितबन्धनः ।
नीयमानोऽर्धकृत्तोऽपि नलिकां न जहाति ताम् ॥ ७९ ॥
अतो वर्धितसंकल्पो रिपुरेवात्मनः स्वयम् ।
देहाभिमानशून्यस्तु स्वयंबुद्धिरुदाहृतः ॥ ८० ॥

---

कां कवण एकु भ्रमलेपणें । मी तो नव्हें गा चोरलों म्हणे । ऐसा नाथिला छंदु अंतःकरणें । घेऊनि ठाके ॥ ७४ ॥ एरवीं होय तें तोचि आहे । परि काई कीजे बुद्धि तैसी नोहे । देखा स्वप्नींचेनि घायें । कीं मरे साचें ॥ ७५ ॥ जैसी ते शुकाचेनि आंगभारें । नळिका भोंविन्नली एरी मोहरे । तेणें उडावें परि न पुरे । मनशंका ॥ ७६ ॥ वायांचि मान पिळी अटुवें हियें आंवळी । टिटांतु नळी । धरूनि ठाके ॥ ७७ ॥ म्हणे बांधला मी फुडा । ऐसिया भावनेचिया पडे खोडां । कीं मोकळिया पायांचा चवडा । गोंवी अधिकें ॥ ७८ ॥ ऐसा काजेंवीण आंतुडला । तो सांग पां काय आणिकें बांधला । मग न सोडीच जऱ्ही नेला । तोडूनि अर्धा ॥ ७९ ॥ म्हणऊनि आपणयां आपणचि रिपु । जेणें वाढविला हा संकल्पु । येर स्वयंबुद्धि म्हणे बापु । जो नाथिलें नेघे ॥ ८० ॥

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकांचनः ॥ ८ ॥

निवृत्ता सर्वकामेच्छा यस्य पुंसो जितात्मनः ।
परतः परमात्मास्य नेदृशस्यापि दूरतः ॥ ८१ ॥
अशुद्धं शुद्धतां याति हेम तापितमग्निना ।
तथा विलुप्तसंकल्पो जीवो ब्रह्मत्वमश्नुते ॥ ८२ ॥
घटनाशे घटाकाशं महाकाशे विलीयते ।
न च गन्तव्यमन्यत्र तेन तद्रूपलब्धये ॥ ८३ ॥
देहाहंता तथा यस्य समूलं विलयं गता ।
स स्वयं परमात्मैव सदा सर्वत्र संचितः ॥ ८४ ॥
तस्य शीतोष्णभेदो न नान्तरं सुखदुःखयोः ।
मानापमानबुद्धिश्च नैव तस्मिन् प्रवर्तते ॥ ८५ ॥
यो यो देशो भानुनाक्रम्यतेऽत्र
तावान् सर्वो भास्यते तस्य भासा ।
तद्वत् प्राप्तं सर्वमप्येव तस्य
ब्रह्मात्मत्वाद् ब्रह्मरूपं विभाति ॥ ८६ ॥

---

तया स्वांतःकरणजिता । सकळकामोपशांता । परमात्मा परौता । दूर नाहीं ॥ ८१ ॥ जैसा किडाळाचा दोषु जाये । तरी पंघरें तेंचि होये । तैसें जीवा ब्रह्मत्व आहे । संकल्पळोपीं ॥ ८२ ॥ हा घटाकारु जैसा । निमालिया तया अवकाशा । नलगे मिळों जाणें आकाशा । आना ठाया ॥ ८३ ॥ तैसा देहाहंकारु नाथिला । हा समूळ जयाचा नाशिला । तोचि परमात्मा संचला । आधींचि आहे ॥ ८४ ॥ आतां शीतोष्णाचिया वाहणी । तेथ सुखदुःखाची कडसणी । इये न समाती कांहीं बोलणीं । मानापमानाचीं ॥८५॥ जे जिये वाटा सूर्य मानापनाचा जाये । तेउतें तेजाचें विश्व होये तैसें तया पावे तें आहे । तोचि म्हणउनी ॥ ८६ ॥

मेघैर्मुक्ताः स्थूलपर्जन्यधाराः ।
क्षाराम्भोधिं किं कदाचित्तुदन्ति ।
ब्रह्मीभूते नाशुभं वा शुभं वा
किंचित्सास्यात्कल्पते विक्रियायै ॥ ८७ ॥

जगन्मिथ्येति निर्णीते सत्यं ज्ञानं गवेषयन् ।
अहं ज्ञानस्वरूपोऽस्मि स्त्रयमित्यवगच्छति ॥ ८८ ॥

व्यापकोऽव्यापको वाहमित्यूहापोहलालसा ।
प्रकृत्या विरमत्यस्य द्वैतभावनिरासतः ॥ ८९ ॥

एवं येनेन्द्रियग्रामो जितो देहभृता सता ।
परब्रह्मोपमत्वाय योऽनायासेन कल्पते ॥ ९० ॥

जितेन्द्रियं तमेवाहुर्योगयुक्तः स एव च ।
न हि प्रतीयते तेन भेदो लघुगुरुत्वजः ॥ ९१ ॥

मेरुतुङ्गं चयं हेम्नो मृदः खण्डं तथैव च ।
उभावपि समावेव मन्यतेऽसौ न संशयः ॥ ९२ ॥

वसुधाप्यल्पमूल्या स्याद्यस्यौपम्येन सर्वथा ।
ईदृशं मनुते रत्नमश्ममात्रं स निःस्पृहः ॥ ९३ ॥

---

देखें मेघौनि सुटती धारा । तिया न रुपती जैसिया सागरा । तैसीं शुभाशुभें योगीश्वरा । नव्हती आनें ॥ ८७ ॥ जो हा विज्ञानात्मकु भावो। तया विवरितां जाहला वावो। मग लागला जंव पाहों । तव ज्ञान तें तोचि ॥ ८८ ॥ आतां व्यापकु कीं एकदेशी । हे ऊहापोही जे ऐसी । ते करावी ठेली आपैशी । दुजेनवीण ॥ ८९ ॥ ऐसा शरीरीचि परि कौतुकें । परब्रह्माचेनि पाडें तुके । जेणें जिंतलीं एकें । इंद्रियें गा ॥ ९० ॥ तो जितेंद्रियु सहजें । तोचि योगयुक्त म्हाणिजे । जेणें सानें थोर नेणिजे । कवणे काळीं ॥ ९१ ॥ देखें सोनयाचें निखळ | मेरुयेवढें ढिसाळ । आणि मातियेचें ढिखळ । सरिसेंचि मानी ॥ ९२ ॥ पाहतां पृथ्वीचें मोल थोडें । ऐसें अनर्घ्य रत्न चोखडें । देखे दगडाचेनि पाडें । निचाडु ऐसा ॥ ९३ ॥

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

आप्तः शत्रुरुदासीनो मित्रं चेति कुतस्तराम् ।
भेदः कल्पयितुं शक्यस्तस्मिन्नानाविधः खलु ॥ ९४ ॥
अहमेवाखिलं विश्वमिति यस्योपजायते ।
बोधस्तस्येह को बन्धुः को वा शत्रुस्तथैव च ॥ ९५ ॥
अधमोत्तमभेदं स कथमर्जुन पश्यति ।
कषितस्य कुतो हेम्नो भिदा स्पर्शोपले भवेत् ॥ ९६ ॥
तत्स्पर्शेन यथा स्वर्णं शुद्धमेवोपजायते ।
तथा चराचरेष्वस्य साम्यमेव निरन्तरम् ॥ ९७ ॥
विश्वालंकारसंघाता नानाकारधरा अपि ।
परब्रह्मस्वरूपेण हेम्नैकेन विनिर्मिताः ॥ ९८ ॥
तत्त्वं येनेदृशं शुद्धं कार्त्स्न्येनावगतं खलु ।
स मुहुर्वञ्चनां नैति विश्ववैचित्र्यदर्शनात् ॥ ९९ ॥
पटे निरीक्षिते भाति तन्तूनां किल जालकम् ।
न च तद्व्यतिरेकेण तत्र किंचिदवाप्यते ॥ १०० ॥

---

तेथ सुहृद आणि शत्रु । कां उदासु आणि मित्रु । हा भावभेदु विचित्रु । कल्पू कैंचा ॥ ९४ ॥ तया बंधु कोण कांह्याचा । द्वेषिया कवणु तयाचा । मीचि विश्व ऐसा जयाचा । बोधु जाहला ॥ ९५ ॥ मग तयाचिये दिठी । अधमोत्तम असे किरीटी । काय परिसाचिये कसवटी । वानिया कीजे ॥ ९६ ॥ ते जैसी निर्वाण सवर्णुचि करी । तैसी जयाचि बुद्धी चराचरीं । होय साम्याची उजरी । निरंतर ॥ ९७ ॥ जेते विश्वाळंकाराचे विसुरे । जरी आहाती आनानें आकारें । तरी घडलें एकचि भांगारें । परब्रह्में ॥ ९८ ॥ ऐसें जाणणें जें बरवें । तें फावलें तया आघवें । म्हणोनि आहाचवाहाचे न झकवे । येणें आकाराचित्रें ॥ ९९ ॥ घापे पटामाजि दृष्टी । दिसे तंतूंची सैंघसृष्टी । परी तो एकवांचूनि गोठी । दुजी नाहीं ॥ १०० ॥

एवं ब्रह्ममयं सर्वं जगद्येन प्रतीयते ।
समबुद्धिः स एवेति मन्तव्यं नेदमन्यथा ॥ १०१ ॥
तीर्थराजोऽभिधा यस्य समाधानाय दर्शनम् ।
कल्पते ब्रह्मभावाय सङ्गाद्भ्रान्तोऽपि यस्य च ॥ १०२ ॥
यस्य वाग् जीवनं साक्षात् कृपा सिद्धीः प्रसूयते ।
यस्य स्वर्गसुखादीनि केवलं सन्ति केलयः ॥ १०३ ॥
स ईदृशः स्मृतोऽप्येव ददाति निजयोग्यताम् ।
अस्त्विदं तत्प्रशंसापि लाभाय परिकल्पते ॥ १०४ ॥

योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ १० ॥

अहो अद्वैतसूर्येण पुनरस्तमगच्छता ।
हृदि यस्योदितं स स्यादात्मारामो निरन्तरम् ॥ १०५ ॥
एवं विवेकसंपन्न एकाकीत्यपरिग्रहः ।
को हि त्रिभुवने तस्य स्यादन्य उपकारकः ॥ १०६ ॥
प्राप्तानामीदृशान्याह लक्षणानि स्वयं हरिः ।
लोकोत्तराणि निजया षड्गुणैश्वर्यसंपदा ॥ १०७ ॥

---

ऐसेनि प्रतीती हें गवसे । ऐसा अनुभव जयातें असे । तोचि समबुद्धि हें अनारिसें । नव्हे जाणें ॥ १०१ जयाचें नांव तीर्थरावो । दर्शनें प्रशस्तीसि ठावो । जयाचेनि संगें ब्रह्मभावो । भ्रांतासही ॥ २ ॥ जयाचेनि बोलें धर्मु जिये । दिठी महासिद्धीतें विये । देखें स्वर्गसुखादि इयें । खेळु जयाचा ॥ १०३ ॥ विपायें जरी आठवला चित्ता । तरी दे आपुली योग्यता । हें असो तयातें प्रशंसितां । लाभु आथी ॥ १०४ ॥ पुढती अस्तवेना ऐसें । जया पाहलें अद्वैतदिवसें । मग आपणपांचि आपणु असे । अखंडित ॥ १०५ ॥ ऐसिया दृष्टी जो विवेकी । पार्था तो एकाकी । सहजें अपरिग्रही जे तिहीं लोकीं । तोचि म्हणऊनि ॥ १०६ ॥ ऐसियें असाधारणें । निष्पन्नाचीं लक्षणें । आपुलेनि बहुवसपणें । श्रीकृष्ण बोले ॥ १०७ ॥

ज्ञानिष्ठो ज्ञानिनां योऽस्ति द्रष्टॄणां दृष्टिदीपकः ।
यस्य संकल्पमात्रेण प्रभोर्विश्वं विरच्यते ॥ १०८ ॥

प्रणवापणनिष्पन्नः शब्दब्रह्ममयः पटः ।
यशो वेष्टयितुं यस्य ह्रस्वत्वान्न प्रगल्भते ॥ १०९ ॥

तेजसा वपुषो यस्य सूर्याचन्द्रमसावपि ।
सव्यापारे समेधेते स जगत्पुष्टये न किम् ॥ ११० ॥

नाम्न एवापि माहात्म्यं यस्यापारं किलेदृशम् ।
यन्नभोऽपि समर्यादं तदौप्यमेन गण्यते ।
गुणानेकैकशस्तस्य को वाकलयितुं क्षमः ॥ १११ ॥

प्रशंसयानयालं तदाख्यातं कस्य लक्षणम् ।
मिषेण ब्रुवता किं वा कृष्णेनेदं न वेद्म्यहम् ॥ ११२ ॥

स्पष्टायां ब्रह्मविद्यायां द्वैतमुन्मूलयिष्यते ।
इति मन्येऽपदेशेन भगवानब्रवीत्तथा ॥ ११३ ॥

सोऽचिन्तयद्यथा प्रीतिर्यार्जुने मन्निमित्तका ।
द्वैतनिर्मूलने सा नौ न भोगायोकल्प्स्यते ॥ ११४ ॥

---

जो ज्ञानियांचा बापु । देखणेयांचे दिठीचा दीपु । जया दादुलयांचा संकल्पु । विश्व रची ॥ १०८ ॥ प्रणवाचिये पेठे । जाहलें शब्दब्रह्म आजिठें । तें जयाचिये यशा धाकुटें । वेढूं न पुरे ॥ ९ ॥ जयाचेनि आंगिकें तेजें । आवो रविशशीचिये वणिजे । म्हणऊनि जग हें वेसजे— । चीण असे तया ॥ ११० ॥ हां गा नामचि एक जयाचें । पाहतां गगनही दिसे टांचें । गुण एकैक काय तयाचे । आकळशील तूं ॥ १११ ॥ म्हणोनि असो हें वानणें । सांगों नेणों कवणाचीं लक्षणें । दावावी मिषें येणें । कां बोलिलों तें ॥ ११२ ॥ ऐकें द्वैताचा ठावोचि फेडी । ते ब्रह्मविद्या किजेल सघडी । तरि अर्जुना पढिये हे गोडी । नासेल इन ॥ ११३ ॥ म्हणोनि तें तैसें बोलणें । नव्हे सपातळ आडलावणें । केलें मनाचि वेगळ- पणें । भोगावया ॥ ११४ ॥

सोऽहमित्येव विद्वांसो ये मोक्षसुखलालसाः।
तेषां दृष्टेः कलङ्को मे जातु प्रेम प्रदूषयेत् ॥ ११५ ॥
अर्जुने निरहंकारे मद्भावं समुपागते।
एकाकिनैव किं कार्यमहो ननु तदा मया ॥ ११६॥
निर्वापयेद् दृशं दृष्टो भाषितो जनयेत्सुखम्।
दृढं वालिङ्ग्यते प्रेम्णा कोऽन्यो मे भवतीदृशः ॥ ११७॥
यदि स्यादवयोरैक्यं कस्मै कथ्यं मया तदा।
रहस्यं निहितं किंचिद् हृदये मातुमक्षमम् ॥ ११८॥
एवं सकरुणः कृष्णो ब्रुवन्नन्यापदेशतः।
मनसाप्यर्जुनेनैतुं न ववाञ्छैकरूपताम् ॥ ११९ ॥
कामं दुःश्रवमेवेदमर्जुनं तु विदांकुरु।
सूतं कृष्णसुखं स्पष्टं, मन्तव्यं नेदमन्यथा ॥ १२० ॥
प्रसुवाना गतप्राये यौवनेऽपत्यमेकलम्।
वन्ध्या नृत्यति तत्प्रेम्णा तदेकाग्रमना यथा ॥ १२१ ॥
तथावृत्तिरनन्तस्य पार्थेऽभूदिति भाति मे।
नाद्रक्ष्यमतिरेकं चेत् प्रेम्णो नावक्ष्यमीदृशम् ॥ १२२ ॥

---

जया सोहंभाव अटकु। मोक्षसुखा लागोनि रंकु। तयांचिये दिठीचा झणें कळंकु। लागेल तुझिया प्रेमा ॥ ११५ ॥ विपायें अहंभाव ययाचा जाईल। मी तोंचि हा जरी होईल। तरि मग काय कीजेल। एकलेया ॥ ११६ ॥ दिठीचि पाहतां निविजे। कां तोंड भरोनि बोलिजे। ना तरी दाटून खेंव दीजे। ऐसें कवण आहे. ॥ ११७ ॥ आपुलिया मना बरवी। असमाई गोठी जीवीं। ते कवणेंसि चावळावी। जरी ऐक्य जाहलें ॥ ११८ ॥ इया काकुळती जनार्दनें। अन्योपदेशाचेनि हातासनें। बोलामाजीं मन, मनें। आलिंगू सरलें ॥ १०९ ॥ हें परिसतां जरी कानडें। तरी जाण पां पार्थ उघडें। कृष्णसुखाचेंचि रूपडें। वोतलें गा ॥ १२० ॥ हें असो वयसे-चिये शेवटीं। जैसें एकचि वियें वांझोटी। मग ते मोहाची त्रिपुटी। नाचों लागे ॥ २१ ॥ तैसें जहालें श्रीअनंता। ऐसें तरि मी न म्हणता। जरी तयाचा न देखता। अतिशयो एथ ॥ १२२ ॥

अहो कौतुकमेतन्नु क्वोपदेशः क्व संगरः।
प्रेम्णः पार्थस्य मूर्तिर्नु कृष्णो नृत्यति तत्पुरः॥ १२३॥
तत्किं प्रेम त्रपायै यद् व्यसनं किं श्रमाय यत्।
श्रममुत्पादयेद्यो न स उन्मादोऽपि कीदृशः॥ १२४॥
अर्थोऽयं सारभूतो यत्पार्थः प्रेमास्पदं हरेः।
दर्पणो वास्य चित्तस्य सुप्रीतस्य सुशोभनः॥ १२५॥
एवं धन्यतमः पार्थो लोकेऽस्मिन्पुण्यपावनः।
भक्तिबीजस्य सुक्षेत्रं कृपापात्रं हरेरभूत्॥ १२६॥
भूमिका सख्यरूपा या पूर्वैवात्मनिवेदनात्।
अधिष्ठात्र्येव तत्रत्या देवतेयं विभाति मे॥ १२७॥
वर्ण्ये स्वामिनि पार्श्वस्थे गुणो दासस्य गृह्यते।
प्रकृत्यवदृशी प्रीतिरासीद्भगवतोऽर्जुने॥ १२८॥
भजमानानुरागाद्या पत्या संमान्यते स्वयम्।
पतिव्रता प्रशस्येत सा न किं पत्यपेक्षया॥ १२९॥
तथेदं रुचितं मे यत् स्तुत्यः पार्थो विशेषतः।
स ह्येकायतनं जातस्त्रिलोकी भाग्यसंपदः॥ १३०॥

---

पाहा पां नवल कैसें चोज। कें उपदेशु केउतें झुंज। परि पुढें वालभाचें भोज। नाचत असे॥ १२३॥ आवडी आणि लाजवी। व्यसन आणि शिणवी। पिसें आणि न भुलवी। तरी तें काई॥ १२४॥ म्हणऊनि भावार्थु तो ऐसा। अर्जुन मैत्रियेचा कुवासा। कीं सुखें शृंगारलिया मानसा। दपर्णु तो॥ १२५॥ यापरी बापु पुण्यपवित्र। जगीं भक्तिबीजासि सुक्षेत्र। तो श्रीकृष्णकृपे पात्र। याचिलागीं॥ १२६॥ हो कां आत्मनिवेदनातळींची। जे पीठिका होय सख्याची। पार्थु अधिष्ठात्री तेथींची। मातृका गा॥ १२७॥ पासींचि गोसावी न वर्णिजे। मग पाइकाचा गुण घेइजे। ऐसा अर्जुनु तो सहजें। पढिये हरी॥ १२८॥ पाहा पां अनुरागें भजे। जे प्रियोत्तमें मानिजे। ते पतीहूनि काय न वानिजे। पतिव्रता॥ १२९॥ तैसा अर्जुनाचि विशेषें स्तवावा। ऐसें आवडलें मज जीवा। जे तो त्रिभुवनींचिया दैवां। एकायतनु जाहला॥१३०॥ १६

यस्य प्रेम्णो वशान्मूर्तिममूर्तोऽपि प्रपद्यते ।
पूर्णोऽप्युत्कण्ठितो नाम जायते यस्य कारणात् ॥ १३१ ॥
एतस्मिन् श्रोतृभिः प्रोक्तमहो भाग्यमिदं तु नः ।
माधुरी वर्णनस्यास्य नादब्रह्मातिशायिनी ॥ १३२ ॥
न किं कौतुकमेवेदं यन्महाराष्ट्रभारती ।
रसांस्तांस्तान् हृदाकाशे समुद्भावयितुं क्षमा ॥ १३३ ॥
उन्मेषचन्द्रिकेयं नु सिताभिप्रायशीतला ।
गीतार्थरूपकमलसमुन्मीलनपेशला ॥ १३४ ॥
महिमा श्रवणेच्छाया इयान्वाचोऽस्य विद्यते ।
यदिच्छैव निरिच्छत्वं विधत्ते विहिता हृदि ।
एवं श्रोतृगणस्तुष्टः सशिरःकम्पमभ्यधात् ॥ १३५ ॥
ज्ञानदेवोऽपि तज्ज्ञात्वा श्रोतॄनेवमभाषत ।
अहो शृणुत मे वाचं सावधानेन चेतसा ।
पाण्डवेषु कृपाच्छायामद्भुतामकरोद् हरिः ॥ १३६ ॥
देवक्यायं धृतो गर्भे महायत्नाद्यशोदया ।
वर्धितोऽन्ते पाण्डवानामुपयोगावहोऽभवत् ॥ १३७ ॥

---

जयाचिया आवडीचेनि पांगें । अमूर्तुही मूर्ति आवगे । पूर्णांहि परि लागे । अवस्था जयाची ॥ १३१ ॥ तंव श्रोते म्हणती दैव । कैसी बोलाची हवाव । काय नादातें हन बरव । जिणोनि आली ॥ १३२ ॥ हां हो नवल नोहे देशी । मऱ्हाटी बोलिजे तरी ऐशी । वाणें उमटताहे आकाशीं । साहित्यरंगाचें ॥ १३३ ॥ कैसें उन्मेखचांदिणें तार । आणि भावार्थु पडे गार । हेचि श्लोकार्थकुमुदिनी फार । साविया होती ॥१३४॥ चाडचि निचाडां करी । ऐसी मनोरथीं ये थोरी । तेणें विवळले अंतरीं । तेथ डोलु आला ॥ १३५ ॥ तें निवृत्तिदासें जाणितलें । मग अवधान द्या म्हणितलें । नवल पांडवकुळीं पाहलें । कृष्णदिवसें ॥ १३६ ॥ देवकीया उदरीं वाहिला । यशोदा सायासें पाळिला । शेखीं उपेगा गेला । पांडवांसी ॥ १३७ ॥

दिवसान् सुबहून् सेव्यः प्रभुः प्रायेण सेवकैः।
समये चोपसर्प्तव्यं तत्प्रसादमभीप्सुभिः।
अर्जुनस्येदृशोप्यासीन्नायासो भाग्यशालिनः ॥ १३८॥

श्रोतार ऊचुः—

इदानीं विस्तरेणालमनुसन्धीयतां कथा।

ज्ञानदेव उवाच—

पार्थः सस्नेहमब्रूत नेदृग्लक्षणवानहम् ॥ १३९ ॥
क्वैतेषां लक्ष्मणां सारः क मेऽल्पविषया मतिः।
शक्या स्याद्गौरवावाप्तिर्देव त्वद्वचसैव मे ॥ १४० ॥
यदि ते देव चित्ते स्याद् ब्रह्मत्वमपि मे भवेत्।
अभ्यस्येयं न किं कृत्स्नमुपदिश्येत यत्त्वया ॥ १४१ ॥
न जाने कथितः को नु श्रुत्वा तु श्लाघ्यते हृदा।
ईदृग्लक्षणसंपन्नो यस्तस्य महिमा कियान् ॥ १४२ ॥
यथा स्यामीदृशो नाम तथा कर्तुं प्रभोऽर्हसि।
तथेति प्रतिपेदेऽथ तद्वचः सस्मितं हरिः ॥ १४३ ॥
संतोष एकोऽधिगतो न यावत् सुखं दुरापं खलु तावदेव।
तस्मिन्नवाप्ते तु कुतः सुखस्य हानिर्भवेद्वा समभीप्सितस्य ॥१४४॥

---

म्हणऊनि बहुदिवस वोळगावा। कां अवसरु पाहोनि विनवावा। हाही सोसु तया सदैवा। पडेचिना ॥ १३८ ॥ हें असो कथा सांगें वेगीं। मग अर्जुन म्हणे सलगी। देवा इयें संताचिन्हें आंगीं। न ठकती माझां॥१३९॥ एऱ्हवीं या लक्षणांचिया निजसारा। मी अपाडें कीर अपुरा। परि तुमचेनि बोलें अवधारा। थोरावें जरी ॥ १४० ॥ जी तुम्ही चित्त देयाल। तरी ब्रह्म मियां होइजेल। काइ जालें अभ्यासिजेल। सांगाल जें ॥१४१॥ हां हो नेणों कवणाची काहाणी। आइकोनि श्लाघिजत असों अंतःकरणीं। ऐसी जाइलेपणाची शिरयाणी। कायसी देवा ॥ १४२ ॥ हें आंगें म्यां होइजो कां। येतुलें गोसावी आपुलेपणें कीजो कां। तंव हांसोनि श्रीकृष्ण हो कां। करूं म्हणती ॥१४३॥ देखा संतोषु एक न जोडे। तंवचि सुखाचें सैंघ सांकडें। मग जोडलिया कवणेकडे। अपुरें असे ॥ १४४ ॥

सलीलं स भवेद्ब्रह्म दासः सर्वेश्वरस्य यः ।
पार्थस्य तु महद्भाग्यं कथं फलति पश्यत ॥ १४५ ॥
दर्शनमिन्द्रादीनां जन्मसहस्रैः सुदुर्लभं यस्य ।
स वशे पार्थस्येयद्यद्वचसा शक्यते न वक्तुमपि ॥ १४६ ॥
अस्तु पार्थेन यत्प्रोक्तं ब्रह्मभावमियामिति ।
तच्छ्रीमद्वासुदेवेनाशेषमप्यवधारितम् ॥ १४७ ॥
विचारितं तु यज्जातः पार्थे ब्रह्मत्वदोहदः ।
प्राप्तवैराग्यगर्भं तद्बुद्धेरस्योदरं ध्रुवम् ॥ १४८ ॥
सुकुमारोऽप्यसौ पार्थतरुर्नम्रत्वमागमत् ।
तद्वैराग्यवसन्तेन सोऽहंभावसुमाङ्कितः ॥ १४९ ॥
विलम्बोऽतो न जायेत ब्रह्मप्राप्तिफलं प्रति ।
विरक्तिरीदृशी जातास्येत्यनन्तः प्रतीतवान् ॥१५०॥
स्वगतं चाब्रवीद्यद्यदनुष्ठास्यति संप्रति ।
तत्तदारम्भ एवास्य न वैयर्थ्याय कल्प्स्यते ॥ १५१ ॥

---

तैसा सर्वेश्वरु बाळिया सेवकें । म्हणोनि ब्रह्मही होय तो कौतुकें । परि कैसा भारें आतला पिकें । दैवाचेनि ॥१४५॥ जो जन्मसहस्रांचियासाठीं । इंद्रादिकांही महागु भेटी । तो आधीनु केतुला किरीटी । जे बोलुही न साहे ॥ १४६ ॥ मग ऐका जें पांडवें । म्हणितलें म्यां ब्रह्म होआवें । तें अशेषही देवें । अवधारिलें ॥ १४७ ॥ तेथ ऐसेंचि एक विचारिलें । जे या ब्रह्मतत्त्वाचे डोहळे जाहले । परि उदरा वैराग्य आहे आलें । बुद्धीचिया ॥ १४८ ॥ एऱ्हवीं दिवस तरी अपुरे । परी वैराग्यवसंताचेनि भरें । जे सोऽहंभाव महुरें । मोडोनि आला ॥१४९॥ म्हणोनि प्राप्तिफळीं फळतां । ययासि वेळु न लगेल आतां । होय विरक्तु ऐसा अनंता । भरंवसा जाहला ॥१५०॥ म्हणे जें जें हा अधिष्ठील । तें आरंभींच यया फळेल । म्हणोनि सांगितला व वचेल । अभ्यासु वायां ॥ १५१ ॥

तदा सम्यग्विचार्यैव श्रीहरिः पार्थमब्रवीत् ।
कथ्यते राजमार्गस्ते तमिमं श्रोतुमर्हसि ॥ १५२ ॥

प्रवृत्तिवृक्षस्य तले निवृत्ति—
फलानि मार्गे किल कोटिशोऽत्र ।
अद्यापि यात्रां कुरुते महेशः
पथामुना यात्रिकवेषधारी ॥ १५३ ॥

प्रथमं योगिनोऽनेके तिर्यङ्नभसि बभ्रमुः ।
पदैरनुभवाख्यैस्तु लेभिरे सत्पथं ततः ॥ १५४ ॥
आत्मबोधमृजुं मार्गं प्राप्य तेऽथ प्रधाविताः ।
त्यक्त्वाऽज्ञानमयांस्तांस्तान्मार्गान्सर्वानपीतरान् ॥१५५॥
याता महर्षयोऽनेन साधकाः सिद्धतां गताः ।
तत्त्वज्ञा गौरवं प्राप्ताः पथानेनैव केवलम् ॥ १५६ ॥
सन्मार्गे दृष्टमात्रेऽस्मिन् क्षुत्तृषे शाम्यतः स्वयम् ।
आक्रामद्भिरिमं रात्रिर्दिनं वा न विभाव्यते ॥ १५७ ॥
मार्गेणानेन गच्छद्भिः पदं यत्र निधीयते ।
अपवर्गखनिः साक्षात्तत्र प्रादुर्भवत्यहो ।
अत्र स्वर्गसुखप्राप्तिः स्खलतामपि जायते ॥ १५८ ॥

---

ऐसें विवरोनियां श्रीहरी । म्हणितलें तिये अवसरीं । अर्जुना हा अवधारीं । पंथराजु ॥१५२॥ तेथ प्रवृत्तितरूच्या बुडीं । दिसती निवृत्तिफळाचिया कोडी । जिये मार्गीचा कापडी । महेशु आझुनी ॥ १५३॥ पैल योगिवृंदें वहिलीं । आडवीं आकाशीं निघालीं । कीं तेथ अनुभवाच्या पाउलीं । धोरणु पडिला ॥ १५४ ॥ तिहीं आत्मबोधाचेनि उजुकारें । धांव घेतली एकसरें । कीं येर सकळ मार्ग निदसुरे । सांडूनियां ॥ १५५॥ पाठीं महर्षि येणें आले । साधकांचे सिद्ध जाले । आत्मविद थोरावले । येणेंचि पंथें ॥१५६॥ हा मार्गु जैं देखिजे । तैं तहान भूक विसरिजे । रात्रिदिवसु नेणिजे । वाटे इये ॥१५७॥ चालतां पाउल जेथ पडे । तेथें अपवर्गाची खाणी उघडे । आव्हांटलिया तरी जोडे । स्वर्गसुख ॥१५८॥

प्रवृत्तिपार्श्वाद्धि निवृत्तिगेहं
संप्रापणीयं किल योगमार्गे
यन्निश्चलं स्थीयत एव पुंसा
तदेव गण्यं क्रमणं पथोऽस्य ॥ १५९ ॥

मार्गेणानेन गन्तव्यो ग्रामो गन्तैव नेतरः ।
किमिदं कथनीयं ते ज्ञास्यसि स्वयमेव यत् ॥ १६० ॥

तदार्जुनोऽब्रवीद्देव कदा न्वेतद्भविष्यति ।
मज्जाम्यार्त्तिसमुद्रेऽहं तं मां किं नोद्धरिष्यसि ॥ १६१ ॥

निजगाद तदा कृष्णो ब्रूष उच्छृङ्खलः कुतः ।
प्रवृत्ताः स्मः स्वयं वक्तुं प्रश्नश्चापि त्वया कृतः ॥ १६२ ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥

इदानीं विस्तराद्वक्ष्येऽभ्यासस्त्वस्य गुणावहः ।
तदर्थं किमपि स्थानमेवंगुणमपेक्ष्यते ॥ १६३ ॥

यत्र स्थितस्य नोत्थानमीहते सुस्थितं मनः ।
वैराग्यद्विगुणत्वाय यस्य दर्शनमेव च ॥ १६४ ॥

---

निगिजे पूर्वीलिया मोहरा । कीं येइजे पश्चिमेचिया घरा । निश्चळपणें धनुर्धरा । चालणें एथींचें ॥ १५९ ॥ येणें मार्गें जया ठाया जाइजे । तो गांवो आपणचि होइजे । हें सांगों काय सहजें । जाणसी तूं ॥ १६० ॥ तेथ पार्थें म्हणितलें देवा । तरि तोंचि मग केव्हां । कां अर्तिसमुद्रौनि न काढावा । बुडतु जी मी ॥ १६१ ॥ तंव कृष्ण म्हणती ऐसें । हें उत्सृंखळ बोलणें कायसें । आम्ही सांगतसों आपैसे । वरि पुशिलें तुवां ॥ १६२ ॥ तरी विशेषें आतां बोलिजेल । परि तें अनुभवें उपेगा जाईल । म्हणोनि तैसें एक लागेल । स्थान पाहावें ॥ १६३ ॥ जेथ आराणुकेचेनि कोडें । बैसलिया उठों नावडे । वैराग्यासी दुणीव चढे । देखिलिया जें ॥ १६४ ॥

सज्जनाध्युषितं यत्स्याद् यत्संतोषविवृद्धये ।
धैर्योत्कर्षगुणं चित्ते यदुत्पादयितुं क्षमम् ॥ १६५ ॥

यत्राभ्यासः स्वमात्मानं क्रियमाणं प्रवर्तयेत् ।
तथा चानुभवश्चित्तं वृणीताप्रार्थितोऽपि सन् ।
ईदृग्रम्यतरं स्थानं विद्यते यन्निरन्तरम् ॥ १६६ ॥

यदतीत्य व्रजन् पार्थ पाषण्डोऽपि मनोरथम् ।
वद्धास्थस्तनुयादेव चरितुं दुश्चरं तपः ॥ १६७ ॥

यदृच्छया चलन् कोऽपि सहसा प्राप्य यत्स्थलम् ।
सकामोऽपि ततः कामं प्रतिगन्तुं न चिन्तयेत् ॥ १६८ ॥

वासयत्यविवत्सन्तं भ्रमन्तं स्थिरयत्यहो ।
विरक्तिं बोधयत्येव यत्स्पर्शसुखितामिव ॥ १६९ ॥

वरं राज्यमपि त्याज्यं सुखं वस्तव्यमत्र च ।
विलासिनोऽपि जायेत यद् दृष्ट्वा मतिरीदृशी ॥ १७० ॥

एवं यदुत्तमं स्थानमतिशुद्धं तथैव च ।
यत्र ब्रह्मस्वरूपं च चक्षुषा दृश्यते स्फुटम् ॥ १७१ ॥

---

जो संतीं वसविला ठावो । संतोषासि सावावो । मना होय उत्सावो । धैर्यांचा ॥ १६५ ॥ अभ्यासुचि आपणयातें करी । हृदयातें अनुभव वरी । ऐसी रम्यपणाची थोरी । अखंड जेथ ॥ १६६ ॥ जया आड जातां पार्था । तपश्चर्या मनोरथा । पाखांडियाही आस्था । समूळ होय ॥१६७॥ स्वभावें वाटे येतां । जरी वरपडा जाहला अवचितां । तरि सकामुही परि माघौता । निघों विसरे ॥ १६८ ॥ ऐसेनि न राहतयातें राहवी । भ्रमतयातें बैसवी । थापटूनि चेववी । विरक्तीतें ॥ १६९ ॥ हें राज्य वर सांडिजे । मग निवांता एथेंचि असिजे । ऐसें शृंगारियांहि उपजे । देखत खेंवो ॥ १७० ॥ जें येणें मानें बरवंट । आणि तैसेंचि अति चोखट । जेथ अधिष्ठान प्रगट । डोळां दिसे ॥ १७१ ॥

यस्यान्यलक्षणं लक्ष्यं यदिदं किल साधकैः ।
अध्युष्यतेऽनाहतं तु पादैः स्यान्मनुजन्मनाम् ॥ १७२ ॥
मूलादारभ्य मधुराः पीयूषरससंमिताः ।
यत्र सान्द्रा द्रुमाः सन्ति नित्यपुष्पफलान्विताः ॥ १७३ ॥

अयत्नगम्यानि च निर्झराणि
पदे पदे यत्र बहूदकानि ।
नितान्तरम्याणि सुशीतलानि
विभान्ति वर्षास्वपि निर्मलानि ॥ १७४ ॥

यत्रातपः स्तोकतरोऽस्ति भानोः
प्रतीयते सौम्यतरः स चापि ।
आवाति वातोऽपि च यत्र मन्दं
सुखस्वनः सौरभनिर्भरश्च ॥ १७५ ॥

प्रायेण यन्नीरवमास्ति नित्यं
सत्त्वाश्च वन्या बहुला न यत्र ।
न यच्छुकानां न च षट्पदाना—
मावासभूमित्वमुपैति जातु ॥ १७६ ॥

द्वित्रा एव जलोपान्ते हंसा वा यत्र सारसाः ।
दृश्यन्ते कोकिलो वापि कदाचित् कापि सीदति ॥ १७६ ॥

---

आणिकही एक पहावें । जें साधकीं वसतें होआवें । आणि जनाचेनि पायरवें । रुळेचिना ॥ १७२ ॥ जेथ अमृताचेनि पाडें । मुळाहीसकट गोडें । जोडती दाटें झाडें । सदा फळतीं ॥ १७३ ॥ पाउला पाउला उदकें । वर्षाकाळींहि अति चोखें । निर्झरें कां विशेखें । सुलभें जेथ ॥ १७४ ॥ हा आतपुही अळुमाळु । जाणिजे तरी शीतळु । पवनु अति निश्चळु । मंद झुळके ॥ १७५ ॥ बहुतकरूनि निःशब्द । दाट न रिघे श्वापद । शुक हन षट्पद । तेउतें नाहीं ॥ १७६ ॥ पाणिलगे हंसें । दोनी-चांरी सारसें । कवणें एके वेळे बैसे । तरी कोकिळही हो कां ॥ १७७ ॥

गतागतानि कुर्वाणा मयूरा अन्तरान्तरा ।
यत्रानिष्टा न मन्यन्ते न चेच्छश्वदुपद्रवः ॥ १७८ ॥

अन्वेष्टव्यमवश्यं तु स्थानमीदृग् धनञ्जय ।
मठः शिवालयो वापि निगूढो यत्र तिष्ठति ॥ १७९ ॥

रुचये मनसो यत्स्यात्स्थानयोरेतयोर्द्वयोः ।
तत्सेव्यं तत्र च प्रायोऽध्यासितव्यं रहोऽर्जुन ॥ १८० ॥

ज्ञातव्यं तत्तादृशं वा मनःस्थैर्यक्षमं न वा ।
स्थैर्यं चेत्ताद्विरच्यं च तत्रैवासनमीदृशम् ॥ १८१ ॥

साग्राः कुशाङ्कुरा भूमौ तत्र शुद्धं मृगाजिनम् ।
तस्योपरि च संस्थाप्यं धौतवस्त्रं पुटीकृतम् ॥ १८२ ॥

सुकोमलाः समा दर्भाः सुबद्धाः स्युर्यथा स्वयम् ।
तथा रचयितव्यास्ते सुव्यवस्थितमेव च ॥ १८३ ॥

आसनं चेद्भवेदुच्चैस्तदा स्यादङ्गदोलनम् ।
नीचैश्चेद्वा तदा दोषान् भूमिजान्समवाप्नुयात् ॥ १८४ ॥

---

निरंतर नाहीं । तरि आलींगेलीं कांहीं । होतु कां मयूरेंही । आम्ही ना न म्हणों ॥ १७८ ॥ परि आवश्यक पांडवा । ऐसा ठाव जोडावा । तेथ निगूढ मठ होआवा । कां शिवालय ॥ १७९ ॥ दोहींमाजीं आवडे ते । जें मानलें होय चित्तें । बहुतकरूनि एकांतें । बैसिजे गा ॥ १८० ॥ म्हणोनि तैसें तें जाणावें । मन राहतें पाहावें । राहेल तेथ रचावें । आसन ऐसें ॥ १८१ ॥ वरी चोखट मृगसेवडी । माजीं धूतवस्त्राची घडी । तळवटीं अमोडी । कुशांकुर ॥ १८२ ॥ सकोमळ सरिसे । सुबद्ध राहतीं आपैसे । एकपाडें तैसे । बोजा घालीं ॥ १८३ ॥ परि सावियाचि उंच होईल । तरि आंग हन डोलेल । नीच तरी पावेल । भूमिदोषु ॥ १८४ ॥

अतस्तथाविधं वर्ज्यं कार्यं समतयैव तत्।
बहुनात्र किमुक्तेन परिपाटीयमीदृशी ॥ १८५ ॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥

ततस्तत्र स्थले कृत्वा मन एकाग्रमात्मनः ।
सद्गुरुस्मरणं कुर्यात् ससुखानुभवं चिरम् ॥ १८६ ॥
तावच्च निरहंकारः सादरं सद्गुरुं स्मरेत्।
यावदन्तर्बहिर्भावैः सात्त्विकैः पूरितो भवेत् ॥ १८७ ॥
विषया विस्मृतिं यान्ति न क्षुभ्यन्तीन्द्रियाण्यपि।
हृदये स्थिरतामेति मनः स्मरणशालिनाम् ॥ १८८ ॥
एवं तिष्ठेत्सुखेनैव यावदैक्यं न साध्यते ।
तत्सिद्धौ जातबाधः सन्नध्यासीत तदासनम् ॥ १८९ ॥
ततोऽङ्गं धारयत्यङ्गं पवनः पवनं तथा ।
उत्कर्षोऽनुभवस्यैवं प्रादुर्भवति च क्रमात् ॥ १९० ॥
प्रवृत्तिर्याति वैमुख्यं समाधिः संमुखीनताम् ।
आसनेऽधिष्ठिते सम्यक् सर्वोऽभ्यासः समाप्यते ॥ १९१ ॥

---

म्हणोनि तैसें न करावें । समभावें धरावें । हें बहु असो होआवें आसन ऐसें ॥ १८५ ॥ मग तेथ आपण । एकाग्र अंतःकरण । करूनि सद्गुरुस्मरण । अनुभविजे ॥ १८६ ॥ जेथ स्मरतेनि आदरें । सबाह्य सात्त्विकें भरे । जंव काठिण्य विरे । अहंभावाचें ॥ १८७ ॥ विषयांचा विसरु पडे । इंद्रियांची कसमस मोडे । मनाची घडी घडे । हृदयामाजीं ॥ १८८ ॥ ऐसें ऐक्य हें सहजें । फावे तंव राहिजे । मग तेणेंचि बोधें बैसिजे । आसनावरी ॥१८९॥ आतां आंगातें आंग वरी । पवनातें पवनु धरी । ऐसी अनुभवाची उजरी । होंचि लागे ॥ १९० ॥ प्रवृत्ति माघौति मोहरे । समाधि ऐलाडी उतरे । आघवें अभ्यासूं सरे । बैसतखेंवो ॥ १९१ ॥

मुद्राया महिमेदानीं कथ्यते पार्थ तं शृणु ।
ऊरू जघनसंयुक्तौ कुर्याद्विदधदासनम् ॥ १९२ ॥
आधारद्रुममूलेऽथ वक्रे पादतले उभे ।
कृत्वा निवेशयेद्गाढं स्यातां सुघटिते यथा ॥ ४९३ ॥
पादः सव्यस्तले स्थाप्यस्तेनापीड्या च सीवनी ।
येन वामो निविष्टः स्यात्सव्यस्योपरि लीलया ॥ १९४ ॥
गुदशिश्नान्तरे योऽस्ति चतुरङ्गुलिसंमितः ।
प्रदेशः प्रान्तयोस्तत्र सार्धं सार्धं विवर्जयेत् ॥ १९५ ॥
शिष्टो योऽङ्गुलिमात्रस्तु तं पार्ष्ण्यग्रेण पीडयेत् ।
उत्तोलितशरीरः सन् सव्येनोत्तरतो दृढम् ॥ १९६ ॥
पृष्ठान्तं चोन्नतं कुर्यादजानान इवोन्नतिम् ।
समुद्धरेत्तथा चैव द्वितयं गुल्फयोरपि ॥ १९७ ॥
ततः शरीरबन्धोऽयमशेषः किल सर्वथा ।
पार्ष्णिमस्तकभागो नु स्वयंभूरुपजायते ॥ १९८ ॥

---

मुद्रेची प्रौढी ऐशी । तेचि सांगिजेल आतां परियेसीं । तरी ऊरु या जघनासी । जडोनि घालीं ॥ १९२ ॥ चरणतळें देव्हडीं । आधारद्रुमाच्या बुडीं । सुघटितें गाढीं । संचरीं पां ॥ १९३ ॥ सव्य तो तळीं ठेविजे । तेणें सिवणीमध्यें पीडिजे । वरी बैसे तो सहजें । वाम चरणु ॥ १९४ ॥ गुदमेंढ्राआंतौतीं । चारी अंगुळें निगुतीं । तेथ सार्ध सार्ध प्रांतीं । सांडूनियां ॥ १९५ ॥ माजीं अंगुळ एक निगे । तेथ टांचेचेनि उत्तरभागें । नेहटिजे वरि आंगें । पेललेनी ॥ १९६ ॥ उचलिलें कां नेणिजे । तैसें पृष्ठांत उचलिजे । गुल्फद्वय धरिजे । तेणेंचि मानें ॥ १९७ ॥ मग शरीरसंचु पार्थां । अशेषही सर्वथा । पार्ष्णींचा माथां । स्वयंभु होय ॥ १९८ ॥

लक्षणं मूलबन्धस्य जानीहीदं धनंजय ।
वज्रासनमितीदं च गौणं नामास्य विद्यते ॥ १९९ ॥
मूलबन्धो यदाधारचक्र एवं कृतो भवेत् ।
तदाधोमार्गसंरोधेऽपानोऽन्तः संकुचत्यहो ॥ २०० ॥

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥

धीयते चरणे वामे करयोः संपुटं स्वयम् ।
दृश्यते बाहुमूले च तद्योगेन समुच्छ्रयः ॥ २०१ ॥
उच्छ्रायात् पृष्ठदण्डस्य शिरो बाभाति मग्नवत् ।
नेत्रद्वारकपाटे च भवतो मीलनोन्मुखे ॥ २०२ ॥
पक्ष्मोर्ध्वे नतिमायाति तलस्थं स्फायते तले ।
तेनार्धोन्मीलनावस्था नेत्रयोरुपजायते ॥ २०३ ॥
अन्तरेव स्थिता दृष्टिः कौतुकाद्बहिरेति चेत् ।
तदा नासाग्रमासाद्य भवेत्तत्रैव कीलिता ॥ २०४ ॥
अन्तर्या रचितैवं सा पुनरायाति नो बहिः ।
अतो नासाग्र एवार्धदृष्टेः स्थितिरवास्थिता ॥ २०५ ॥

---

अर्जुना हें जाण । मूळबंधाचें लक्षण । वज्रासन गौण । नाम यासी । ॥ १९९ ॥ ऐसी आधारीं मुद्रा पडे । आणि आधींचा मार्गु मोडे । तेथ अपानु आंतुलेकडे । वोहोटों लागे ॥ २०० ॥ तंव करसंपुट आपैसें । वाम चरणीं बैसे । तंव बाहुमूळीं दिसे । थोरींव आली ॥ २०१ ॥ माजी उभारलेनि दंडें । शिरकमळ होय गाढें । नेत्रद्वारींचीं कवाडें । लागूं पाहती ॥ २०२ ॥ वरचिलें पातीं न ढळती । तळींचीं तळीं पुंजाळती । तेथ अर्धोन्मीलित स्थिति । उपजे तया ॥ २०३ ॥ दिठी राहोनि आंतुलेकडे । बाहेर पाऊल घाली कोडें । ते ठायीं ठावो पडे । नासाग्रपीठीं ॥२०४॥ ऐसें आंतुच्या आंतुचि रचे । बाहेरी मागुतें न वचे । म्हणोनि राहणें आधियें दिठीचें । तेथेंचि होय ॥ २०५ ॥

अवलोक्या दिशस्तास्ता पश्यं वा रूपदर्शनम् ।
इतीच्छा लयमायाति सर्वाण्येव स्वभावतः ॥ २०६ ॥

तत आकुञ्चिते कण्ठे सक्ता गलतले हनुः ।
पीडयन्ती दृढं वक्षःस्थलमर्जुन तिष्ठति ॥ २०७ ॥

ततः कण्ठमणौ लुप्ते मुद्रा या घटतेऽर्जुन ।
तं जालंधरनामानं बन्धमाहुर्मनीषिणः ॥ २०८ ॥

नाभिरुन्नततामेति निमज्जत्युदरं तले ।
विकसत्यन्तरङ्गे च हृदयाम्भोजकोरकम् ॥ २०९ ॥
स्वाधिष्ठानोपरिप्रान्ते नाभिस्थानतले च यः ।
बन्धो भवति तं पार्थ विदुराकर्षणाभिधम् ॥ २१० ॥
एवं देहबहिर्भागेऽभ्यासच्छायावृते सति ।
चाञ्चल्याख्यो मनोधर्मो दौर्बल्यमुपगच्छति ॥ २११ ॥

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥

कल्पना याति निर्वाणं प्रवृत्तिर्नाम शाम्यति ।
एवं स्वभावतश्चैव मनो विरमति स्वयम् ॥ २१२ ॥

---

आतां दिशांची भेटी घ्यावी । कां रूपाची वास पहावी । हे चाड सरे आघवी । आपैसया ॥ २०६ ॥ मग कंठनाळ आटे । हनुवटी हडौती दाटे । ते गाढी होऊनि नेहटे । वक्षस्थळीं ॥ २०७ ॥ माजीं घंटिका लोपे । वरी बंधु जो आरोपे । तो जाळंधरु म्हणिपे । पांडुकुमरा ॥ २०८ ॥ नाभी वरी पोखे । उदर हें थोके । अंतरीं फांके । हृदयकोशु ॥ २०९ ॥ स्वाधिष्ठानावरिचिले कांठीं । नाभिस्थानातळवटीं । बंधु पडे किरीटी । वोढियाणा तो ॥ २१० ॥ ऐसी शरीराबाहेरलीकडे । अभ्यासाची पाखर पडे । तंव आंतु त्राय मोडे । मनोधर्मांची ॥ २११ ॥ कल्पना निमे । प्रवृत्ति शमे । आंग मन विरमे । सावियाचि ॥ २१२ ॥

क्षुधायाः का गतिर्जाता निद्रा क नु गतेति च।
स्मृतिरप्यखिलेयं द्राग् लुप्यमाना न दृश्यते ॥ २१३॥

मूलबन्धेन संरुद्धोऽपान उर्ध्वं व्रजन् पुनः।
भूत्वा प्रतिहतः पश्चात् स्फीततां प्रतिपद्यते ॥ २१४॥

प्रबलो भवति क्षोभाद्रोधस्थाने प्रगर्जति।
युध्यते मणिपूरेण नाभिस्थाने मुहुर्मुहुः ॥ २१५॥

एवमुत्थापिता वात्या चरन्ती जठरान्तरे।
आबाल्यात्संचितं तत्र मलं शोधयतेऽखिलम् ॥ २१६॥

अवकाशमलब्ध्वान्तः सोऽपानो वलितुं कचित्।
कोष्ठं विष्टःकफं पित्तमुन्मूलयति तत्रगम् ॥ २१७॥

सप्त धातूदधीन् रिक्तेः भिन्ते मेदोमहीधरान्।
मज्जामास्थिगतां चापि बहिः कर्षत्यसौ तथा ॥ २१८॥

शिथिलीकुरुते नाडीं गात्रं विघटयत्यपि।
साधको न विभीयात्तु तेनैवं भीषितोऽपि सन् ॥ २१९॥

---

क्षुधा काय जाहाली। निद्रा केउती गेली। हे आठवणही हारपली। न दिसे वेगां ॥ २१३ ॥ जो मूळबंधें कोंडला। अपानु माघौता मुरडला। तो सवेंचि वरी सांकडला। घरी फुगू ॥ २१४ ॥ क्षोभलेपणें माजे। उवाइला ठायीं गाजे। मणिपूरेंशीं झुंजे। राहोनियां ॥ २१५ ॥ मग यावलिये वाहटुळी। सैंघ घेऊनि घर डहुळी। बाळपणींची कुहीटुळी। बाहेर घाली ॥ २१६ ॥ भीतरीं वळी न घरे। कोठ्यामाजी संचरे। कफपित्ताचे थारे। उरों नेदी ॥ २१७ ॥ धातूंचे समुद्र उलंडी। मेदाचे पर्वत फोडी। आंतील मज्जा काढी। अस्थिगत ॥ २१८ ॥ नाडीतें सोडवी। गात्रांतें बिघडवी। साधकातें भेडसावी। परि बिहावें ना ॥ २१९ ॥

स व्याधीन् प्रकटीकृत्य सद्यो दूरीकरोति च ।
संमिश्रयति देहस्थान् पृथ्व्यवंशांस्तथैव च ॥ २२० ॥
ऊष्मा वज्रासनोद्भूतस्तावदेवान्यतोऽर्जुन ।
शक्तिं कुण्डलिनीं नाम कुरुते प्रतिबोधिताम् ॥ २२१ ॥
शैशवस्था यथा नागी कुङ्कुमाक्तकलेवरा ।
आत्मानं प्रकटीकृत्य शयाना भुवि तिष्ठति ॥ २२२ ॥
तथा कुण्डलिनी सापि नियतं कुण्डलत्रयम् ।
सार्धं कृत्वा सर्पिणीव निद्रिताधोमुखी स्थिता ॥ २२३ ॥
सा विद्युत्कङ्कणं मूर्तं वह्निज्वालामयं पुटम् ।
काञ्चनी गुलिका वापि संमृष्टा भाति तेजसा ॥ २२४ ॥
सा सुबद्धा सुसंरुद्धा नाभिस्कन्धे दढं सती ।
वज्रासनेन संक्लिष्टा जागरूकत्वमृच्छति ॥ २२५ ॥
तदोल्का निपतन्तीव भानुर्भ्रश्यन्निवासनात् ।
तेजोरूपस्य बीजस्य प्रोद्भिन्ना वाङ्कुरा इव ॥ २२६ ॥

---

व्याधीतें दावी । सर्वेंचि हरवी । आप पृथ्वी कालवी। एकवाट ॥२२०॥ तंव येरीकडे धनुर्धरा । आसनाचा उबारा । शक्ति करी उजगारा । कुंडलिनी ते ॥ २२१ ॥ नागिणीचें पिलें । कुंकुमें नाहलें । वळण घेऊनि आलें । सेजे जैसें ॥२२२॥ तैसी ते कुंडलिनी । मोटकी औट वळणी । अधोमुख सर्पिणी । निदेली असे ॥ २२३ ॥ विद्युल्लतेची विडी । वन्हिज्वाळांची घडी । पंधरेयाची चोखडी । घोंटीव जैशी ॥ २२४ ॥ तैसी सुबंध आटली । पुटीं होती दाटली । ते वज्रासनें चिमुटली । सावधु होय ॥२२५॥ तेथ नक्षत्र जैसें उलंडलें । कीं सूर्याचें आसन मोडलें । तेजाचें बीज विरूढलें । अंकुरेंशीं ॥ २२६ ॥

सा मुञ्चन्ती वलीः शक्तिर्भिन्दत्यङ्गं कुतूहलात् ।
दृश्यते नाभ्यधोभागे कन्दोपरि समुत्थिता ॥२२७॥
चिराय क्षुधिता तावत्तत्र नाम प्रबोधिता ।
सावेशं व्यात्तवदना सा तिष्ठत्यूर्ध्वदर्शिनी ॥ २२८ ॥
हृदम्भोजतले पार्थ पवनो योऽस्ति संभृतः ।
सर्वं ग्रसितुकामा तं सा शक्तिरुपगूहति ॥ २२९ ॥
ज्वालाभिर्वदनोत्थाभिः खादितुं सा प्रवर्तते ।
मांसस्य कवलान् व्याप्य भागमूर्ध्वमधः स्थितम् ॥ २३० ॥
स्थानं यद्यत्समांसं स्याद् ग्रसते तदयत्नतः ।
ग्रासान् द्वित्रांश्च गृह्णाति ततो हृदयतोऽपि सा ॥ २३१ ॥
ततः कृत्वा पाणिपादतलास्तृङ्मांसशोधनम् ।
भिनत्त्यूर्ध्वगातन् खण्डान् सन्ध्यङ्गान्यपि जक्षिति ॥ २३२ ॥
न जहाति निजाधारं निःसत्त्वांस्तनुते नखान् ।
त्वचं प्रक्षाल्य संसक्तां कुरुते चास्थिपञ्जरे ॥ २३३ ॥

---

तैसी वेढियातें सोडिती । कवतिकें आंग मोडिती । कंदावरी शक्ती । उठिली दिसे ॥ २२७ ॥ सहजें बहुतां दिवसांची भूक । वरि चेवविली तें होय मीख । मग आवेशें पसरी मुख । ऊर्ध्व उजू ॥ २२८ ॥ तेथ हृदयकोशातळवटीं । जो पवनु भरे किरीटी । तया सगळेयाचि मिठी । देऊनि घाली ॥ २२९ ॥ मुखींच्या ज्वाळीं । तळीं वरी कवळी । मांसाची वडवाळी । आरोगूं लागे ॥ २३० ॥ जे जे ठाय समांस । तेथ आहाच जोडे घाउस । पाठीं एकदोनी घांस । हियाही भरी ॥ २३१ ॥ मग तळवे तळहात शोधी । उर्ध्वींचे खंड भेदी । झाडा घे संधी । प्रत्यंगाचा ॥२३२॥ अधोभाग तरी न संडी । परि नखींचेंही सत्व काढी । त्वचा धुवूनि जडी । पांजरेशीं ॥ २३३ ॥

निष्पिष्यास्थिरसं सर्वं सान्तः शोषयते शिराः ।
विरूढी रोमबीजानां कुण्ठत्वं येन गच्छति ॥ २३४ ॥
सप्तानामपि धातूनां पिबत्योघं पिपासिता ।
सद्य एव शरीरं च संशुष्कं कुरुतेऽखिलम् ॥ २३५ ॥
वायुर्नासापुटाभ्यां यो वहति द्वादशाङ्गुलीः ।
स्तम्भयित्वा हठादेव तमन्तः प्रतिकर्षति ॥ २३६ ॥
ऊर्ध्वगामी ततोऽपानः प्राणश्चाधोग इत्यमू ।
उभौ संगन्तुमीहेते क्षीणतां चक्रमेति च ॥ २३७ ॥
तौ स कुण्डलिनी ब्रूते शक्तावन्योन्यमीलने ।
संक्रुद्धा भो निवर्तेथां कौ युवां किंप्रयोजनौ ॥ २३८ ॥
शृणु पार्थ शरीरस्थं पृथ्वीतत्त्वं समग्रतः ।
सा जक्षिति तथाप्तत्त्वं निःशेषं कुरुतेऽखिलम् ॥ २३९ ॥
भूतद्वयं प्रजग्ध्यैवं सा सुतृप्तिं गता सती।
संनिकर्षे सुषुम्नायाः सौम्यरूपेण तिष्ठति ॥ २४० ॥

---

अस्थींचे नळे निरपे । शिरांचे हीर वोरपे । तंव बाहेरी विरूढी करपे । रोमबीजांची ॥ २३४ ॥ मग सप्त धातूंच्या सागरीं । ताहानेली घोंट भरी । आणि सवेंचि उन्हाळा करी । खडखडीत ॥ २३५ ॥ नासापुटौनि वारा । जो जातसे अंगुळें बारा । तो गचिये धरुनि माघारा । आंतु घाली ॥ २३६ ॥ तेथ अधवरौतें आकुंचे । ऊर्ध्व तळौतें खांचे । तया खेंवा माजी चक्राचे । पदर उरती ॥ २३७ ॥ एऱ्हवीं तरी दोन्ही तेव्हांचि मिळती । परी कुंडलिनी नावेक दुश्चित्त होती । ते तयातें म्हणे परौती । तुम्हीच कायसे एथें ॥ २३८ ॥ आयकें पार्थिव धातु आघवी । आरोगितां कांहीं नुरवी । आणि आपातें तंव ठेवी । पुसोनियां ॥ २३९ ॥ ऐसीं दोनी भूतें खाये । ते बळीं संपूर्ण धाये । मग सौम्य होऊनि राहे । सुषुम्नेपाशीं ॥ २४० ॥

तृप्तिजन्येन तोषेण तत्र यद्गरलं तया ।
वम्यते तेन रक्ष्यन्ते पीयूषेणासवः किल ॥ २४१ ॥
कामं निष्कामता तेन निर्वाप्यन्ते विषाग्निना ।
सर्वाङ्गाणि सबाह्यान्तः क्रियन्ते सबलानि च ॥ २४२ ॥

प्रवहन्ति नैव नाड्यो वायूनां नवविधत्वमुपरमति ।
अत एव देहधर्मा लुप्ताः स्वाभाविका भवन्त्येव ॥४४३॥

इडापिङ्गलयोरैक्यं ग्रन्थित्रयविमोचनम् ।
षण्णामपि च चक्राणां सम्बन्धच्छेदनं ततः ॥ २४४ ॥

चन्द्रसूर्याभिधौ वायू अनुमानेन कल्पितौ ।
ततः कार्पासवर्त्यापि न दृश्येते गवेषितौ ॥ २४५ ॥

विरमति बुद्धेः पुलिका घ्राणे यः परिमलोऽवशिष्टोऽस्ति ।
सोऽपि सुषुम्नां प्रविशति तया समं कुण्डलिन्यैव ॥ २४६ ॥

तिर्यक् क्षिप्त भ्रूकुटिस्थे चन्द्रामृतसरस्यथ ।
प्रवर्ततेऽमृतं तत्स्थं स्रोतुं कुण्डलिनीमुखे ॥ २४७ ॥

---

तेथ तृप्तीचेनि संतोखें । गरळ जें वमी मुखें । तेणें तियेचेनि पीयूखें । प्राणु जिये ॥ २४१ ॥ तो अग्नि आंतूनि निघे । परि सबाह्य निववूंचि लागे । ते वेळीं कसु बांधिती आंगें । सांडिला पुढतीं ॥ २४२ ॥ मार्ग मोडिती नाडीचे । नवविधपण वायूचें । जाय म्हणऊनि शरीराचे । धर्मु नाहीं ॥ २४३ ॥ इडा पिंगळा एकवटती । गांठी तिन्ही सुटती । साही पदर फुटती । चक्रांचे हे ॥ २४४ ॥ मग शशी आणि भानु । ऐसा कल्पिजे जो अनुमानु । तो वातीवरी पवनु । गिंवसितां न दिसे ॥ २४५ ॥ बुद्धीची पुळिका विरे । परिमळु घ्राणीं उरे । तोही शक्तीसवें संचरे । मध्यमेमाजीं ॥ २४६ ॥ तंव वरिलेकडोनि ढाळें । चंद्रामृताचें तळें । कानवडोनी मिळे । शक्तिमुखीं ॥ २४७ ॥

व्याश्नुतेऽङ्गानि सर्वाणि तन्नालेन भृतो रसः ।
प्राणाख्यः पवनश्चापि स्थान एव विलीयते ॥ २४८ ॥
विलीने सर्वथा सिक्थे सति तत्तमुषीस्थिते ।
केवलेन रसेनास्ते सा द्रुतेन भृता मुषी ॥ २४९ ॥
तथा पिण्डाकृतिः कान्तिस्त्वगावरणधारिणी ।
अवतीर्णेव सा साक्षाद्भाति तेजस्विनी तनुः ॥ २५० ॥
यथाभ्रावरणः सूर्यो विनिगूढवपुः स्थितः ।
तन्निरासे पुनर्दीप्तिं बिभ्राणः प्रकटीभवेत् ॥ २५१ ॥
यत् त्वगावरणं तद्वत् तनीयस्तत्तनूपरि ।
शुष्कत्वात्तल्लयं याति तुषस्तण्डुलतो यथा ॥ २५२ ॥
ततोऽवयवकान्तिः सा रुचिरा कापि शोभते ।
साक्षात् स्फटिकमूर्तिर्वा रत्नबीजाङ्कुरोऽथ वा ॥ २५३ ॥
सन्ध्या रागमयी न्वेषा तनुर्भाति विनिर्मिता ।
लिङ्गं नु घटितं शुद्धमन्तश्चैतन्यतेजसा ॥ २५४ ॥

---

तेणें नाळकें रस भरे । तो सर्वांगामाजीं संचरे । जेथींचा तेथ मुरे । प्राणपवनु ॥ २४८ ॥ तातलिये मुसे । मेण निघोनि जाय जैसें । मग कोंदली राहे रसें । वोतलेनि ॥ २४९ ॥ तैसी पिंडाचेनि आकारें । ते कळाचि कां अवतरे । वरी त्वचेचेनि पदरें । पांघुरली असे ॥ २५० ॥ जैसी आभाळाची बुंथी । करूनि राहे गभस्ती । मग फिटलिया दीसी । घरून ये ॥ २५१ ॥ तैसा आहाचवरि कोरडा । त्वचेचा असे पातोडा । तो झडोनि जाय कोंडा । जैसा होय ॥२५२॥ मग काश्मीरीचें स्वयंभ । कां रत्नबीजा निघाले कोंभ । अवयवकांतीची भांब । तैसी दिसे ॥ २५३ ॥ ना तरी संध्यारागींचे रंग । काढूनि वळिलें तें आंग । कीं अंतर्ज्योतीचें लिंग । निर्वाळिलें ॥ २५४ ॥

कुङ्कुमेन भृतं न्वेतत् सिद्धं सिद्धरसेन नु ।
अहो मूर्तिमती शान्तिरियं मे भाति पश्यतः ॥ २५५ ॥

आनन्दचित्रस्य नु लेप एष
प्रत्यक्षरूपं नु महासुखस्य ।
संतोषवृक्षस्य नु वा प्ररोहः
प्रवद्धमूलः स्थिरतामुपेतः ॥ २५६ ॥

कनकचम्पककोरक एष वा
विरचितोऽमृतपुत्तल एव नु ।
किमथवा प्रकटीकृतवैभवा
भवति कोमलतागुणवाटिका ॥ २५७ ॥

अहो किमेतच्छरदिन्दुबिम्बं
पुष्णाति कान्ति द्रवतामुपेतम् ।
अथापि मूर्तं किमु तेज एव
स्थितिं बिभर्ति स्वयमासने वा ॥ २५८ ॥

चन्द्रामृतं पिबति कुण्डलिनी यदेय-
मेवंविधं भवति नाम शरीरमेतत् ।
देहाकृतिं समवलोक्य तदा कृतान्त-
श्चित्ते स्वयं सुमहतीं भियमाबिभर्ति ॥ २५९ ॥

---

कुंकमाचें भरींव । सिद्धरसाचें वोतींव । मज पाहतां सावेव । शांतिवि ते ॥ २५५ ॥ तें आनंदचित्रींचे लेप । ना तरी महासुखाचें रूप । कीं संतोषतरूचें रोप । थांवलें जैसें ॥ ३५६ ॥ तो कनकचंपकाचा कळा । कीं अमृताचा पुतळा । नाना सासिंनला मळा । कोंवळिकेचा ॥ २५७ ॥ हो कांजे शारदियेचेनि वोलें । चंद्रबिंब पाल्हेलें । कां तेजचि मूर्त बैसलें । आसनावरी ॥ २५८ ॥ तैसें शरीर होये । जे वेळीं कुंडलिनी चंद्र पिये । मग देहाकृती बिहे । कृतांतु गा ॥ २५९ ॥

अपगच्छति वार्द्धक्यं तारुण्यं चापि विघाटितं भवति ।
बाल्यं तु लुप्तपूर्वं ह्युपतिष्ठति भूय एव नवम् ॥ २६० ॥
कामं वयसा बालो बलेन युक्तस्तु नाम बालोऽयम् ।
अतुलं गौरवमस्य हि धैर्यगुणस्येति गण्यतां लोके ॥२६१॥
पल्लविते कनकद्रुम उद्भिन्ना नाम रत्नकलिकेव ।
नित्यनवा नखराजिर्विराजते तस्य तेजसा युक्ता ॥ २६२ ॥
दन्ता आविर्भवन्त्यन्ये नितान्तलघवस्तु ते ।
हीरकाणां न्विमे पङ्क्ती अधश्चोपरि चाहिते ॥ २६३ ॥
रोमाङ्कुराः समुद्भूताः सर्वाङ्गे तस्य गोचराः ।
अणुप्रमाणका भान्ति माणिक्यानां कणा इव ॥ २६४ ॥
हस्तपादतलास्तस्य भान्तिरक्तोत्पलोपमाः ।
नैर्मल्यं नेत्रयोस्तावत्का मे वर्णयितुं मतिः ॥ २६५ ॥
मौक्तिकानि प्रवृद्धानि मान्ति नो शुक्तिसंपुटे ।
अतः सन्धिं विनिर्भिद्य निष्पतन्ति यथा बहिः ॥ २६६ ॥

---

वार्धक्य तरी बहुडे । तारुण्याची गांठी बिघडे । लोपली उघडे । बाळदशा ॥ २६० ॥ वयसा तरी येतुले वरी । एऱ्हवीं बाळाचा बळार्थु करी । धैर्याची थोरी । निरुपमु ॥ २६१ ॥ कनकद्रुमाच्या पालवीं । रत्नकळिका नित्य नवी । नखें तैसीं बरवीं । नवीं निघती ॥ २६२ ॥ दांतही आन होती । परि अपाडें सानेजती । जैसी दुबाहीं बैसे पांती । हिरेयांची ॥ २६३ ॥ माणिकुलियांचिया कणिया । सावियाचि अणुप्रमाणिया । तैसिया सर्वांगी उधवती अणिया । रोमांचिया ॥ २६४ ॥ करचरणतळें । जैसीं कां रातोत्पळें । पाखाळींव होती डोळे । काय सांगों ॥ २६५ ॥ निडाराचेनि कोंदाटें । मोतियें नावरती संपुटें । मग शिवणी जैसी उतटे । शुक्तिपल्लवांची ॥ २६६ ॥

नेत्रपल्लवयोर्दृष्टिर्मातुं तस्य तथाऽक्षमा ।
पूर्ववद्धासमानापि व्याप्नोति गगनं बहिः ॥ २६७ ॥

अपृथ्व्यंशविनाभावात् तस्य देहो भवत्यहो ।
कान्त्या सुवर्णतुल्योऽपि लाघवे पवनोपमः ॥ २६८ ॥

एवं गते पश्यति नाम योगी
स्थितं समुद्रात्परतोऽपि वस्तु ।
नाकोत्थितं चापि शृणोति नादं
भावं च जानाति पिपीलिकायाः ॥ २६९ ॥
तुरंगमारोहति वायुरूपं
पदाऽस्पृशन्नेव जले स याति ।
प्रसंगतः सिद्धय एवमेव
नानाविधास्तं समुपाश्रयन्ति ॥ २७० ॥

या प्राणस्य करं धृत्वा खं कृत्वा पादपीठिकाम् ।
सोपानपङ्क्तिमारुह्य मध्यमां हृदयं प्रति ॥ २७१ ॥

प्राप्ता कुण्डलिनी तां त्वं जगदम्बां विदांकुरु ।
शोभां जीवात्मनश्छायां विश्वबीजाङ्कुरस्य च ॥ २७२ ॥

---

तैसी पातियांचिये कवळिये न समाये । दिठी जाकळोनि निघों पाहे । आधिलीचि परी होये । गगना कवळिती ॥ २६७ ॥ आइकें देह होय सोनियाचें । परि लाघव ये वायूचें । जे आप आणि पृथ्वीचे । अंशु नाहीं ॥ २६८ ॥ मग समुद्रापैलीकडील देखे । स्वर्गींचा आलोचु आइके । मनोगत वोळखे । मुंगियेचें ॥ २६९ ॥ पवनाचा वारिकां वळघे । चाले तरी उदकीं पाउल न लागे । येणें येणें प्रसंगें । येती बहुता सिद्धि ॥ २७० ॥ आइकें प्राणाचा हात धरूनी । गगनाची पावठी करूनी । मध्यमेचेनि दादराहुनी । हृदया आली ॥ २७१ ॥ ते कुंडलिनी जगदंबा । जे चैतन्यचक्रवर्तीची शोभा । जया विश्वबीजाचिया कोंभा । साउली केली ॥ २७२ ॥

शून्यलिङ्गस्य पिण्डीयं करण्डी परमात्मनः।
शिवस्य, जन्मभूमिश्च प्रणवस्य किल स्फुटा ॥ २७३ ॥
अस्तित्वदं हृदयास्यान्तर्यदा विशति कुण्डली।
अनाहतध्वनिर्दिव्यो ध्वनति स्वयमुत्थितः ॥ २७४ ॥
कुण्डलिन्या अङ्गलग्नं बुद्धिचैतन्यमस्ति यत्।
स्तोकांशेन ध्वनिं श्रोतुं तत्तमेव प्रवर्तते ॥ २७५ ॥
घोषकुण्डे नैकरूपनादाचित्राणि तत्र च।
प्रणवाकारधारीणि प्रतीयन्ते स्वरूपतः ॥ २७६ ॥
इदं कल्पनया गम्यं क्व पुनः कल्पकं मनः।
वस्तुतः कस्य नादोऽयमित्येतन्नावगम्यते ॥ २७७ ॥
अहो नु विस्मृतं पार्थ यावद्वायुर्न नश्यति।
तावद्वाग्गगनेऽस्त्येव नादोऽ तः संप्रवर्तते ॥ २७८ ॥
तेनानाहतरूपेण मेघनादेन नादिते।
गगने विवृतद्वारं ब्रह्मस्थानं स्वयं भवेत् ॥ २७९ ॥

---

जे शून्य लिंगाची पिंडी । जे परमात्मया शिवाची करंडी । जे प्रणवाची उघडी । जन्मभूमी ॥ २७३ ॥ हें असो ते कुंडली । हृदयाआंतु साळी । अनुहताची बोली । चावळे ते ॥ २७४ ॥ शक्तीचिया आंगा लागलें । बुद्धीचें चैतन्य होतें जाइलें । तें तेणें आइकिलें । अलुमाळु ॥ २७५ ॥ घोषाच्या कुंडीं । नादाचित्रांचीं रूपडीं । प्रणवाचिया मोडी । रेखिलीं ऐसीं ॥ २७६ ॥ हेंचि कल्पावें तरी जाणिजे । परी कल्पितें कैंचें आणिजे । तरी नेणों काय गाजे । तिये ठायीं ॥ २७७ ॥ विसरोनि गेलों अर्जुना । जंव नाशु नाहीं पवना । तंव वाचा आथी गगना । म्हणऊनि घुमे ॥ २७८ ॥ तया अनाहताचेनि मेघें । आकाश दुमदुमों लागे । तंव ब्रह्मस्थानींचें वेगें । सहज फिटे ॥ २७९ ॥

चैतन्यमन्तरालम्बि हृदाकाशेऽत्र तिष्ठति ।
अभिन्ने महदाकाशादब्जगर्भोपमाकृतौ ॥ २८० ॥
जगदम्बा कुण्डलिनी प्रविशति चैतन्यमन्दिरं यावत् ।
तावत्तेजोरूपं समर्प्यते भोजनं तया तस्मै ॥ २८१ ॥
तेजःखाद्ये बुद्धिशाके नैवेद्ये सुसमर्पिते ।
द्वैतस्य किल नामापि धीलयान्नावशिष्यते ॥ २८२ ॥
अपहारात् स्वकान्तेः सा प्राणरूपैव जायते ।
कीदृशीव तदा भाति तद्वदामि निशम्यताम् ॥ २८४ ॥
पुत्तली पवनस्येयं पीताम्बरधरा पुरा ।
जाता विवसनेदानीमनावृतशरीरका ॥ २८३ ॥
अङ्गलग्नाथवा वायोर्लीना दीपशिखा यथा ।
विद्युद्विद्युत्य वाकाशे सहसादृश्यतां गता ॥ २८५ ॥
सरी स्वर्णमयी किंवा प्रकाशाम्बुझरी नु वा ।
वहन्ती समनुप्राप्ता हृदम्भोजनिवेशिनी ॥ २८६ ॥

---

आइकें कमळगर्भाकारें । जें महदाकाश दुसरें । जेथ चैतन्यें आघातुरें। करूनि अछिजे ॥ २८० ॥ तया हृदयाच्या परिवरीं । कुंडलिनिया परमेश्वरी। तेजाची शिदोरी । विनियोगिली ॥ २८१ ॥ बुद्धीचेनि शाकें। हातवोनें निकें । द्वैत तेथ न देखे । तैसें केलें ॥ २८२ ॥ निजकांति हारविली । मग प्राणुचि केवळ जाइली । ते वेळीं कैसी गमली । म्हणावी पां ॥ २८३ ॥ हो कां जे पवनाची पुतळी । पांघुरली होती सोनसळी । ते फेडूनियां वेगळी । ठेविली तिया ॥ २८४ ॥ ना तरी वायूचेनि आंगें झगटली । दीपाची दिठी निवटली । कां लखलखोनि हारपली । वीजु गगनीं ॥ २८५ ॥ तैसी हृदयकमळवेऱ्हीं । दिसे जैसी सोनियाची सरी । ना तरी प्रकाशजळाची झरी । वाहत आली ॥ २८६ ॥

अथ हृद्भूमिगर्भे सा सहसा विलयं गता ।
शक्तिः कुण्डलिनी चैवं शक्तावेव प्रलीयते ॥ २८७ ॥
अवस्थामीदृशीं प्राप्ता वक्तव्या शक्तिरेव सा ।
वस्तुतः केवलं प्राणरूपा सेत्यवगम्यताम् ।
नादबिन्दुकलाज्योतिर्धर्मा व्यक्तिं न यान्ति तु ॥ २८८ ॥
तदा मनोजयो नात्र न वा प्राणनिरोधनम् ।
न ध्यानेऽप्यादरो वापि स्तोकांशेनापि शिष्यते ॥ २८९ ॥
संकल्पाश्च विकल्पाश्च विरमन्त्यत्र सर्वथा ।
महाभूतद्रावणाय सुषी कुण्डलिनी नु किम् ॥ २९० ॥
पिण्डेन ग्रस्यते पिण्डो नाथसंकेत ईदृशः ।
श्रीकृष्णेन तु दिङ्मात्रं रहस्यस्यास्य दर्शितम् ॥ २९१ ॥
श्रोतॄन् सद्ग्राहकाञ् ज्ञात्वा तेषामग्रे प्रदर्शितः ।
ध्वनितार्थग्रन्थिकातो भावार्थः संपुटीकृतः ॥ २९२ ॥

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥

---

मग ते हृदयभूमी पोकळे । जिराली कां एके वेळे । तैसें शक्तीचें रूप मावळे । शक्तीचिमाजीं ॥ २८७ ॥ तेव्हां तरी शक्तीचि म्हणिजे । एऱ्हवीं तो प्राणु केवळ जाणिजे । आतां नादबिंदु नेणिजे । कळाज्योति ॥ २८८ ॥ मनाचा हूनि मारु । कां पवनाचा आधारु । ध्यानाचा आदरु । नाहीं परी ॥ २८९ ॥ हे कल्पना घे सांडी । ते नाहीं इये परवडी । हे महाभूतांची फुडी । आटणी देखा ॥ २९० ॥ पिंडें पिंडाचा ग्रासु । तो हा नाथसंकेतींचा दंशु । परि दाऊनि उद्देशु । महाविष्णु ॥ २९१ ॥ तया ध्वनिताचें केणें सोडुनी । यथार्थाची घडी झाडुनी । उपलविली म्यां जाणुनी । ग्राहीक श्रोते ॥ २९२ ॥

तेजोलोपे कुण्डलिन्या देहरूपं विनश्यति ।
योगी भवति सूक्ष्मत्वाल्लोकदृष्टेरगोचरः ॥ २९३ ॥
कामं पूर्ववदेवास्य देहः सावयवः किल ।
घटितो वायुनेवेति प्रत्ययो जायते पुनः ॥ २९४ ॥
अहो नु कदलीगर्भः स्थितोऽयं निस्त्वचीकृतः ।
उद्भिन्नावयवः किं नु साक्षादाकाश एव वा ॥ २९५ ॥
एवंभूतशरीरोऽसौ योगी खेचर उच्यते ।
खेचरत्वं चमत्कारो लोके देहभृतः किल ॥ २९६ ॥
साधकेन यता मार्गे पदपङ्क्तिर्वितन्यते ।
तत्रैनमुपतिष्ठन्ति सिद्धयश्चाणिमादयः ॥ २९७ ॥
कथयाप्यनया किं नः पार्थेदमवधार्यताम् ।
भूतत्रयस्य लोपोऽस्ति देह एव हि योगिनः ॥ २९८ ॥
भूर्जले विरतिं याति जलं तेजसि लीयते ।
नीयते च शमं तेजः पवनेन हृदन्तरे ॥ २९९ ॥

---

ऐकें शक्तीचें तेज जेव्हां लोपे । तेथ देहाचें रूप हारपे । मग तो डोळ्यांमाजीं लपे । जगाचिया ॥ २९३ ॥ एऱ्हवीं आदिलाची ऐसें । सावयव तरी दिसे । परी वायूचें कां जैसें । वळिलें होय ॥ २९४ ॥ ना तरी कर्दळीचा गाभा । बुंथी सांडोनी उभा । कां अवयवचि नभा । उदयला तो ॥ २९५ ॥ तैसें होय शरीर । तैं तें म्हणिजे खेचर । हें पद होतां चमत्कार । पिंडजनीं ॥ २९६ ॥ देखें साधकु निघोनि जाये । मागां पाउलांची वोळ राहे । तेथ ठायीं ठायीं होये । अणिमादिक ॥ २९७ ॥ परी तेणें काय काज आपणपयां । अवधारीं ऐसा धनंजया । लोप आथी भूतत्रया । देहींचा देहीं ॥ २९८ ॥ पृथ्वीतें आप विरवी । आपातें तेज जिरवी । तेजातें पवनु हरवी । हृदयामाजीं ॥ २९९ ॥

शिष्यते वायुरेवैकः स शरीराकृतिः परम् ।
सोऽपि कालेन गगने ब्रह्मरन्ध्रे विलीयते ॥ ३०० ॥
तदा कुण्डलिनी नाम्ना मारुतीत्यभिधीयते ।
शक्तित्वं तु स्थिरं नैति यावच्छिवसरूपताम् ॥ ३०१ ॥
बन्धं जालंधरं हित्वा भित्त्वा चापि ककाटिकाम् ।
गिरिं गगनमारुह्य स्थितिं भजति मारुती ॥ ३०२ ॥
तत ॐकारपृष्ठेऽसौ निधाय पदमात्मनः ।
समुल्लङ्घ्यते सद्यः पश्यन्तीपादपीठिकाम् ॥ ३०३ ॥
तन्मात्रार्धप्रमाणेन ततोऽसौ गगनान्तरे ।
प्रवेशं कुर्वतीवास्ते सागरे वाहिनी यथा ॥ ३०४ ॥
ब्रह्मरन्ध्रे स्थिरीभूय सोऽहंभावस्वरूपकौ ।
भुजौ प्रसार्य सा तूर्णं परब्रह्मोपगूहति ॥ ३०५ ॥
ततो जवनिका भूतपञ्चकाख्यापसार्यते ।
साकाशा चाङ्गसंयोगाच्छिवे शक्तिर्विलीयते ॥ ३०६ ॥

---

पाठीं आपण एकला उरे । परि शरीराचेनि अनुकारें । मग तोही निगे अंतरें । गगना मिळे ॥ ३०० ॥ ते वेळीं कुंडलिनी हे भाष जाये । मग मारुती ऐसें नाम होये । परि शक्तिपण तें आहे । जंव न मिळे शिवीं ॥ ३०१ ॥ मग जालंधर सांडी । ककारांत फोडी । गगनाचिये पाहाडीं । पैठी होय ॥ ३०२ ॥ ते ॐकाराचिये पाठीं । पाय देत उठाउठी । पश्यंतीचिये पाउठी । मागां घाली ॥ ३०३ ॥ पुढें तन्मात्राअर्धवरी । आकाशाच्या अंतरीं । भरती गमे सागरीं । सरिता जेवीं ॥ ३०४ ॥ मग ब्रह्मरंध्रीं स्थिरावोनी । सोहंभावाचिया बाह्या पसरुनी । परमात्मलिंगा धांवोनी । आंगा घडे ॥ ३०५ ॥ तंव महाभूतांची जवनिका फिटे । मग दोहींसि होय झटें । तेथ गगनासकट आटे । समरसीं तिये ॥ ३०६ ॥

वारि वारिदमुखेन शुद्धतां
वारिधेः समुपयाति तत्पुनः।
भूतले पतति वृष्टिरूपंतो
वारिधिं च वहदेव गच्छति ॥ ३०७ ॥

एवं मिषेण पिण्डस्य जीवो ब्रह्मणि लीयते।
एतदैक्यं तयोः पार्थ समुद्रजलयोरिव ॥ ३०८ ॥

किमासीदुभयोर्द्वैतमैक्यमेवाथवेति च ।
विवञ्चनावकाशोऽपि तत्र नैवावतिष्ठते ॥ ३०९ ॥

यदेवं लयमायाति गगने गगनं किल।
अहो ब्रह्मपदप्राप्तिस्तस्येहानुभवात् स्वयम् ॥ ३१० ॥

अतो वाचो विषयतां नार्थ एषोऽधिरोहति ।
अशक्ये वर्णने शब्दैः कुतः संवादगोचरः ॥ ३११ ॥

वैखरी वहते गर्वं याभिप्रायनिवेदने ।
सा नूनं दुर्बलीभूता दूर एवावतिष्ठते ॥ ३१२ ॥

भ्रूपृष्ठेऽत्र मकारस्य नाङ्गं विशति केवलम् ।
एकः कथमपि प्राणो गगनं प्रविशत्यहो ॥ ३१३ ॥

---

पैं मेघाचेनि मुखीं निवडला । समुद्र कां वेर्धी पडिला । तो मागुता जैसा आला । आपणपयां ॥ ३०७ ॥ तेवीं पिंडाचेनि मिषें । पदीं पद प्रवेशे । तें एकत्व होय तैसें । पांडुकुमरा ॥ ३०८ ॥ आतां दुजें एक होतें । कीं एकचि हें आइतें । ऐशिये विवंचनेंपुरतें । उरेचिना ॥३०९॥ गगनीं गगन लया जाये । ऐसें जें कांहीं आहे । तें अनुभवें जो होये । तो होऊनि ठाके ॥ ३१० ॥ म्हणोनि तेथीची मातु । न चढेचि बोलाचा हातु । जेणें संवादाचिया गांवाआंतु । पैठी कीजे ॥ ३११ ॥ अर्जुना एऱ्हवीं तरी । इया अभिप्रायाचा जे गर्व धरी । ते पाहें पां वैखरी । दुरी ठेली ॥ ३१२ ॥ भ्रूलता मागलीकडे । तेथ मकाराचेंचि आंग नडे । सडेया प्राणा सांकडें । गगना येतां ॥ ३१३ ॥

सोऽत्र तद्रूपतां याति शब्दतेजोऽस्तमेति च ।
तत आकाशतत्त्वस्य लयो भवति सर्वशः ॥ ३१४ ॥
महाशून्याभिधे यत्र गभीरे सलिलाशये ।
आकाशस्य न नामापि तत्र शब्दस्य का कथा ॥ ३१५ ॥
नातोऽक्षरैः समाख्येयं न कर्णाकलनाक्षमम् ।
एवं स्फुटमिदं नेति त्रिर्वाचा कथयामि भोः ॥ ३१६ ॥
कदापि यदि दैवेन प्रत्यक्षानुभवो भवेत् ।
भाव्यमात्मस्वरूपेण तदा पुंसेत्यलं गिरा ॥ ३१७ ॥
न वेद्यं किंचिदप्यग्रे तदस्त्वेतत्पुनः पुनः ।
अनेनैव वृथोक्तेन वचसा किं धनुर्धर ॥ ३१८ ॥
यतो वाचो निवर्तन्ते संकल्पो यत्र नश्यति ।
विचारमयवातोऽपि प्रवेष्टं यत्र न क्षमः ॥ ३१९ ॥
लावण्यमुन्मनःस्थित्यास्तुर्याया यौवनं च यत् ।
अनाद्यगण्यं परमतत्त्वं यदिह गण्यते ॥ ३२० ॥
मूलं विश्वस्य यद् योगद्रुमस्य फलमेव यत् ।
आनन्दस्य च यत्पार्थ चैतन्यं केवलं स्मृतम् ॥ ३२१ ॥

---

पाठीं तेथचि तो भेटळला । तैं शब्दाचा दिवो मावळला । मग तयाहि वरी आटु भविन्नला । आकाशाचा ॥ ३१४ ॥ आतां महाशून्या-चिया डोहीं । जेथ गगनाचीचि थावो नाहीं । तेथ तागा लागेल काई । बोलाचा ह्या ॥ ३१५ ॥ म्हणूनि आखरांमाजि सांपडे । कीं कानवरी जोडे । हें तैसें नव्हे फुडें । त्रिशुद्धी गा ॥ ३१६ ॥ जैं कहीं दैवें । अनु-भविलें फावे । तैं आपणाचि हें ठाकावें । होऊनियां ॥ ३१७ ॥ पुढती जाणणें तें नाहींचि । म्हणोनि असो किती हेंचि । बोलावें आतां वायांचि धनुर्धरा ॥ ३१८ ॥ ऐसें शब्दजात माघौतें सरे । तेथ संकल्पाचें आयुष्य पुरें । वाराही जेथ न शिरे । विचाराचा ॥ ३१९ ॥ जें उन्मनियेचें लावण्य । जें तुर्येचें तारुण्य । अनादि जें अगण्य । परमतत्त्व ॥ ३२० ॥

आकारस्य विदुः प्रान्तं मोक्षस्यैकान्तमेव यत् ।
आदिश्चान्तश्च यत्र द्वावुभावपि लयं गतौ ॥ ३२२ ॥

भूतानां महतां बीजं महतस्तेजसोऽपि च ।
यत्तेजो यन्निजं रूपं कौन्तेय मम विद्यते ॥ ३२३ ॥

नास्तिकैर्भक्तवृन्दानि पीडितानि प्रपश्यता ।
चतुर्भुजाकृतिर्येन सगुणेयमुरीकृता ॥ ३२४ ॥

महासुखमनिर्वाच्यं यदिदं ये तु पूरुषाः ।
आफलोदयकर्माणः सुखरूपा भवन्ति ते ॥ ३२५ ॥

यदेतत् ख्यातमस्माभिस्तदायासेन साधितम् ।
यैस्ते भूत्वा शुद्धरूपा अस्माकं तुल्यतां गताः ॥ ३२६ ॥

परब्रह्मरसेनैव पूर्त्वा देहाकृतिं मुर्षीम् ।
पुत्तला ब्रह्मणो मूर्ता घटिता इव भान्ति ते ॥ ३२७ ॥

---

जें विश्वाचें मूळ । जें योगद्रुमाचें फळ । जें आनंदाचें केवळ । चैतन्य गा ॥ ३२१ ॥ जें आकाराचा प्रांतु । जें मोक्षाचा एकांतु । जेथ आदि आणि अंतु । विरोनि गेले ॥ ३२२ ॥ जें महाभूतांचें बीज । जें महातेजाचें तेज । एवं पार्था जें निज–। स्वरूप माझें ॥ ३२३ ॥ ते हे चतुर्भुज कोंभेली । जयाची शोभा रूपासि आली । देखोनि नास्तिकीं नोकिलीं । भक्तवृंदें ॥ ३२४ ॥ तें अनिर्वाच्य महासुख । पैं आपणचि जाहले ते पुरुख । जयांचे कां निष्कर्ष । प्राप्तिवेरीं ॥ ३२५ ॥ आम्हीं साधन हें जें सांगितलें । तेंचि शरीरीं जिहीं केलें । ते आमुचेनि पाडें आले । निर्वाळलेया ॥ ३२६ ॥ परब्रह्माचेनि रसें । देहाकृतीचियेनि मुसें । वोतींव जाहले तैसे । दिसती आंगें ॥ ३२७ ॥

प्रतीतिरुदियाच्चित्ते यदीयं संवृतं भवेत् ।
विश्वं, पार्थ उवाचाथ यदात्थ त्वं तथैव तत् ॥ ३२८ ॥

देवेदानीमुपायो यस्त्वया प्रोक्तः पदं हि सः ।
अभीष्टार्थस्य संसिद्धेः स्पष्टमेतद्विभाति मे ॥ ३२९ ॥

योगेऽस्मिन् ये दृढाभ्यासास्ते ब्रह्मत्वमसंशयम् ।
उपयान्तीति जानामि रीतेः कथयतस्तव ॥ ३३० ॥

इदं शृण्वत एवापि यद्बोधो जायते मम ।
साक्षादनुभवन् को नु नैव तद्रूपतां व्रजेत् ॥ ३३१ ॥

अतोऽत्र विषये किंचिन्मन्तव्यं न मयान्यथा ।
अवधानं क्षणं त्वत्र वाचि मे देव दीयताम् ॥ ३३२ ॥

योगः कृष्ण त्वयोक्तो यः स ममाभिमतः किल ।
न पुनर्योग्यताहीनोऽनुष्ठातुं पारयाम्यहम् ॥ ३३३ ॥

सहजं मे बलं यावत् सिद्धिः स्यात्तावतैव चेत् ।
इममेव तदा मार्गमभ्यस्येयमहं सुखम् ॥ ३३४ ॥

---

जरि हे प्रतीति इन अंतरीं फांके । तरी विश्वचि हें अवघें झांके । तंव अर्जुन म्हणे निकें । साचचि जी हें ॥ ३२८ ॥ कां जे आपण आतां देवो । हा बोलिले जो उपावो । तो प्राप्तीचा ठावो । म्हणोनि घडे ॥३२९॥ इये अभ्यासीं जे दृढ होती । ते भरंवसेनि ब्रह्मत्वा येती । हें सांगतियाची रीती । कळलें मज ॥ ३३० ॥ देवा गोठीचि हे ऐकतां । बोधु उपजतसे चित्ता । मा अनुभवें तल्लीनता । नोहेल केवीं ॥ ३३१ ॥ म्हणऊनि एथ कांहीं । अनारिसें नाहीं । परी नावभरी चित्त देईं । बोला एका ॥३३२॥ आतां कृष्णा तुवां सांगितला योगु । तो मना तरी आला चांगू । परि न शके करूं पांगू । योग्यतेचा ॥ ३३३ ॥ सहजें आंगिक जेतुलें आहे । तेतुलियाचि जरी सिद्धि जाये । तरी हाचि मार्गू सुखोपायें । अभ्यासीन ॥ ३३४ ॥

त्वदादिष्टमनुष्ठातुं क्षमतैव न चेन्मम ।
प्रष्टव्यं योग्यताभावे सुकरं यत्तदेव हि ॥ ३३५ ॥
इयं मम मनीषेति देव त्वमनुयुज्यसे ।
अवधानं दीयमानमत्रार्थेऽभ्यर्थये त्वया ॥ ३३६ ॥
मयावधारितं देव साधनं त्वन्निरूपितम् ।
येन केनापि किं शक्यमिदमभ्यसितुं पुनः ॥ ३३७ ॥
असाध्यमथ वा किंचित्तत्रास्ते योग्यतां विना ।
तदा कृष्णोऽब्रवीत् पार्थ किमिदं पृच्छ्यते त्वया ॥ ३३८॥
गरीयान् प्रस्तुतोऽर्थोऽयं निर्वाणविषयः किल ।
अन्यः साधारणश्चापि किं सिध्येद्योग्यतां विनां ॥ ३३९॥
लोके यां योग्यतामाहुः सिद्ध्यधीनामवेहि ताम् ।
यदारब्धं हि संप्राप्य योग्यतां तत्फलप्रदम् ॥ ३४० ॥
योग्यतेति पदार्थोऽयं नापणे सुलभः खलु ।
योग्यानां पुरुषाणां किं खनिः कुत्रापि विद्यते ॥ ३४१ ॥

---

ना तरी देव जैसें सांगतील । तैसें आपणपें जरी न ठकेल । तरी योग्यतेवीण होईल । तेंचि पुसों ॥ ३३५ ॥ जवींचिये ऐसी धारण । म्हणोनि पुसावया जाहलें कारण । मग म्हणे तरी आपण । चित्त देइजो ॥ ३३६ ॥ हां हो जी अवधारिलें । जें हें साधन तुम्ही निरूपिलें । तें आवडतयाहि अभ्यासिलें । फावों शके ॥ ३३७ ॥ कीं योग्यतेवीण नाहीं । ऐसें हन आहे कांहीं । तेथ श्रीकृष्ण म्हणती काई । धनुर्धरा ॥ ३३८ ॥ हें काज कीर निर्वाण । परि आणिकही जें कांहीं साधारण । तेंही अधिकाराचेवोडवेविण । काय सिद्धी जाय ॥ ३३९ ॥ पैं योग्यता जे म्हणिजे । ते प्राप्तीची अधीन जाणिजे । कां जे योग्य होऊनि कीजे । तें आरंभिलें फळे ॥ ३४० ॥ तरी तैसी एथ कांहीं । साविया।चि केणी नाहीं । आणि योग्यांची काई । खाणी असे ॥ ३४१ ॥

मनागपि विरक्तो यो देहधर्मेषु यो रतः ।
न किं स एवाधिकारी निश्चेतव्योऽत्र कर्मणि ॥ ३४२ ॥
इयती योग्यता नाम तवापि किल नेति न ।
इत्युक्त्वा तेन पार्थस्य वीतशङ्कं कृतं मनः ॥ ३४३ ॥
कृष्णोऽथोवाच भोः पार्थ व्यवस्था सेयमीदृशी ।
योग्यताऽनियतस्येह सर्वथा नैव विद्यते ॥ ३४४ ॥

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥

रसनाया यो दासो निद्रायाः सर्वथा वशो यो वा ।
योगेऽस्मिन्नाधिकारः पुंसस्तस्य प्रकीर्तितो नैव ॥ ३४५ ॥
दुराग्रहेण बद्धा वा योऽवरुन्द्धे क्षुधां तृषाम् ।
छेदयत्यपि चाहारं हठादेव विलोपयन् ॥ ३४६ ॥
मनाङ् नोपैति यो निद्रामाविष्ट इव नृत्यति ।
शरीरस्याप्यनीशानः स कथं योगमाप्नुयात् ॥३४७॥

---

नावेक विरक्तु । जाहला देहधर्मी नियतु । तरि तोचि नव्हे व्यवस्थितु । अधिकारिया ॥ ३४२ ॥ येतुलालिये आयणी माजीं येवढें । योग्यपण तूतें ही जोडे । एसें प्रसंगें सांकडे । फेडिलें तयाचें ॥ ३४३ ॥ मग म्हणे पार्था । ते हे ऐसी व्यवस्था । अनियतासी सर्वथा । योग्यता नाहीं ॥ ३४४ ॥ जो रसनेन्द्रियाचा अंकिला । कां निद्रेसी जीवें विकला । तो नाहीं येय म्हणितला । अधिकारिया ॥ ३४५ ॥ अथवा आग्रहाचिये बांदोडी । क्षुधा तृषा कोंडी । आहारातें तोडी । मारूनियां ॥ ३४६ ॥ निद्रेचिया वाटा न वचे । ऐसा हढिवेचेनि अवतरणें नाचे । तें शरीरचि नव्हे तयाचें । मा योगु कवणाचा ॥ ३४७ ॥

अतोऽतिरिक्तो विषयोपभोगः
कदापि युक्तो न यथैव पुंसः ।
तथा निरोधोऽप्यतिरिक्त एव
निजेंद्रियाणां सुधिया न कार्यः ॥ ३४८ ॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥

नाहार एवापि न सेवनीयो
भाव्यं तु युक्तेन मितेन तेन ।
क्रियाकलापोऽप्यनयैव रीत्या
भुवीह पुंसाचरितव्य एव ॥ ३४९ ॥
मितैव वाणी समुदीरणीया
पदानि धेयानि तथा मितानि ।
निद्रापि काले समुपान्नजन्ती
संमाननीयैव किलादरेण ॥ ३५० ॥
आवश्यकं जागरणं यदि स्यात्
कदापि, तेनापि मितेन भाव्यम् ।
न धातुसाम्यं विकृतिं यथेयात्
स्वास्थ्यं च देहस्य सुखेन तिष्ठेत् ॥ ३५१ ॥
एवं खाद्येनार्पितेन युक्तेन च मितेन च
तर्पितानीन्द्रियाणि स्युर्मनसः परितुष्टये ॥ ३५२ ॥

---

म्हणोनि अतिशयें विषयो सेवावा । तैसा विरोधु नोहावा । कां सर्वथा निरोधावा । हेंही नको ॥ ३४८ ॥ आहार तरी सेविजे । परी युक्तीचेनि मापें मविजे । क्रियाजात आचरिजे । तयाचि स्थिती ॥ ३४९ ॥ मितलां बोलीं बोलिजे । मितलिया पाउलीं चालिजे । निद्रेही मानु दीजे । अवसरें एकें ॥ ३५० ॥ जागणें जरी जाहलें । तरी व्हावें तें मितलें । येतुलेनि धातुसाम्य संचलें । असेल सहजें ॥ ३५१ ॥ ऐसें युक्तीचेनि हातें । जैं इंद्रियां वोपिजे भातें । तैं संतोषासी वाढतें । मनचि करी ॥ ३५२ ॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निःस्पृहः सर्वकाम्येभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

बहिर्या युक्तिमुद्रैवं सान्तः सुखविवृद्धये ।
योगोऽप्यनभ्यस्त एव विनायासमवाप्यते ॥ ३५३ ॥
यथोद्यमनिमित्तेन महाभाग्योदये सति ।
समृद्धिजातं पुरुषं स्वयमेवोपतिष्ठति ॥ ३५४ ॥
युक्तिमान् कौतुकेनापि तथाभ्यासोन्मुखो यदा ।
तस्यात्मप्राप्तिरूपेण फलत्यनुभवस्तदा ॥ ३५५ ॥
अतो भाग्यवतो यस्य युक्तिमत्त्वमिदं भवेत् ।
पुरुषः सोपवर्गस्य लक्ष्म्या पार्थ विराजते ॥ ३५६ ॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥

प्रयागसदृशो यत्र संगमो युक्तियोगयोः ।
देहपातावधि क्षेत्रे तत्र यस्य स्थिरं मनः ॥ ३५७ ॥
योगयुक्तः स वक्तव्यो ज्ञातव्यं च प्रसङ्गतः ।
निर्वाते स्थापितो दीपो भवत्यस्योपमोचिता ॥ ३५८ ॥

---

बाहेर युक्तीची मुद्रा पडे । तंव आंत आंत सुख वाढे । तेथें सहजेंचि योगु घडे । नाभ्यासितां ॥ ३५३ ॥ जैसें भाग्याचिये भडसें । उद्यमाचेनि मिसें । मग समृद्धिजात आपैसें । घर रिघे ॥ ३५४ ॥ तैसा युक्तिमंतु कौतुकें । आभ्यासाचिया मोहरा ठाके । आणि आत्मसिद्धीचि पिके । अनुभवु तयाचा ॥ ३५५ ॥ म्हणोनि युक्ति हे पांडवा । घडे जया सदैवा । तो अपवर्गीचिये राणिवा । अळंकरिजे ॥ ३५६ ॥ युक्ति योगाचें आंग पावे । ऐसें प्रयाग जेथ होय बरवें । तेथ क्षेत्रसंन्यासें स्थिरावे । मानस जयाचें ॥ ३५७ ॥ तयातें योगयुक्त तूं म्हण । हेंही प्रसंगें जाण । तें दीपाचें उपलक्षण । निर्वातींचिया ॥ ३५८ ॥

मनोगतं तव ज्ञात्वा यद्विवक्षामि सांप्रतम् ।
तत्सर्वं सावधानेन श्रूयतां पार्थ चेतसा ॥ ३५९ ॥

योगप्राप्तौ साभिलाषं मनस्ते
हन्ताभ्यासे नासि दक्षस्तु पार्थ ।
दुःसाध्यत्वं ब्रूहि तत्रेदृशं किं
यत्कातर्यं त्वादृशस्यापि कुर्यात् ॥ ३६० ॥

सायासोऽभ्यासोऽयं भृशमिति मिथ्यैव ते ग्रहो मा भूत् ।
दुष्टो हीन्द्रियवर्गः सुघटेऽप्यर्थे बिभीषिकां तनुते ॥ ३६१ ॥

चञ्चलं स्थिरयन्नायुर्वारयञ्जीवितं लयात् ।
अगदः शत्रुभावेन गृह्यते जिह्वया न किम् ॥ ३६२ ॥

हितानुकूलं यदिहास्ति कर्म
सदैव दुःखाय तदिन्द्रियाणाम् ।
वामस्वभावानि न चेदिमानि
योगेन तुल्यं सुलभं किमन्यत् ॥ ३६३ ॥

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥

---

आतां तुझें मनोगत जाणोनी । कांहींएक आम्ही म्हणोनि । तें निकें चित्त देउनी । परिसावें गा ॥ ३५९ ॥ तूं प्राप्तीची चाड वाहसी । परि अभ्यासीं दक्षु न होसी । तें सांग पां काय बिहसी । दुवाडपणा ॥ ३६० ॥ तरी पार्था हें झणें । सायास घेसी हो मनें । वायां बागूल इयें दुर्जनें । इंद्रियें करिती ॥ ३६१ ॥ पाहें पां आयुष्यातें अढळ करी । जें सरतें जीवित वारी । तया औषधातें वैरी । काय जिव्हा न म्हणे ॥ ३६२ ॥ ऐसें हितासि जें जें निकें । तें सदाचि या इंद्रियां दुखें । एऱ्हवीं सोपें योगासारिखें । कांही आहे ॥ ३६३ ॥

अतोऽभ्यासः साधुरुक्तो यो दृढासनपूर्वकः।
तेनैव जातुचिच्छक्यमिन्द्रियाणां निरोधनम् ॥३६४॥
निगृहीतेष्विन्द्रियेषु योगेनानेन वस्तुतः।
चैतन्येन स्वयं चित्तं संयोक्तुं संप्रवर्तते ॥ ३६५ ॥
निवृत्यान्तर्मुखीभूतं पश्यत्यात्मानमात्मना।
साभिज्ञानं तदा ब्रूते यथा ब्रह्मास्म्यहं स्वयम् ॥ ३६६ ॥
तदात्वे सुखसाम्राज्यमुपभोक्तुं प्रवर्तते।
चित्तत्वं विरमत्यस्य सामरस्येन चात्मना ॥ ३६७ ॥
नास्ति यस्मात्परं किंचिन्नेन्द्रियाणि च यद्विदुः।
तेन तन्मयतामेत्य स्वयमात्मनि तिष्ठति ॥ ३६८ ॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥

मेरुतोऽप्यथ तुङ्गेन दुःखशैलेन चूर्णिते।
अपि देहेऽस्य भारेण व्यथा नाल्पापि चेतसः ॥ ३६९ ॥

---

म्हणोनि आसनाचिया गाढिका। जो आम्हीं अभ्यासु सांगितला निका। तेणें होईल तरी हो कां। निरोध ययां ॥३६४॥ एऱ्हवीं तरी येणें योगें। जैं इंद्रियां विंदाण लागे। तैं चित्त भेटों रिगे। आपणपेयां॥३६५॥ परतोनि पाठिमोरें ठाके। आणि आपाणियांतें आपण देखे। देखत-खेंवो वोळखे। म्हणे तत्त्व हें मीचि ॥ ३६६ ॥ तिये वोळखीचिसरिसें। सुखाचिया साम्राज्यीं बैसे। मग आपणपां समरसें। विरोनि जाय ॥६७॥ जयापरतें आणिक नाहीं। जयातें इंद्रियें नेणती कंहीं। तें आपणचि आपुलया ठायीं। होऊनि ठाके ॥ ३६८ ॥ मग मेरूपासूनि थोरें। देह दुःखाचेनि डोंगरें। दाटिजो पां पडिभरें। चित्त न दटे ॥ ३६९ ॥

छिन्नो भवतु शस्त्रेण पावके पतितोऽस्तु वा ।
देहो महासुखे सुप्तं चित्तं नैव प्रबुध्यते ॥ ३७० ॥
आत्मतत्त्वे विलीनत्वाद्देहापेक्षा न चेतसः ।
अलौकिके सुखे लब्धे युक्ता नामास्य विस्मृतिः ॥ ३७१ ॥

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥

संसारसुखसक्तेन मनसा परिमुच्यते ।
वासनास्मृतिरेवापि यदास्वाद्य सुखं परम् ॥ ३७२ ॥
यद् योगस्यास्ति सौभाग्यं यत्संतोषस्य वैभवम् ।
यस्यैव च कृते ज्ञानं ज्ञानत्वेन विराजते ॥ ३७३ ॥
तदभ्यस्तेन योगेन दृश्यं सावयवं किल ।
द्रष्टा तस्मिन् दृष्ट एव तद्रूपो भवति स्वयम् ॥ ३७४ ॥

संकल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २४ ॥

एकधा सुलभो योगः स एवायं धनंजय ।
कामादेस्तु वधात्कार्यः संकल्पः पुत्रशोकभृत् ॥ ३७५ ॥

---

कां शस्त्रें वरी तोडिलिया । देह अग्नीमाजीं पडलिया । चित्त महा सुखीं पहुडलिया । चेवोंचि नये ॥ ३७० ॥ ऐसें आपणपां रिगोनि ठाये । मग देहाची वास न पाहे । आणिकचि सुख होऊनि जाये । म्हणूनि विसरे ॥ ३७१ ॥ जया सुखाचिया गोडी । मन आर्तीची सेचि सोडी । संसाराचिया तोंडीं । गुंतलें जें ॥ ३७२ ॥ जें योगाची बरव । संतोषाची राणिव । ज्ञानाची जाणीव । जयालागीं ॥ ३७३ ॥ तें अभ्यासिलेनि योगें । सावयव देखावें लागे । देखिले तरी आंगें । होइजेल गा ॥ ३७४ ॥ तरि तोचि योगु बापा । एके परी आहे सोपा । जरी पुत्रशोकु संकल्पा । दाखविजे ॥ ३७५ ॥

निशम्य विषयाञ् शान्तान्नियतानीन्द्रियाणि च ।
निशाम्य हृदयस्फोटादयं त्यजति जीवितम् ॥ ३७६ ॥
वैराग्येनेदृशेनास्य यात्रा परिसमाप्यते ।
बुद्धिर्वितनुते वासं सुखेन धृतिमन्दिरे ॥ ३७७ ॥

शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥२५॥
यतो यतो निश्चलति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥

बुद्धिर्धृतिगृहीता चेत्सात्मगेहे शनैः शनैः ।
मनोऽनुभवमार्गेण कुरुते संप्रतिष्ठितम् ॥ ३७८ ॥
अनेनापि प्रकारेण प्राप्तिं लभ्यां विचारय ।
एषोऽप्यथ न ते सिध्येत् सुसाध्योऽन्यो निशम्यताम् ३७९
एकं नियममेवामुं कुर्यात्सर्वात्मना यथा ।
चलितव्यं निश्चितार्थात्पदं नैकमपि स्वयम् ॥ ३८० ॥
इयता चेतसः स्थैर्येऽनायासेन कृतार्थता ।
अन्यथा सति मोक्तव्यं स्वैरत्वेनैव वर्तितुम् ॥ ३८१ ॥

---

हा विषयातें निमालिया आइके । इंद्रियें नेमाचिया घारणीं देखे । तरी हियें घालूनि मुके । जीवित्वासी ॥ ३७६ ॥ ऐसें वैराग्य हें करी । तरी संकल्पाची सरे वारी । सुखें धृतीचिया घवळारीं । बुद्धि नांदे ॥ ३७७ ॥ बुद्धी धैर्या होय वसौटा । तरी मनातें अनुभवाचिया वाटा । हळु हळु करी प्रतिष्ठा । आत्मभुवनीं ॥ ३७८ ॥ याही एके परी । प्राप्ति आहे विचारीं । हें न ठके तरी सोपारी । आणिक ऐकें ॥ ३७९ ॥ आतां नियमुचि हा एकला । जीवें करावा आपुला । जैसा कृतनिश्चयाचिया बोला । बाहेरा नोहे ॥ ३८० ॥ जरी येतुलेनि चित्त स्थिरावे । तरी काजा आलें स्वभावें । नाहीं तरी घालावें । मोकळुनी ॥ ३८१ ॥

एवं मुक्तं व्रजेद्यत्र ततो नियम एव तत् ।
निवर्तयेत् स्थिरत्वेन स्थास्यत्येव कदाचन ॥ ३८२ ॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २७ ॥

कियताप्यथ कालेन स्थैर्ययोगेण वै मनः ।
स्वयमात्मस्वरूपस्य समीपमुपयास्यति ॥ ३८३ ॥
आत्मरूपमथालोक्य तदङ्गं परिरप्स्यते ।
जाते द्वैतलये विश्वं भृतं स्यादात्मतेजसा ॥ ३८४ ॥
आकाशे भिन्नभावेन दृष्टमभ्रं विलीयते ।
तदाकाशेनैव विश्वं यथा व्याप्तं प्रदृश्यते ॥ ३८५ ॥
तथा चित्तलये जाते चैतन्यमयमेव हि ।
सर्वं भवत्युपायोऽयं ब्रह्मप्राप्तेः सुखः खलु ॥ ३८६ ॥

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥

अहो संकल्पसंपात्तिं हित्वा विषयवासनाम् ।
योगस्थित्यानयाऽनेकैः सुखया मोक्ष ईक्षितः ॥ ३८७ ॥

---

मग मोकलिलें जेथ जाईल । तेथूनि नियमूचि घेऊनि येईल । ऐसेनि स्थैर्यचि होईल । सावियाचि कीं ॥ ३८२ ॥ पाठीं केतुलेनि एके वेळे । तया स्थैर्याचेनि मेळें । आत्मस्वरूपाजवळें । येईल सहजें ॥ ३८३ ॥ तयातें देखोनि आंगा घडेल । तेथ अद्वैतीं द्वैत बुडेल । आणि ऐक्यतेजें उघडेल । त्रैलोक्य हें ॥ ३८४ ॥ आकाशीं दिसे दुसरें । तें अभ्र जैं विरे । तैं गगनचि कां भरे । विश्व जैसें ॥ ३८५॥ तैसें चित्त लया जाये । आणि चैतन्यचि आघवें होये । ऐसी प्राप्ति सुखोपायें । आहे येणें॥३८६॥ या सोपिया योगस्थिति । उकलु देखिला गा बहुतीं। संकल्पाचिया संपत्ती रुसोनियां ॥ ३८७ ॥

मनः सुखस्य सङ्गेन ब्रह्म संपद्यते यदा ।
तदा न विजहात्येतल्लवणं सलिलं यथा ॥ ३८८ ॥
तस्मिंश्च संगमे पार्थ सामरस्याख्यमन्दिरे ।
महासुखस्य समृद्धिं भुङ्क्ते च जगता सह ॥ ३८९ ॥
पद्भ्यामात्मन एवैवं स्वपृष्ठे चल्यतेऽर्जुन ।
अथायं न सुसाध्यस्ते मार्गमन्यं तदा शृणु ॥ ३९० ॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥३०॥

सर्वदेहे स्थितोऽस्मीति नात्र कापि विचारणा ।
तथैव सकलं विश्वं स्थितं मयि धनञ्जय ॥ ३९१ ॥
विश्वं चेश्वरतत्त्वं च मिश्रणेन परस्परम् ।
घटितं साधकस्यास्तु बुद्धिग्राह्यमिदं पुनः ॥ ३९२ ॥
एकभावादभिन्नं मां सर्वभूतेषु योऽर्जुन ।
व्यापकत्वेन विज्ञाय भजते समदर्शनः ॥ ३९३ ॥

---

तें सुखाचेनि सांगातें । आलें परब्रह्म आंतौतें । तेथ लवण जैसें जळातें । सांडूं नेणे ॥ ३८८ ॥ तैसें होय तिये मेळीं । मग सामरस्याचिया राउळीं । महासुखाची दिवाळी । जगेंसि दिसे ॥ ३८९ ॥ ऐसें आपले पायवरी । चालिजे आपुले पाठीवरी । हें पार्था नागवे तरी । आन ऐकें ॥ ३९० ॥ तरि मी तंव सकळ देहीं । असें एथ विचारु नाहीं। आणि तैसेंचि माझ्या ठायीं । सकळ असे ॥ ३९१ ॥ हें ऐसेंचि संचलें । परस्परें मिसळलें । बुद्धी घेपे एतुलें । होआवें गा ॥ ३९२ ॥ एऱ्हवीं तरी अर्जुना । जो एकवटलिया भावना । सर्वभूतीं अभिन्ना । मातें भजे ॥ ३९३ ॥

भूतानां योऽप्यनेकत्वाद् हृदा भेदं न पश्यति ।
एकत्वमेव सर्वत्र जानाति मम केवलम् ॥ ३९४ ॥
सोऽथ याति मयैकत्वमिति भाषा वृथार्जुन ।
अनुक्तेऽपि मयैवं हि सोऽहमेवेत्यसंशयम् ॥ ३९५ ॥
एकभावो यादृशोऽस्ति यथा दीपप्रकाशयोः ।
तादृक् तस्य मयैकत्वं मम तेन च फाल्गुन ॥ ३९६ ॥
उदके रसवत्त्वं स्यादाकाशे सावकाशता ।
मम रूपे तथा पुंसस्तस्य साकारतार्जुन ॥ ३९७ ॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोपि स योगी मयि वर्तते ॥३१॥

मामेवैकात्मतादृष्ट्या सर्वभूतेषु पश्यति ।
किरीटिन् पुरुषस्तन्तुं केवलं यः पटेष्विव ॥ ३९८ ॥
बहुरूपा अलंकाराः कामं स्वर्णं तु नो तथा ।
एवमैक्याचलो येन स्थिरतामुपपादितः ॥ ३९९ ॥

---

भूतांचेनि अनेकपणें । अनेक नोहे अंतःकरणें । केवळ एकत्वाचि माझें जाणें । सर्वत्र जो ॥ ३९४ ॥ मग तो एक हा मियां । बोलतां दिसतसे वायां । एऱ्हवीं न बोलिजे तरि धनंजया । तो मीचि आहे ॥ ३९५ ॥ दीपा आणि प्रकाशा । एकवंकीचा पाडु जैसा । तो माझ्या ठायीं तैसा । मी तयामाजीं ॥ ३९६ ॥ जैसा उदकाचेनि आयुष्यें रसु । कां गगनाचेनि मानें अवकाशु । तैसा माझेनि रूपें रूपसु । पुरुषु तो गा ॥ ३९७ ॥ जेणें ऐक्याचिये दिठी । सर्वत्र मातेंचि किरीटी । देखिला जैसा पटीं । तंतु एकु ॥ ३९८ ॥ कां स्वरूपें तरी बहुतें आहाती । परी तैसीं सोनीं बहुवें न होती । ऐसी ऐक्याचळाची स्थिती । केली जेणें ॥ ३९९ ॥

यावन्ति पर्णानि तरोः प्ररोहा—
स्तावन्त आदौ न हि रोपिता भोः ।
अद्वैतभानावुदिते निरस्ता
यस्यैवमज्ञाननिशा नरस्य ॥ ४०० ॥
पञ्चभूतात्मके देहे स समापतितोऽपि सन् ।
कथं तत्र निरुद्धः स्यात् प्रतीत्या हि मया समः ॥ ४०१ ॥
स्वानुभूत्यैव तेनाप्तं व्यापकत्वं ममाखिलम् ।
स्वभावाद् व्यापको जातस्तथा यद्यपि नोच्यते ॥४०२ ॥
कामं देहभृतस्तस्य नैव देहाभिमानिता ।
ईदृशीयं स्थितिर्वाचा पार्यते गदितुं नु किम् ॥ ४०३ ॥

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥३२॥

अतः पल्लवितेनालं विषयेऽत्र धनञ्जय ।
आत्मोपमं सदा विश्वं यः पश्यति चराचरम् ॥४०४ ॥
अहो यः सुखदुःखेषु पापपुण्येषु कर्मसु ।
मनोधर्मेण भिन्नत्वं न जानाति मनागपि ॥४०५॥

---

ना तरी वृक्षांचीं पानें जेतुलीं । तेतुलीं रोपें नाहीं लाविलीं । ऐसी अद्वैतादिवसें पाहाली । रात्री जया ॥ ४०० ॥ तो पंचात्मकीं सांपडे । तरी मग सांग पां कैसेनि अडे । जो प्रतीतीचेनि पाडें । मजसीं तुके ॥ ४०१ ॥ माझें व्यापकपण आघवें । गवसलें तयाचेनि अनुभवें । तरी न म्हणतां स्वभावें । व्यापकु जाहला ॥ ४०२ ॥ आतां शरीरीं तरी आहे । परी शरीराचा तो नोहे । ऐसें बोलवरी होये । तें करूं काई ॥ ४०३ ॥ म्हणोनि असो तें विशेखें । आपणपेंयासारिखें । तो चराचर देखे । अखंडित ॥४०४॥ सुखदुःखादि वर्मे । कां शुभाशुभें कर्में । दोनी ऐसीं मनोधर्में । नेणेचि जो ॥ ४०५ ॥

यः समविषमान् भावान् विचित्रमन्यच्च वस्तुमात्रं यत् ।
तत्सर्वं मनुते किल निजदेहावयवसंकाशम् ॥४०६॥
एकैकश इदं किं नु कथनीनं धनञ्जय ।
यस्य त्रैलोक्यमायातं स्वभावाद्वात्मरूपताम् ॥४०७॥
तस्यापि किल देहोऽस्ति स चोक्तः सुखदुःखभाक् ।
अस्माकं प्रत्ययस्त्वेष परब्रह्म स्वयं ह्यसौ ॥ ४०८ ॥
अत आत्मनि विश्वत्वं द्रष्टव्यं भाव्यमेव च ।
स्वयं विश्वेन भोः पार्थ संसेव्यं साम्यमीदृशम् ॥४०९॥
इदमेव वयं तुभ्यमसकृत्कथयामहे ।
यत्साम्यापेक्षया लोके प्राप्तव्यं नास्ति किंचन ॥४१०॥

अर्जुन उवाच—

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥३३॥
चञ्चलं हि मनः कृष्ण प्रमाथि बलवद् दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥३४॥

तदार्जुनोऽब्रवीद्देव सदयं शास्सि नः खलु ।
मनसस्तु स्वभावोऽस्ति बलवांस्तत्र के वयम् ॥४११॥

---

हे समविषय भाव । आणिकही विचित्र जें सर्व । तें मानी जैसे अवयव । आपुले होती ॥ ४०६ ॥ हें एकैक काय सांगावें । जया त्रैलोक्यचि आघवें । मी ऐसें स्वभावें । बोधा आलें ॥ ४०७ ॥ तयाही देह एकु कीर आथी । लौकिकीं सुखादुःखी तयातें म्हणती । परी आम्हांतें ऐसी प्रतीती । परब्रह्मचि हा ॥ ४०८ ॥ म्हणोनि आपणपां विश्व देखिजे । आणि आपण विश्व होइजे । ऐसें साम्यचि एक उपासिजे । पांडवा गा ॥ ४०९ ॥ हें तूतें बहुतीं प्रसंगीं । आम्ही म्हणों याचिलागीं । जें साम्यापरौती जगीं । प्राप्ति नाहीं ॥ ४१० ॥ तंव अर्जुन म्हणे देवा । तुम्ही सांगा कीर आमुचिया कणवा । परि न पुरों जी स्वभावा । मनाचिया ॥ ४११ ॥

किंस्वरूपं कियन्मात्रं मन एतन्न गम्यते ।
व्यवहाराय पर्याप्तं नास्य त्रैलोक्यमप्यहो ॥ ४१२ ॥

कथमेवं भवेन्नाम यत्समाधिं कपिर्भजेत् ।
विरमेति समादिष्टा वात्यापि विरमेन्नु किम् ॥ ४१३ ॥

यत्कदर्थयते बुद्धिं निश्चयं विधुनोति यत् ।
हस्तं धैर्यस्य निर्धूय यद्वेगादपसर्पति ॥ ४१४ ॥

विवेके भ्रान्तिमाधत्ते संतोषे वासनामलम् ।
यत्पुमांसं सुखासीनं दश भ्रमयते दिशः ॥ ४१५ ॥

यदुच्छलति संरुद्धं सहायो यस्य संयमः ।
तन्मनः प्रकृतिं स्वीयां कथं नाम परित्यजेत् ॥ ४१६ ॥

नात एव घटेतेदं प्रायेण यदिदं मनः
ऊरीकुर्यान्निश्चलत्वं साम्यावस्था च नो भवेत् ॥ ४१७ ॥

श्रीभगवानुवाच—

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३५ ॥

---

हें मन कैसें केवढें । ऐसें पाहों म्हणों तरी न सांपडे । एऱ्हवीं राहाटावया थोडें । त्रैलोक्य यया ॥ ४१२ ॥ म्हणोनि ऐसें कैसें घडेल । जें मर्कट समाधी येईल । कां राहा म्हणतलिया राहेल । महावातु ॥ ४१३ ॥ जें बुद्धीतें सळी । निश्चयातें टाळी । धैर्येंसीं हातफळी । मिळऊनि जाय ४१४ ॥ जें विवेकातें भुलवी । संतोषासी चाड लावी । बैसिजे तरी हिंडवी । दाही दिशा ॥ १५ ॥ जें निरोधलें घे उवावो । जया संयमुचि होय सावावो । तें मन आपुला स्वभावो । सांडील काई ॥ ४१६ ॥ म्हणोनि मन एक निश्चळ राहेल । मग आम्हांसि साम्य येईल । हें विशेषेंही न घडेल । याचिलागीं ॥ ४१७ ॥

कृष्णोऽब्रवीत्तदा पार्थ यत्त्वमात्थ तथैव तत् ।
मनसोऽस्य स्वभावोऽयं यदिदं चञ्चलं किल ॥ ६१८ ॥
वैराग्याधारमापाद्य यदभ्यासपथे त्विदम् ।
स्थापितं चेत्प्रयत्नेन कालेन स्थिरतामियात् ॥ ४१९ ॥
इदं लोलुपतामेति सकृदास्वादिते रसे ।
अत आत्मसुखास्वादं कौतुकादनुभाव्यताम् ॥ ४२० ॥

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥

ये प्रायो न विरक्ता यैरभ्यासे निवेशितो नात्मा ।
ते न विदन्ति नियन्तुं मन इत्यभ्युपगतं किलास्माभिः॥४२१
यमनियमपथश्चेत्सेव्यते नैव जातु
स्मृतिमपि न कदाचिद्याति वैराग्यलेशः ।
यदि विषयपयोधौ स्थीयते नाम मग्नैः
कथमिव मन एतन्निश्चलत्वं भजेन्नः ॥ ४२२ ॥
न चा जन्मन एवेदं निगृहीतं कदाचन ।
मनो युक्त्या यदि तदा निश्चलं जायतां कथम् ॥ ४२३ ॥

---

तंव कृष्ण म्हणती साचाचि । बोलत आहासि तें तैसेंचि । यया मनाचा कीर चपळचि । स्वभावो गा ॥ ४१८ ॥ परि वैराग्याचेनि आधारें । जरि लाविलें अभ्यासाचिये मोहरें । तरि केतुलेनि एकें अवसरें । स्थिरावेल ॥ ४१९ ॥ कां जें यया मनाचें एक निकें । जें देखिले गोडीचिया ठाया सोके । म्हणोनि अनुभवसुखाचि कवतिकें । दावीत जाइजे ॥ ४२० ॥ एऱ्हवीं ।विरक्ति जयांसि नाहीं । जे अभ्यासीं न रिघती कहीं । तयां ना कळे हें आम्हींही । न मनूं कायी ॥ ४२१ ॥ परि यमनियमांचिया वाटा न वचिजे । कहीं वैराग्याची से न करिजे । केवळ विषयजळीं ठाकिजे । बुडी देउनी ॥ ४२२ ॥ यया जालिया मानसा कहीं । युक्तीची कांबी लागली नाहीं । तरी निश्चळ होईल काई । कैसेनि सांगें ॥४२३ ॥

तस्मात्तमारभस्वादावुपायं येन निग्रहः ।
मनसः स्यात्ततः सिद्धिं कथं पश्येम नैष्यति ॥ ४२४ ॥
किं योगसाधनं यावदलीकं सर्वमेव तत् ।
इदमेव क्षमं वक्तुं यन्मेऽभ्यासः सुदुर्घटः ॥ ४२५ ॥
अङ्गे चेद्योगसामर्थ्यं चलत्वं चेतसः कियत् ।
भविष्यति वशे तेन महदाद्यखिलं न किम् ॥ ४२६ ॥
तदार्जुनोऽब्रवीद्देव यद्ब्रूषे युक्तमेव तत् ।
नूनं योगबलस्याग्रे कियन्नाम मनोबलम् ॥ ४२७ ॥
सोऽयं योगः कथं साध्य इति वार्तापि नास्ति नः ।
इयतो दिवसांस्तस्माद्दुर्वारं मन्महे मनः ॥ ४२८ ॥
जन्मन्यस्मिन्निखिले तवैव पुरुषोत्तम प्रसादेन ।
अद्यैव परिचितोऽयं योगोऽस्माभिर्दयानिधे प्रथमम् ॥४२९॥

अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥३७॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥

---

म्हणोनि मनाचा निग्रहो होये । ऐसा उपाय जो आहे । तो आरंभीं मग नोहे । कैसा पाहों ॥ ४२४ ॥ तरी योग साधन जितुकें । तें अवघेंचि काय लटिकें । परि आपणपयां अभ्यासू न ठाके । हेंचि म्हण ॥ ४२५ ॥ आंगीं योगाचें होय बळ । तरि मन केतुलें चपळ । काय महदादि हें सकळ आपु नोहे ॥ ४२६ ॥ तेथ अर्जुन म्हणे निकें । देवो बोलती तें न चुके । याचचि योगबळेंसीं न तुके । मनोबळ ॥ ४२७ ॥ तरि तोचि योगु कैसा केवि जाणों । आम्ही येतुले दिवस याची मातुही नेणों । म्हणोनि मनातें जी म्हणों । अनावर ॥ ४२८ ॥ हा आतां आघवेया जन्मा । तुझेनि प्रसादें पुरुषोत्तमा । योगपरिचयो आम्हां । जाहला आजी ॥ ४२९ ॥

एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य च्छेता न ह्युपपद्यते ॥ ३९ ॥

सहसा मे समुत्पन्नः संशयोऽन्यः परं प्रभो ।
त्वदन्यस्त्वपनेतुं तं समर्थो नास्ति कश्चन ॥४३०॥
यदि कश्चित्पुमान्मोक्षपदं प्राप्तुं समुद्यतः ।
उपायान्वर्जयित्वान्यान् केवलं श्रद्धयान्वितः ॥४३१॥
विनिर्गत्येन्द्रियग्रामादात्मसिद्ध्यभिधां पुरीम् ।
यियासुः संप्रतिष्ठेत रथ्ययास्थाभिधानया ॥४३२॥
एतस्मिंश्चायुराख्योऽस्य भानुरस्तमियाद्यदि ।
आत्मसिद्धिर्न लभ्येत शक्येत न निवर्तितुम् ॥४३३॥
अकाले विरला मेघा यथाकाशे समुन्नताः ।
चिरं तत्र न तिष्ठन्ति नापि वर्षन्ति वा जलम् ॥ ४३४ ॥
एवमेवोभयं यस्य दूरतः समवस्थितम् ।
मोक्षप्राप्तेर्न वार्तापि संसारो नष्ट एव च ॥४३५॥
इतो भ्रष्टस्ततो भ्रष्टः श्रद्धया योऽतिसंहितः ।
गतिर्भवेत्तस्य का वा तन्मे गोविन्द कथ्यताम् ॥४३६॥

---

परि आणिक एक गोसांविया । मज संशयो असे साविया । तो तूंवांचूनि फेडावया । समर्थु नाहीं ॥ ४३० ॥ म्हणोनि सांगें श्रीगोविंदा । कवण एकु मोक्षपदा । शोभत होता श्रद्धा । उपायेंविण ॥ ४३१ ॥ इंद्रियग्रामोनि निगाला । आस्थेचिया वाटा लागला । आत्मसिद्धीचिया पुढिला । नगरा यावया ॥ ४३२ ॥ तंव आत्मसिद्धि न ठकेचि । आणि मागुतें न येववेचि । ऐसा अस्तु गेला माझारींचि । आयुष्यभानु ॥ ४३३ ॥ जैसें अकाळीं आभाळ । अळुमाळु सपातळ । विपायें आलें केवळ । वसे ना वर्षे ॥ ४३४ ॥ तैसीं दोन्ही दुरावलीं । जे प्राप्ती तंव अलग ठेली । आणि अप्राप्तिही सांडवली । श्रद्धा तया ॥ ४३५ ॥ ऐसा दोंला अंतराळां जी । जो श्रद्धेच्याचि समाजीं । बुडाला तया हो जी । कवण गति ॥ ४३६ ॥

श्रीभगवानुवाच—
पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥

तदा कृष्णोऽब्रवीत्पार्थ यो मोक्षसुखमीहते।
तस्य मोक्षाद्विना कान्या गतिर्भवितुमर्हति ॥ ४३७ ॥
इयदेवात्र घटते यद्योग्यो विश्रमोऽन्तरा ।
सुखायायं तथा त्वस्य देवानामपि नो यथा ॥ ४३८ ॥
द्रुतान्यभ्यासरूपाणि पदानि यदि स क्षिपन् ।
गच्छेदस्तमनात्पूर्वं सोऽहंसिद्धिमवाप्नुयात् ॥ ४३९ ॥
वेगस्तावांस्तु नेत्यस्य विश्रमो युक्त एव हि ।
विश्रमानन्तरं मोक्षस्तस्यावश्यमवस्थितः ॥ ४४० ॥

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजयाते

पश्येदं कौतुकं कीदृग् दुर्लभा ये शतक्रतोः ।
लोकाः कैवल्यकामस्य तस्य ते सुलभा अमी ॥ ४४१ ॥
साङ्गं तत्रोपभुञ्जानस्तांस्तान्भोगानलौकिकान् ।
अमोघानपि निर्वेदं मनसोऽसौ समश्नुते ॥ ४४२ ॥

---

तंव कृष्ण म्हणती पार्था । जया मोक्षसुखीं आस्था । तया मोक्षावांचूनि अन्यथा । गति आहे गा ॥४३७ ॥ परि एतुलें हेंचि एक घडे । जें माझारीं विसावावें पडे । तेंही परि ऐसोनि सुरवाडें । जो देवां नाहीं ॥४३८ ॥ एऱ्हवीं अभ्यासाचा उचलता । पाउलीं जरी चालता । तरि दिवसाआधीं ठाकता । सोहंसिद्धीतें ॥ ४३९ ॥ परि तेतुला वेग नव्हेचि । म्हणऊनि विसावा तरी निकाचि । पाठीं मोक्षु तंव तैसाचि । ठेविला असे ॥ ४४० ॥ ऐकें कवतिक हें कैसें । जे शतमखा लोक सायासें । ते तो पावे अनायासें कैवल्यकामु ॥ ४४१ ॥ मग तेथींचें जे अमोघ । अलौकिक भोग । भोगितांही सांग । कंटाळे मन ॥ ४४२ ॥

दिव्यान्भोगान्निर्विशन्सोऽनुतापा-
न्नित्यं ब्रूते नाम निर्विण्णचेताः ।
भो भोः कस्मादेष देव त्वया मे
मार्गे क्षिप्तो भोगरूपोऽन्तरायः ॥ ४४३ ॥

ततो जीवलोके नरो जायतेऽसौ
परं जन्म गृह्णाति तस्मिन्कुले यत् ।
निवासस्थलं नाम धर्मस्य साक्षाद्
रतिं विन्दते यत्र सद्वैभवश्रीः ॥ ४४४ ॥

कुलं यत्सदा वर्तते नीतिमार्गे
सदा सत्यपूतोद्यते यत्र वाणी ।
तथा दृश्यते शास्त्रदृष्ट्यैव यत्र
क्षमं यद्भवेत्किंचन द्रष्टुमेव ॥ ४४५ ॥

यत्र योगेश्वरो वेदो व्यवसाय इवादृतः ।
निजाचारो यत्र मन्त्री सारासारविचारणा ॥ ४४६ ॥

चिन्ताया विषयो नान्य ईश्वराद्यत्र वर्तते ।
साक्षाद् ऋद्ध्यादयो यत्र भवन्ति गृहदेवताः ॥ ४४७ ॥
एवं सुकृतसंपत्त्या सुखं वृद्धिमुपागतम् ।
यत्र तस्मिन् कुले योगभ्रष्टः स लभते जनिम् ॥ ४४८ ॥

---

हा अंतरायो अवचितां । कां वोढवला श्रीभगवंता । ऐसा दिविभोग भोगितां । अनुतापी नित्य ॥ ४४३ ॥ पाठीं जन्मे संसारीं । परी सकळ धर्मांचिया माहेरीं । लांवा उगवे आगरीं विभवाश्रियेचा ॥ ४४४ ॥ जयातें नीतिपंथें चालिजे । सत्यपूत बोलिजे । देखावें तें देखिजे । शास्त्रदृष्टी ॥ ४४५ ॥ वेद तो जागेश्वरु । जया व्यवसाय निजाचारु । सारासार-विचारु । मंत्री जया ॥ ४४६ ॥ जयाच्या कुळीं चिंता । जाली ईश्वराची पतिव्रता । जयातें गृहदेवता । आदि ऋद्धि ॥ ४४७ ॥ ऐसी निजपुण्याची जोडी । वाढिन्नली सर्वसुखाची कुळवाडी । तिये जन्में तो सुखाडी । योगच्युतु ॥ ४४८ ॥

अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ४३ ॥

जुह्वति ज्ञानवह्निं ये ये परब्रह्मकोविदाः ।
वास्तव्या महासुखक्षेत्रे सन्ति येऽनादिकालतः ॥४४९॥
सिंहासने सुखासीना महासिद्धान्तसंज्ञके ।
लोकत्रयस्य साम्राज्यं ये सदैवोपभुञ्जते ।
संतोषकानने ये वा कूजन्तः कोकिलाः किल ॥ ४५० ॥
विवेकद्रुममूले ये संनिषण्णाः सदाफले ।
कुलेऽसौ योगिनां तेषां पुमाञ्जन्म प्रपद्यते ॥ ४५१ ॥
उन्मीलति तनुस्तन्वी तस्यात्मज्ञानभान्विता ।
आविर्भवति भा भानोः पूर्वमेवोदयान्न किम् ॥ ४५२ ॥
वधूः सर्वज्ञता नाम तं वृणीते स्वयं वरम् ।
अप्राप्ता यौवनावस्थां बाल्य एव सती शुभा ॥ ४५३ ॥
तया सिद्धप्रज्ञयैव प्रसूते तन्मनः स्वयम् ।
वाङ्मयं सर्वशास्त्राणां तन्मुखाच्च तथोद्गमः ॥ ४५४ ॥

---

अथवा ज्ञानाग्निहोत्री । जे परब्रह्मश्रोत्री । महासुखक्षेत्रीं । आदिवंत ॥४४९॥ जे सिद्धांताचिया सिंहासनीं । राज्य करिती त्रिभुवनीं । जे कूजती कोकिल वनीं संतोषाच्या ॥ ४५० ॥ जे विवेकद्रुमाचे मुळीं । बैसले आहाति नित्यफळीं । तयां योगियाचिया कुळीं । जन्म पावे ॥ ४५१ ॥ मोटकी देहाकृति उमटे । आणि निजज्ञानाची पहांट फुटे । सूर्यापुढें प्रगटे । प्रकाशु जैसा ॥ ४५२ ॥ तैसी दशेची वाट न पाहतां । वयसेचिया गांवा न येतां । बाळपणींच सर्वज्ञता । वरी तयातें ॥ ४५३ ॥ तिये सिद्धप्रज्ञेचेनि लाभें । मनाचि सारस्वतें दुभे । मग सकळ शास्त्रें स्वयंभें । निघती मुखें ॥ ४५४ ॥

एवंविधमिदं जन्म यद्देवैरपि काम्यते ।
दिवि स्थितैर्जपहोमादिका चाचर्यते क्रिया ॥ ४५५ ॥
अमरैश्चारणीभूतैः प्राप्त्यै यस्योपगीयते ।
मृत्युलोको जन्म पार्थ तदाप्नोति स पूरुषः ॥ ४५६ ॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥

पूर्वजन्मनि सद्बुद्धिर्जीवितान्ते बभूव या ।
पुनर्निरवधिः सैव नवा तमुपतिष्ठति ॥ ४५७ ॥
पूर्वप्रसूतपादो यः पुमान् भवति भाग्यवान् ।
चक्षुषोरञ्जनं दिव्यं लब्ध्वा नाम स पश्यति ।
लीलयैव निधिं यद्वत्पातालोदरसंस्थितम् ॥ ४५८ ॥
तथास्य गुरुगम्यानि बुद्धिः स्थानानि पश्यति ।
अभिप्रायांश्च दुर्भेदान् विनायासं धनञ्जय ॥ ४५९ ॥
मनसो वश्यतां यान्तीन्द्रियाणि बलवन्त्यपि ।
मन एकत्वमायाति तस्याथ प्राणवायुना ।
वायुश्चापि चिदाकाशं सलीलमुपगच्छति ॥ ४६० ॥

---

ऐसें जें जन्म । जयालागीं देव सकाम । स्वर्गी ठेले जपहोम । करिती सदा ॥ ४५५ ॥ अमरीं भाट होइजे । मग मृत्युलोकातें वानिजे । ऐसें जन्म पार्था गा जें । तें तो पावे ॥ ४५६ ॥ आणि मागील जे सद्बुद्धि । जेथ जीवित्वा जाहाली होती अवधि । मग तेचि पुढती निरवधि । नवी लाहे ॥ ४५७ ॥ तेथ सदैवा आणि पायाळा । वरि दिव्यांजन होय डोळां । मग देखे जैसीं अवलीळा । पाताळधनें ॥ ४५८ ॥ तैसे दुर्भेद जे अभिप्राय । कां गुरुगम्य इन ठाय । तेथ सौरसेंवीण जाय । बुद्धि तयाची ॥ ४५९ ॥ बळियें इंद्रियें येती मना । मन एकवटे पवना । पवन सहजें गगना । मिळोंचि लागे ॥ ४६० ॥

इदमजानतस्तस्याभ्यासेन घटतेऽखिलम् ।
मनोगृहपथं पृच्छन् समाधिस्तमुपैति नु ॥ ४६१ ॥
भैरवो योगपीठस्य ब्रह्मस्तम्भस्य वैभवम् ।
किं वैराग्यधियो मूर्तोऽनुभवोऽयं पुमान् स्वयम् ॥४६२॥
सर्वसंसारभावानां मापनोऽय स्वयं नु किम् ।
द्वीपो न्वष्टाङ्गसामग्र्या गन्धश्चन्दनरूपधृत् ॥ ४६३ ॥
किं नु संतोषघटितः कृष्टः किं सिद्धिमन्दिरात् ।
विरूढत्वाद् दृश्यतेऽसौ साधकत्वेऽपि सिद्धवत् ॥४६४॥

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥

जन्मान्तरसहस्राणां वर्षकोटिशतेषु सः ।
अन्तरायानतीत्यागादात्मसिद्धितटं यतः ॥ ४६५ ॥
साधनान्यखिलान्येव तस्य यान्त्यनुकूलताम् ।
भुङ्क्ते विवेकसाम्राज्यं विनायासमसौ ततः ॥ ४६६ ॥

---

ऐसें नेणो काय अपैसें । तयातेंचि कीजे अभ्यासें । समाधि घर पुसे । मानसाचें ॥ ४६१ ॥ जाणिजे योगपीठींचा भैरवु । काय हा आरंभरंभेचा गौरवु । कीं वैराग्यसिद्धीचा अनुभवु । रूपा आला ॥ ४६२ ॥ हा संसार उमाणितें माप । कां अष्टांगसामग्रीचें द्वीप । जैसें परिमळेंचि धरिजे रूप चंदनाचें ॥ ४६३ ॥ तैसा संतोषाचा काय घडिला । कीं सिद्धिभांडारींहुनि काढिला । दिसे तेणें मानें रूढला । साधकदशे ॥ ४६४ ॥ जे वर्षशतांचिया कोडी । जन्मसहस्रांचिया आडी । लंघितां पातला थडी । आत्मसिद्धीची ॥ ४६५ ॥ म्हणोनि साधनजात आघवें । अनुसरे तया स्वभावें । मग आयतिये बैसे राणिवे । विवेकाचिये ॥ ४६६ ॥

विवेकोऽपि ततो याति विचारे कुण्ठवेगताम् ।
स चाविचारणीयेन ब्रह्मणैत्येकरूपताम् ॥ ४६७ ॥
मनोरूपं लियतेऽभ्रं वायोर्नश्यति वायुता ।
चिदाकाशं तथैवात्र लीयते चात्मनात्मनि ॥ ४६८ ॥
मज्जति प्रणवस्यापि मूर्धा यत्रेदृशं सुखम् ।
अनिर्वाच्यं स लभते यतो वाग् विनिवर्तते ॥ ४६९ ॥
स्थितिर्ब्राह्मीदृशी प्रोक्ता गतीनां परमा गतिः ।
अमूर्ताया अयं तस्या मूर्तिः संपद्यते स्वयम् ॥ ४७० ॥
विघ्नवारिमलस्तेन निरस्तः पूर्वजन्मसु ।
अतोऽस्य लग्नघटिका सद्य एव निमज्जति ॥ ४७१ ॥
ब्रह्मरूपतया लग्नः स तयैत्येकरूपताम् ।
लीनमभ्रं यथाकाशरूपतां प्रतिपद्यते ॥ ४७२ ॥
विश्वमुत्पद्यते यस्मात् यत्रैव च विपद्यते ।
स तत्संपद्यते ब्रह्म देहं विभ्राण एव हि ॥ ४७३ ॥

---

पाठीं विचारितया वेगां। तो विवेकुही ठाके मागां। मग अविचारणीय तें आंगा। घडोनि जाय ॥ ४६७ ॥ तेथ मनाचें मेहुडें विरे। पवनाचें पवनपण सरे। आपणपां आपण मुरे आकाशही ॥४६८॥ प्रणवाचा माथा बुडे। येतुलेनि अनिर्वाच्य सुख जोडे। म्हणोनि आधींचि बोल बहुडे। तयालागीं ॥ ४६९ ॥ ऐसी ब्रह्मींची स्थिती। जे सकळां गतींसी गती। तया अमूर्ताचि मूर्ति। होऊनि ठाके ॥ ४७० ॥ तेणें बहुतीं जन्मीं मोगिलीं। विक्षेपांचीं पाणिवळें झाडिलीं। म्हणोनि उपजतखेंवो बुडाली। लग्नघटिका ॥ ४७१ ॥ आणि तद्रूपतेसीं लग्न। लागोनि ठेलें अभिन्न। जैसें लोपलें अभ्रें गगन। होऊनि ठाके ॥ ४७२ ॥ तैसें विश्व जेथें होये। मागौतें जेथ लया जाये। तें विद्यमानेंचि देहें। जाहला तो गा ॥४७३॥

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥

आशया यस्य लाभस्य धैर्यबाहूवलम्बिनः ।
प्रवाहे कर्मषट्कस्य कर्मनिष्ठाः पतन्त्यहो ॥ ४७४ ॥
वस्तुनो वा कृते यस्य रमन्ते ज्ञानिनो रणे ।
बिभ्राणा ज्ञानकवचं प्रपञ्चेन युयुत्सवः ॥ ४७५ ॥
अभिलाषेण वा यस्य तपोनिष्ठाः कृतोद्यमाः ।
तपोदुर्गस्य कटकमारोढं सुदुरासदम् ॥ ४७६ ॥
भक्तानां भजनीयं यद् याज्यं याज्ञिकसंतते: ।
सर्वेषामपि यत्पूज्यमेवं भवति सर्वदा ॥ ४७७ ॥
असौ तदेव संजातो निर्वाणं स्वयमात्मना ।
सिद्धं तत्त्वं साधकानां परं साध्यमिदं यतः ॥४७८ ॥
वन्द्योऽसौ कर्मनिष्ठानां ज्ञानिनां वेद्य एव च ।
तापसानां तपोनाथ आद्योऽसौ समुदाहृतः ॥ ४७९ ॥
एवं जीवशिवैक्ये यो मनोधर्मेण संस्थितः ।
स शरीरधरोऽपीदं गौरवं प्रतिपद्यते ॥ ४८० ॥

---

जया लाभाचिया आशा । करूनि धैर्यबाहूंचा भरंवसा । घालीत षट्कर्मांचा घारसा । कर्मनिष्ठ ॥ ४७४ ॥ कां जिये एक वस्तूलागीं । बाणोनि ज्ञानाची वज्रांगी । झुंझत प्रपंचेंशीं समरंगीं । ज्ञानिये गा ॥ ४७५ ॥ अथवा निळागें निसरडा । तपोदुर्गाचा आडकडा । झोंबती तपिये चाडा । जयाचिया ॥ ४७६ ॥ जें भजतियां भज्य । याज्ञिकांचें याज्य । एवं जें पूज्य । सकळां सदा ॥ ४७७ ॥ तेंचि तो आपण । स्वयें जाहला निर्वाण । जें साधकांचें कारण । सिद्ध तत्त्व ॥ ४७८ ॥ म्हणोनि कर्मनिष्ठां वंद्यु । तो ज्ञानियांसि वेद्यु । तापसांचा आद्यु । तपोनाथु ॥ ४७९ ॥ पैं जीवपरमात्मसंगमा । जयाचें येणें जाहलें मनोधर्मा । तो शरीरीचि परी महिमा । ऐसी पावे ॥ ४८० ॥

अत एव च कौन्तेय योगी सर्वात्मना भव ।
इत्येवं वदता नित्यं मया त्वमनुशिष्यसे ॥ ४८१ ॥

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥

यं योगिनं लोक उदाहरन्ति
देवस्य देवं तमवेहि पार्थ ।
सुखस्य सर्वस्वमसौ ममास्ति
प्राणाश्च साक्षादथवेति मन्ये ॥ ४८२ ॥

भजको भजनं भज्यस्त्रिविधं भक्तिसाधनम् ।
तत्र पुंस्यहमेवेति प्रत्ययः स्यादखण्डितः ॥ ४८२ ॥

तस्यास्माकं च यत्प्रेम्णः सुभद्रानाथ विद्यते ।
स्वरूपं तदनिर्वाच्यं निश्चयेनावधारय ॥ ४८४ ॥

एकैव किल युक्ता नाविकत्वमुपयातयोः ।
प्रेम्णस्तुला यथा देहोऽहं स आत्मैव केवलम् ॥ ४८५ ॥

एवं भक्तचकोरेन्दुस्त्रैलोक्यैकनराधिपः ।
कृष्णोऽब्रवीद्गुणाम्भोधी राजानं संजयोऽवदत् ॥ ४८६ ॥

---

म्हणोनि याकारणें । तूतें मी सदा म्हणें । योगी होईं अंतःकरणें । पांडुकुमरा ॥ ४८१ ॥ अगा योगी जो म्हणिजे । तो देवाचा देव जाणिजे । आणि सुखसर्वस्व माझें । चैतन्य तो ॥ ४८२ ॥ तेथ भजता भजावें । हें भक्तिसाधन जें आघवें । तो मीचि जाहलों अनुभवें । अखंडित ॥४८३॥ मग तया आम्हां प्रीतीचें । स्वस्वरूप बोलीं निर्वचे । ऐसें नव्हे गा साचें । सुभद्रापती ॥ ४८४ ॥ तया एकवटलिया प्रेमा । जरी पाडें पाहिजे उपमा । तरी मी देह तो आत्मा । हेचि होय ॥ ४८५ ॥ ऐसें भक्तचकोरचंद्रें । त्रिभुवनैकनरेंद्रें । बोलिलें गुणसमुद्रें । संजयो म्हणे ॥ ४८६ ॥

आदितः श्रवणे यास्था पार्थस्यासीत् प्रथीयसी ।
इदानीं द्विगुणीभूतां तां मेने यदुनायकः ॥ ४८७ ॥
दर्पणे पार्थ चित्ताख्ये वचः स्वं प्रतिबिम्बितम् ।
दृष्ट्वा हृष्टमनाः कृष्णो विस्तरेण वदिष्यति ॥ ४८८ ॥
अध्याये सप्तमे यत्र शान्तः प्रकटतां व्रजेत् ।
येन प्रमेयबीजानां ग्रन्थिरङ्कुरितो भवेत् ॥ ४८९ ॥
ततो वर्षेण सत्त्वस्य विलीनेषु समन्ततः ।
तापलोष्टेषु चतुरचित्तभूः स्यात् फलोन्मुखी ॥ ४९० ॥
तत्र स्वर्णोपमे लब्धेऽवधानोष्माणि पुष्कले ।
श्रीनिवृत्तेः समुत्साहो बीजावापे भविष्यति ॥ ४९१ ॥
गुरुणा कौतुकेनाहं कृत आवापकर्मणि ।
पात्रमत्र यतो हस्तो निहितो मस्तके मम ॥ ४९२ ॥
मन्मुखादत एतस्माद्विनिर्गच्छति यद्बहिः ।
तत्पदं कुरुते नूनं लीलयैव सतां हृदि ।
अस्त्विदं सांप्रतं वक्ष्ये कृष्णेनोक्तो यदर्जुनः ॥ ४९३ ॥

---

तेथ आदिलापासूनि पार्था । ऐकिजे ऐसीचि आस्था । दुणावली हें यदुनाथा । भावों सरलें ॥ ४८७ ॥ कीं सावियाचि मनीं संतोषला । जे बोला आरिसा जोडला । तेणें हरिखें आतां उपलवला । निरूपील ॥४८८॥ तो प्रसंगु आहे पुढां । जेथ शांत दिसेल उघडा । तो पालविजेल मुडा । प्रमेयबीजाचा ॥ ४८९ ॥ जें सात्त्विकाचेनि वडपें । गेलें आध्यात्मिक खरपें । सहजें निडारले वाफे । चतुरचित्ताचे ॥४९०॥ वरी अवधानाचा वाफसा । लाधला सोनयाऐसा । म्हणोनि पेरावया धिंवसा । श्रीनिवृत्तीसी ॥ ४९१ ॥ ज्ञानदेव म्हणे मी चाडें । सद्गुरूंनीं केलें कोडें । माथां हात ठेविला तें फुडें । बीजाचि वाइलें ॥ ४९२ ॥ म्हणऊनि येणें मुखें जें जें निगे । तें संतांच्या हृदयीं साचचि लागे । हें असो सांगों श्रीरंगें । बोलिलें जें ॥ ४९३ ॥

मनःश्रोत्रेण तच्छ्राव्यं द्रष्टव्यं बुद्धिचक्षुषा ।
चित्तं दत्त्वा समादेयं मत्तो विनिमयेन वै ॥ ४९४ ॥
अवधानकरेणेमे शब्दाः स्थाप्या हृदन्तरे ।
ततोऽमी पूरयिष्यन्ति सज्जनानां मनोरथान् ॥ ४९५ ॥
स्वहितं स्थिरयिष्यन्ति जीवयिष्यन्ति पूर्णताम् ।
जीवेभ्यो वितरिष्यन्ति सुखलक्षाण्यमी तथा ॥ ४९६ ॥
नागरी सविनोदा वाक् श्रीमुकुन्देन या कृता ।
अग्रे पार्थस्य सा वोवीच्छन्दसा गीयते मया ॥ ४९७ ॥

---

परि तें मनाच्या कानीं ऐकावें । बोल बुद्धीच्या डोळां देखावे । हे सांटोवाटीं घ्यावे । चित्ताचिया ॥ ४९४ ॥ अवधानाचेनि हातें । नेयावे हृदयाआंतौते । हे रिझवितील आयणीतें । सज्जनाचिये ॥ ४९५ ॥ हे स्वहितातें निववितो । परिणामातें जीववितो । सुखाची वाढती । लाखोली जीवां ॥ ४९६ ॥ आतां अर्जुनेंसीं श्रीमुकुंदें । नागर बोलिजेल विनोदें । तें वोंवियेचेनि प्रबंधें । सांगेन मी ॥ ४९७ ॥

[ इति श्रीज्ञानेश्वर्याः संस्कृतानुवादे षष्ठोऽध्यायः ]

# प्रस्तुतग्रन्थगतानि कानिचिद्रम्याणि सुभाषितानि संसूच्यन्ते.

## Other works of general interest by the same author.

| | | Price. Rs. | As. |
|---|---|---|---|
| सूक्तिसुधातरङ्गिणी | Part I | 0 | 12 |
| सूक्तिसुधातरङ्गिणी | Part II | 1 | 0 |

The two volumes together contain 1200 choice quotations from well-known writers and thinkers of the world, rendered into excellent sanskrit verses.

| | | Rs. | As. |
|---|---|---|---|
| अभिनवरत्नमाला | Part I | 1 | 0 |
| अभिनवरत्नमाला | Part II | 1 | 4 |

Containing humorous passages, sweet songs, lyrics &c. written in an easy, elegant idiomatic sanskrit style.

| | Rs. | As. |
|---|---|---|
| मधुबिन्दु (मराठी) | 0 | 10 |
| पद्यात्मक गोष्टी | 0 | 6 |

*For copies*, apply to

Any leading book-seller in Bombay and Poona or to the author **M. P. Oka**. 470 Shanwar Peth, POONA CITY.

# School Books.

Sanctioned as texts in Secondary Schools by Education Department, Bombay.

| | | Price. | | |
|---|---|---|---|---|
| | | Rs. | As. | Ps. |
| 1 | प्रथमा सुबोधपाठावली | 0 | 2 | 0 |
| 2 | द्वितीया सुबोधपाठावली | 0 | 4 | 0 |
| 3 | तृतीया सुबोधपाठावली | 0 | 6 | 0 |
| 4 | चतुर्थी सुबोधपाठावली | 0 | 10 | 0 |
| 5 | रामायणकथासंदोहः ( अयोध्याकाण्डम् ) | 0 | 4 | 6 |
| 6 | सुलभसंस्कृतप्रवेशः ( प्रथमपुस्तकम् ) | 0 | 14 | 0 |
| 7 | ,, ,, ( द्वितीयपुस्तकम् ) | 0 | 10 | 0 |
| 8 | ,, ,, ( तृतीयपुस्तकम् ) | 1 | 0 | 0 |
| 9 | Exercises in Sanskrit Grammar and translation | 1 | 0 | 0 |

## Help to Students.

| | | Rs. | As. | Ps. |
|---|---|---|---|---|
| 1 | Author's own solutions of Exercises in Sanskrit &c. | 1 | 4 | 0 |
| 2 | Aorist in ten lessons | 0 | 5 | 0 |
| 3 | Desideratives | 0 | 3 | 0 |

*For copies*, apply to

Any leading book-seller in Bombay aud Poona or to the author **M. P. Oka**. 470 Shanwar Peth, POONA CITY.

---

